BIBLIOTHECA INDICA
A COLLECTION OF ORIENTAL WORKS

# विधान-पारिजातः

# THE VIDHĀNA-PĀRIJĀTA

VOL. III

( चतुर्थस्तबकः )

EDITED BY

PANDIT ISWAR CHANDRA SASTRI,

*Panchatirtha, Vidyābāridhi,*

Formerly Professor, Sanskrit College, Calcutta.

WORK NUMBER 273




ISSUE NUMBER 1561

THE ASIATIC SOCIETY
1, Park Street, Calcutta-16
1951

# विधान-पारिजातः

# THE VIDHĀNA-PĀRIJĀTA

VOL. III

( चतुर्थस्तबकः )

EDITED BY

PANDIT ISWAR CHANDRA SASTRI,

*Pañcatīrtha, Vidyāvāridhi,*

**Formerly Professor, Sanskrit College, Calcutta.**



**PUBLISHED BY THE ASIATIC SOCIETY**

**CALCUTTA-16**

**1951**

# विधान-पारिजातः।

## अथ चतुर्थस्तबकः।

### (१) अथ दानानुक्रमणिका[१](+)

विश्वस्य योनिं विश्वेशं विश्वस्याप्ययकारणम्।
विश्वरूपमनन्तं मे कुलदेवं नमाम्यहम् ॥१॥

सन्ति दानविधौ ग्रन्थाः प्रणीता बहवः पुरा।
कोऽप्यस्य महिमा वेद्गोऽभिज्ञैर्जयति सर्वथा ॥२॥

न पाण्डित्याभिमानेन नचवित्तस्य लिप्सया।
निबन्धो रच्यते किन्तु विदुषां परितुष्टये ॥३॥

यदत्र मम चापल्यं क्षम्यतां[२](॰)तद्विचक्षणैः।
गुणगृह्याः सदा सन्तोबालस्य पितराविव ॥४॥

ग्रन्थस्थानि विकीर्णानि नानादानानि कृत्स्नशः।
प्रोच्यन्तेऽत्र मया तानि[३](:)विष्णुप्रीतिमभीप्सता ॥५॥

ग्रन्थस्यास्यानुक्रमस्तु प्रोच्यते ज्ञानसिद्धये।
आदौ दानप्रशंसेह तत्स्वरूपनिरूपणम् ॥६॥

ततश्च दानदोषाणां गुणानाञ्च[४](॥)निरूपणम्।
दानाङ्गानान्तथा दातुरथ पात्रनिरूपणम् ॥७॥

---

'प्रकीर्णानि विधानानि प्रोच्यन्तेऽत्र चतुर्थके' इति परिभाषाप्रकरणे उक्तम्। दानविषयं छान्दोग्ये प्रोक्तम्—

"त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति"।

श्रुतिश्च "दानमेकं कलौ युगे"।

'क्षन्तव्य'मिति क्वचित् पाठः।

'सम्यगिति' क्वचित् पाठान्तरम्।

'तद्विदामा'मिति भिन्नः पाठः।

अपात्रोक्तिरथ श्राद्धोदेयद्रव्यनिरूपणम् ।
ग्राह्यद्रव्यं तथाऽग्राह्यमदेयञ्च निरूप्यते ॥८॥
दानदेशाश्च तत्काला निषिद्धा अपि तत्र ये ।
इतिकर्त्तव्यता दाने परिभाषा ततः परम् ॥९॥
तत्राधिकारी मन्त्रार्थज्ञानादिनियमा अपि ।
प्रतिमा द्रव्यमानञ्च कलशादेश्च लक्षणम् ॥१०॥
दर्भादिलक्षणञ्चान्यनियमानां निरूपणम् ।
अनुक्तौ दक्षिणादाननिर्णयः प्रोच्यते तथा ॥११॥
द्रव्यमानं धान्यमानं मानं खार्य्यादिकस्य च
भूमानमङ्गुलादीनां भेदाः सविनियोगकाः ॥१२॥
प्राच्या दिशः साधनन्तु प्रोच्यते वास्तुनिर्णयः ।
सतोरणपताकादेर्मण्डपस्याथ लक्षणम् ॥१३॥
कुण्डानां विनियोगोऽथ तन्निर्माणं सविस्तरम् ।
मेखलायोनिकुण्डादिलक्षणं योन्यवस्थितिः ॥१४॥
तुलापुरुषपूर्वाणि महादानानि षोडश१(०) ।
अथ पर्वतदानानि विन्ध्यादीनां२(+) क्रमेण हि ॥१५॥

---

१ (०) षोडशदानानि यथा,—
'आद्यन्तु सर्व्वदानानां तुलापुरुषसंज्ञितम् ।
हिरण्यगर्भदानञ्च ब्रह्माण्डं तदनन्तरम् ॥
कल्पपादपदानञ्च गोसहस्रञ्च पञ्चमम् ।
हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ॥
हिरण्याश्वरथस्तद्वद् हेमहस्तिरथस्तथा ।
पञ्चलाङ्गलकन्तद्वद्धरादानं ततः परम् ॥
द्वादशं विश्वचक्रञ्च ततः कल्पलतात्मकम् ।
सप्तसागरदानञ्च रत्नधेनुस्तथैव च ॥
महाभूतघटस्तद्वत् षोडशः परिकीर्त्तितः' । इति मत्स्यपुराणे ।
एतेषां दानानां फलमुक्तन्तत्रैव,—
षोडशैतानि यः कुर्य्यात् महादानानि मानवः ।
न तस्य पुनरावृत्तिरिह लोकेऽभिजायते ॥

२ (+) 'प्राच्यादीनामिति' क्वचित् पाठः ।

सुवर्णदानानि तथा तथानन्दनिधेर्विधिः ।
ततो भद्रनिधेर्दानं दानञ्च शतमानकम् ॥१६॥

हेमदानं रूप्यदानमश्वदानमतः परम् ।
तिलदानानि दानञ्च कांश्य(१)पात्रस्य कीर्त्यते ॥१७॥

तिलराशेस्ततो दानं तिलपद्मस्य वै पुनः ।
रुद्रैकादशदानञ्च दानञ्च तिलगर्भकम् ॥१८॥

गजदानं देवताभ्यो गजदानं द्विजाय च ।
दास्या दानं रथस्यापि शिविकाभूमिवेश्मनाम् ॥१६॥

मठप्रतिश्रयस्यापि दानमाश्रमकस्य च ।
कन्यादानञ्च कपिलादशभिर्दानसंयुतम् ॥२०॥

गोदानञ्च ततोहेमशृङ्गिणो दानमेव च ।
समानवत्सगोदानं दशवर्णगवान्ततः ॥२१॥

त्रिरात्रगोदानमथो गोदानन्दैवतेषु च ।
दानञ्चोभयतोमुख्या वैतरण्यास्ततः परम् ॥२२॥

ततो वृषभदानञ्च गुडधेन्वादयो दश ।
विद्यादानञ्च वेदानां साङ्गानामितरस्य च ॥२३॥

दानं त्रिपुरुषाणाञ्च ग्रहाणां दानमीर्य्यते ।
दशावतारदानञ्च द्वादशादित्यदानकम् ॥२४॥

चन्द्रादित्यप्रतिकृतेः कालाख्यपुरुषस्य च ।
आत्मप्रतिकृतेर्दानमुदकुम्भस्य चैवहि ॥२५॥

अन्तकप्रतिमायाश्च लोकपालाष्टकस्य च ।
मेष्यजामहिषीदानं दानं कृष्णाजिनस्य च ॥२६॥

गृष्टिकृष्णाजिनस्योक्ष्मार्द्रकृष्णाजिनस्य च ।
तिथिवारर्क्षयोगमासर्त्तुपक्षदानकम् ॥२७॥

दानं सम्वत्सरस्यापि प्रकीर्णानाञ्च दानकम् ।
जलाशयारामवापी कूपादीनां प्रतिष्ठितिः ।
उच्य(ते)न्ते स्तवकेऽत्र(२)त्र विदुषां प्रीतये मया ॥२८॥

---

(१) 'कांस्य' इत्यपिपाठः क्वचित् ।
(२) 'अत्र निबन्धेऽस्मिन्' इति क्वचित् पाठः ।

## इति दानानुक्रमणिका ३(*)।

अथ दानप्रशंसायां प्रथमविधानम् ।

तत्र प्रकीर्णकानि विधानानि कथ्यन्ते ।

तत्रादौ दानविधानानि । तत्र दानप्रशंसा४(*) ।

### 1. तैत्तिरीयश्रुतौ—

दानेन द्विषन्तो मित्रा भवन्ति
दानेन सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्तीति ।

### 2. वाजसनेयकेऽपि—५(†)

तदेतत् त्रयं शिक्षेद्दानं दमं दयामिति ।
दानेन भोगी भवति मेधावी वृद्धसेवया ।
अहिंसया च दीर्घायुरिति वेदविदो विदुः ॥

### 3. नन्दिपुराणेऽपि—६(*)

दानं परं प्रशंसन्ति दानमेव परायणम् ।
दानं बन्धुर्मनुष्याणां दानं कोशो ह्यनुत्तमः ॥
दानं कामफलो वृक्षो दानं चिन्तामणिर्नृणाम् ।
दानमेव परो ह्यर्थो दानं माता पिता तथा ॥
न दानेन विना किञ्चित् परमस्ति जगत्त्रये ।
दानेन प्राप्यते स्वर्गः श्रीर्दानेनैव लभ्यते ॥

---

३ (*) एकस्मिन् 'आसियाटिकसोसाइटी'आदर्शपुस्तके अन्यस्मिन् संस्कृतमहाविद्यामन्दिर पुस्तके च दानानुक्रमणिका वर्त्तते, तदनुरोधेनैवसङ्कलिता ।

४ (*) अत्र शतपथश्रुताविति पाठो हेमाद्रौ दृश्यते ।

५ (†) अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् ।
दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य वक्ष्यते ॥
दाता प्रतिग्रहीता च श्रद्धादेयञ्च धर्मयुक् ।
देशकालौ च दानानामङ्गान्येतानि षड् विदुः ।
'मनसा पात्रमुद्दिश्य भूमौ तोयं विनिक्षिपेत् ।
विद्यते सागरस्यान्तं दानस्यान्तं न विद्यते' ॥ इति धर्मशास्त्रे ।

याज्ञवल्क्यः—
दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ।
याचितेनापि दातव्यं श्रद्धापूतञ्च शक्तितः ॥

६ (*) हेमाद्रौ 'सौरपुराणे' इत्थं पाठोऽस्ति ।

दानेन शत्रून् जयति व्याधिर्दानेन नश्यति ।
दानेन प्राप्यते विद्या दानेन युवतीजनः ।
धर्म्मार्थकाममोक्षाणां दानन्तत् परमं स्मृतम् ॥

4. **यमः—**

यतीनान्तु शमो मेधस्त्वनाहारो वनौकसाम् ।
दानमेवगृहस्थानां शुश्रूषा ब्रह्मचारिणाम् ॥

5. **मात्स्येऽपि—**

न्यायेनार्ज्जनमर्थानां वर्द्धनं चाभिरक्षणम् ।
सत्पात्रे प्रतिपत्तिश्च धर्म्मशास्त्रेषु पठ्यते ॥
अप्यधर्म्मसमायुक्तं पतन्तं नरकेऽशुचौ ।
त्रायते दानमेकन्तु पात्रभूते द्विजेऽर्पितम् ॥
उक्तसर्वगुणोपेतमुक्तदोषैश्च वर्जितम् ।
कामधुग्धेनुवद्दानं फलत्यात्मेप्सितं फलम् ॥
इह कीर्त्तिं वदान्याख्यां स्फीतान् भोगांस्त्रिपिष्टपे ।
दानं श्रद्धां तृतीयेऽपि जन्मनि प्रसवोत्तमे ॥
दानमेव परो धर्म्मो दानमेव परन्तपः ।
नहि दानात्परतरमिह लोके परत्र च ॥
दानेन भोगानाप्नोति दानेनायुश्च विन्दति ।
नरः स्वर्गापवर्गौ च दानेनैव समश्नुते ॥
प्रसवोत्तमे कुलोत्तमे ।

6. **आग्नेयेऽपि—**

ग्रासादर्द्धमपि ग्रासमर्थिभ्यः किं न दीयते ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥
कुटुम्बं पीड़यित्वापि ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवेऽप्यन्नं आत्मनो भूतिमिच्छता ॥

7. **व्यासः—(†) ७**

किं धनेन करिष्यन्ति देहिनो भङ्गुराश्रयाः ।
यदर्थं धनमिच्छन्ति तच्छरीरमशाश्वतम् ।

† पद्मोत्तरे पाठ— 'दानादृते नोपचारो विद्यते धनिनोऽपरः ।
दोषमार्गं हि तत्तस्य भूय एवाभिवर्द्धते' ॥

## (२) दानविधानम् ।

यदि नाम न धर्म्माय न कामाय न कीर्त्तये ।
यं परित्यज्य गन्तव्यं तद्धनं किं न दीयते ॥
अदाता पुरुषस्त्यागी धनं सन्त्यज्य गच्छति ।
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ॥

### 8. मनुः—

दानधर्म्मं निषेवेत नित्यमैष्टिकपौर्त्तिकम्[८](*) ।
परितुष्टेन भावेन याचमानाय शक्तितः ॥
स्वर्गायुर्भूतिकामेन तथा पापापनुत्तये ।
मुमुक्षुणा च दातव्यं ब्राह्मणेभ्यस्तथान्वहम् ॥

### 9. देवलः—

दुर्लभं भारते वर्षे जन्म तस्मिन् मनुष्यता[९](०) ।
मानुष्ये ब्राह्मणत्वञ्च दुर्लभं सुतरां मतम् ॥
विप्रत्वे सति दुष्प्रापा विद्यादिगुणयोगिता ।
तत्र न्यायार्ज्जितार्थाप्तिस्तत्र भक्ति गरीयसी ॥
लब्ध्वैतद्गुणसंयोगं तीर्थं पात्रञ्च पर्वं च[१०](†) ।
दानानि ये प्रयच्छन्ति कृतार्थास्ते नरा भुवि ॥

---

८ (*) श्रीभारते च— 'दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे धनम् ।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥
'पुष्करिण्यस्तथा वाप्यो देवतायतनानि च ।
अन्नदानमथारामपूर्त्तमित्यभिधीयते' ॥ इति व्यासः ।
ग्रहोपरागे यद्दानं सूर्य्यसंक्रमणेषु च ।
द्वादश्यादौ तु यद्दानं तदेतत् पूर्त्तमुच्यते' ॥ इति नारदः।

९ (०) 'उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षन्तद्भारतं नाम भारती यत्र सन्ततिः' ॥
'वर्षस्थानं विदुः प्राज्ञा इमं लोकस्य भारतम्' इति भारविः ।
'एष दूरगुरुभारभारतं वर्षमद्य मम वर्त्तते वशे' इति माघः ।

१० (†) 'दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्' ॥ इति श्रीभगवद्गीता ।
—तीर्थं काश्यादि । पात्रं श्रोत्रियम् । पर्व्व चतुर्द्दश्यादि ।

### 10. अगस्त्यः—

गोभि र्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः ।
अलुब्धैर्दानशीलैश्च सप्तभिर्धार्य्यते जगत् ( मही ) ॥
यैर्न भुक्तं न च हुतं न तीर्थे मरणं कृतम् ।
हिरण्यमन्नमुदकं ब्राह्मणेभ्यो न चार्पितम् ॥
दीना विवसना रुक्षाः कपालाङ्कितपाणयः ।
दृश्यन्ते हि महाराज जायमानाः पुनः पुनः ११(†) ॥

### 11. कूर्म्मपुराणे—

यस्तु द्रव्यार्ज्जनं कृत्वा नार्चयेद्ब्राह्मणान् सुरान् ।
सर्वस्वमपहृत्यैनं राजा राष्ट्रात् प्रवासयेत् ॥

### 12. ब्रह्मपुराणे—

दृश्यन्ते दुःखिनः सर्वे प्राणिनः सर्वदा मुने ।
अदत्तदाना जायन्ते परभाग्योपजीविनः ॥१२(*)

### 13. व्यासः—

अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत् पुरा ।
तदिदं देहि देहीति विपरीतमुपस्थितम् ॥
देहीत्येवं ब्रुवन्नर्थी जनं बोधयतीव सः ।
यदिदं कष्टमर्थित्वं प्रागदानफलं हि तत् ॥

### 14. कौर्म्मे—

दानधर्म्मात् परो धर्म्मो भूतानां नेह विद्यते ।
इह लोके परे लोके नादत्तमुपतिष्ठते ।
तस्माद् विप्राय दातव्यं श्रोत्रियाय कुटुम्बिने ॥

इति दानविधानम् ॥१३(†)

---

'सीदते द्विजमुख्याय योऽर्थिने न प्रयच्छति ।
सामर्थ्ये सति दुर्बुद्धिर्नरकायोपपद्यते'। इति विष्णुधर्मे ।
'सदाचाराः कुलीनाश्च दयावन्तः प्रियंवदाः ।
बहुश्रुताश्च धर्मज्ञा याचमानाः परात् ग्रहान्' ॥ इति हेमाद्रौ ।
अपराणि प्रमाणानि विषयेऽस्मिन् हेमाद्रौ सन्ति ।

## (३) अथ दानस्वरूपम् ।

### 15. आदित्यपुराणे—१(*)

अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम्[२](†)
दानमित्यभिनिर्दिष्टं व्याख्यानन्तस्य कथ्यते ॥

उदिते-शास्त्रनिरूपिते; प्रतिपादनं पात्रं प्रति-स्वस्वामिभावापादनपर्य्यन्तस्त्यागः । तच्चतुर्व्विधम् ।
नित्यं नैमित्तिकं काम्यं विमलं चेति तद्विदुः ॥

एषां लक्षणान्याह[३](‡)
अहन्यहनि यद्दानं तन्नित्यमिति कथ्यते ।
यत्तु पापापनुत्त्यर्थं दीयते विदुषां करे ।
तन्नैमित्तिकमुद्दिष्टं दानं सद्भिरनुष्ठितम् ॥

अपत्यविजयैश्वर्य्यस्वर्गार्थं यत् प्रदीयते ।
दानन्तत् काम्यमाख्यात मृषिभिर्धर्म्मचिन्तकैः ॥

यदीश्वरप्रीणनार्थं दीयते विदुषां करे ।
चेतसा भक्ति युक्तेन तद्दानं विमलं स्मृतम् ॥
भगवता तु सात्त्विकादिभेदेन दानस्य त्रैविध्यमुक्तम्—

### 16. श्रीमद्भगवद्गीतायाम्—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥

---

१ (*) सम्प्रदानस्वत्वापादकवैधद्रव्यत्यागो दानमिति तदर्थः ।
—"उदिते" शास्त्रविहिते इति ।

२ (†) कूर्म्मपुराणे ।

३ (‡) तत्रैव कौर्म्मे ।

17. **मनुः—**

येन येन हि भावेन यद्यद्दानं प्रयच्छति ।
तेन तेनैव भावेन तत्तदाप्नोति पूजितः ॥

भावेन-सात्त्विकराजसादिना ।

18. **हेमाद्रावपि—**१(*)

तामसानां फलं भुंक्ते तिर्य्यक्त्वे मानवः सदा ।
वर्णसंस्कारभावेन वार्द्धके यदि वा पुनः ॥
बाल्ये वा दासभावे वा नात्र कार्य्या विचारणा ।
अतोऽन्यथा तु मानुष्ये राजसानां फलम्भवेत् ॥
सात्त्विकानां फलं भुंक्ते देवत्वे नात्र संशयः ॥

19. **मत्स्यपुराणेऽपि—**

येषां पूर्वकृतं कर्म्म सात्त्विकं मनुजोत्तम ।
पौरुषेण विना तेषां केषाञ्चिद्दृश्यते फलम् ॥
कृच्छ्रेण कर्म्मणा विद्धि तामसस्य तथा फलम् ।
कायिकं वाचिकं दानं मानसञ्च त्रिधा मतम् ॥२(†)
अर्हते यत्सुवर्णादि-दानन्तत्कायिकं मतम् ।
आर्त्तानामभयं दद्मीत्येतद्वै वाचिकं स्मृतम् ॥
विद्यया स्याद् यथायोगि तद्दानं मानसं स्मृतम् ।

इति दानस्वरूपम् ॥

## (४) अथ दानाङ्गानि ।

---

20. **हेमाद्रौ—**३(‡)

प्रतिग्रहीता द्रव्यञ्च कालो देशश्च पावनः ।
श्रद्धा च सात्त्विकी ज्ञेयं दानानामङ्गपञ्चकम् ॥

---

कृतानि विधिहीनानि वञ्चनार्थं परस्य वा
क्रोधलोभाभिभूतेन तामसानि विनिर्दिशेत्
सात्त्विकानि भवन्तीह श्रद्धया परया द्विज ॥ इति विष्णुधर्मोत्तरे ।
इत्यारभ्य श्लोकद्वयं गारुडप्रोक्तम् ।
अन्यद् हारीतस्मृतौ पुष्कलमस्ति ।

भविष्यपुराणोक्तमेतद्द्वयम् ।

हेमाद्रौ दानानां षडङ्गान्युक्तानि ।
यथा—दाता प्रतिग्रहीता च श्रद्धा देयञ्च धर्मयुक् ।
देशकालौ च दानानामङ्गान्येतानि षड् विदुः ॥

देशकालाद्युपायैश्च द्रव्यं श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत्तत् सकलं धर्म्मलक्षणम् ॥
उपाय—इतिकर्त्तव्यता ।

21 **तत्रैव—**

धर्म्ममर्थञ्च कामञ्च व्रीड़ाहर्षभयानि च ।
अधिष्ठानानि दानानां षड़ेतानि प्रचक्षते ॥
तानि विवृणोति—
पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् (१)* ।
केवलं-त्यागबुद्धया यद्धर्म्मदानन्तदुच्यते ॥
प्रयोजनमपेक्ष्यैव प्रसङ्गाद् यत् प्रदीयते ।
तदर्थं दानमित्याहुरैहिकं फलहेतुकम् ॥
स्त्रीपानमृगयाक्षाणां प्रसङ्गाद्यत् प्रदीयते २(×) ।
अनर्हेषु च रागेण कामदानं तदुच्यते ॥
संसदि व्रीड़या स्तुत्याऽचार्य्योऽर्थिभ्यः प्रयाचितः ।
यद्दीयते च तद्दानं व्रीड़ादानमिति स्मृतम् ॥
दृष्ट्वा प्रियाणि श्रुत्वा वा हर्षवद् यत् प्रदीयते ।
हर्षदानमिति प्राहुर्दानं तद्धर्मचिन्तकाः ॥
आक्रोशानर्थहिंसानां प्रतीकाराय यद्भवेत् ।
दीयते तापकर्त्तृभ्यो भयदानन्तदुच्यते ॥

## (५) अथ दातृ-स्वरूपम् ।

22. **हेमाद्रौ—**

अपापरोगी धर्म्मात्मा दित्सुरव्यसनः शुचिः ।
अनिन्द्योजीवकर्म्मा च षड्भिर्दाता प्रशस्यते ॥
अपापरोगी-राजयक्ष्मादिरोगरहितः ३(:) ।

---

१ (*) —प्रयोजनमनपेक्ष्य-दृष्टफलाननुसन्धानेनेत्यर्थः ।

२ (×) स्त्री, एतद्विषये अत्यासक्तिः निन्दा वा । पानं सुरादीनाम् । मृगया, मृगादि-पशुमारणम् । अक्षः अक्षक्रीड़ा । एतेषां प्रसङ्गादनर्हेषु पात्रेषु रागाद् यद्दानं क्रियते तत् कामदानम् शास्त्रज्ञैरुच्यते ।

३ (:) महापातकचिह्नानि सप्तजन्मसु जायन्ते । तानि कुष्ठादिरोगरूपेण देहे उत्पद्यमानानि लोकान् बाधन्ते । अतः प्रमत्तयोरोगा यथामतिपापजाः स्युः ।

(—) छान्दोग्यश्रुतौ च, "स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन् ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैरिति" ।

### 23. मनुरपि—

क्रियावान् श्रद्दधानश्च दाता प्राज्ञोऽनसूयकः ।
धर्म्माधर्म्मविशेषज्ञः सर्वं तरति दुष्कृतम् ॥
षण्णान्तु कर्म्मणां यस्य त्रीणि कर्म्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाश्च प्रतिग्रहः ॥

### 24. प्रभासखण्डे च—

आत्मा पुत्रः पुरोधाश्च भ्राता पत्नी सखापि वा ।
यात्रायां धर्म्मकार्य्येषु जायन्ते प्रतिहस्तकाः ॥
एभिः कृतं महादेवि स्वयमेव कृतम्भवेत् १(*) ॥

इति दातृ स्वरूपम् ।

## (६) अथ पात्रलक्षणम् ।

—*—

### 25. मदनरत्ने—

ब्राह्मणः प्रतिगृह्णीयाद्वृत्त्यर्थं साधुतः सदा ।
अन्यश्वमणिमातङ्ग तिल लोहांश्च वर्ज्जयेत् ॥

### 26. याज्ञवल्क्यः—

तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्म्मसंस्थापनाय च ॥
सर्वस्य प्रभवो विप्राः श्रुताध्ययनशालिनः ।
तेभ्यः क्रियापराःश्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः ॥
न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते २(†) ॥

---

स्मृतौ च, ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एभिरेव कृतं यत्तु तत्कृतं स्वयमेव हि ॥
अत्र विट्पतिर्जामाता । कृतमित्युपलक्षणम्, कर्त्तुमुद्यता यद्यद्धर्म्मकार्य्यमनुष्ठितम्
तत् सर्वं स्वकृतमिव भवति ।

स्मृतौ च, ददाति विप्राय बहुश्रुताय, वेदान्तविज्ञानतपस्विने च ।

किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रन्तपोमयम्।
असङ्कीर्णन्तु यत पात्रं तत् पात्रन्तारयिष्यति ॥
असङ्कीर्णं—योनिसङ्कररहितम् १(*)।
दत्त्वा द्विजाय शुद्धाय नरोयाति शुभांगतिम्।
विद्यातपःशीलवांश्च स च तारयते नरः ॥
शीलं संवसता ज्ञेयं शौचं संव्यवहारतः।
प्रज्ञा संकथनाद् ज्ञेया त्रिभिः पात्रं परीक्षयेत् ॥
क्षमा दया दमो दानं धर्म्मः सत्यमृतं घृणा।
विद्या विनय आस्तिक्यमेतद्ब्राह्मणलक्षणम् २(†) ॥

27. **कौर्म्मे—**

स्वाध्यायवन्तो ये विप्रा विद्यावन्तो जितेन्द्रियाः।
सत्यसंयमसंयुक्ता स्तेभ्योदद्याद्विजोत्तम ! ॥
श्रोत्रियाय कुलीनाय विनीताय तपस्विने।
व्रतस्थाय दरिद्राय प्रदेयं शक्तिपूर्व्वकम् ॥
श्रोत्रियलक्षण माह—३[‡]

28. **यमः—**

एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा।
षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम धर्म्मवित् ॥

29. **भारतेऽपि—**

सत्यं दानं क्षमा शीलमानृशंस्यं दया घृणा।
दृश्यन्ते यत्र लोकेऽस्मिन् तं देवा ब्राह्मणं विदुः ॥

30. **वशिष्ठः—**

स्वाध्यायाढ्यं योनिमन्तं प्रशान्तं वैतानस्थं पापभीरुं बहुज्ञम्।
स्त्रीषु क्षान्तं धार्म्मिकं गोशरण्यं व्रतैः क्षान्तं तादृशं पात्रमाहुः ॥

---

१ (*) सङ्करो नरकायैव इति श्रीगीतायाम्।
२ (†) शमो दमस्तपः शौचं क्षान्तिरार्ज्जवमेव च।
विद्या विज्ञानमास्तिक्यं ब्रह्मकर्म्म स्वभावजम् ॥ श्रीगीतायां विप्रगुणा उक्ताः।
३ (‡) श्रोत्रियश्छन्दोऽधीते, इति महाभाष्ये।
" " विप्रविषये तैत्तिरीयोपनिषदि—
ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्म्मकामाः स्यु रिति।

योनिमन्तं-प्रशस्तकुलोद्भवं मुख्यजमिति ।

वैतानस्थं-अग्निहोत्रादिकर्म्मपरम्, गोशरण्यं गोशुश्रूषारतम् ।

31. देवलः—

मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततःपरः ।

अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः ॥

इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणा उत्तरोत्तराः १(*) ।

तेषां परः परः श्रेष्ठो विद्यावृत्तविशेषतः ।

## (७) एषां लक्षणानि—

ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत् ।

अनुपेतः क्रियाहीनो मात्र इत्यभिधीयते ॥

अनुपेत-उपनयनरहितः ।

मन्त्रस्य वा ब्राह्मणस्य वेत्ता ब्राह्मण उच्यते २(†) ।

वेदवेदाङ्गतत्त्वज्ञः क्रियावान् श्रोत्रियो भवेत् ॥

वेदवेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्ज्जितः ।

श्रद्दधानः क्रियावांश्च अनूचानः स उच्यते ३(‡)॥

स्वाध्यायकर्म्मसम्पन्नः श्रद्धावाननसूयकः ।

भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः ॥

वैदिकं लौकिकञ्चैव सर्व्वं ज्ञानमवाप्य यः ।

आश्रमस्थो वशी नित्यमृषिकल्पः स उच्यते ॥

ऊर्द्ध्वरेता तपस्युग्रे नियताशो न संशयी ।

शापानुग्रहयोः शक्तः सत्यसन्धो भवेदृषिः ४(+) ।

ध्यानस्थो निष्क्रियो दान्तः(†)तुल्यमृत्काञ्चनो मुनिः ५(†) ॥

प्रथमं स्मृतौ इति हेमाद्रौ पाठः ।

'मन्त्रब्राह्मणयोर्वेदनामधेयम्' । मन्त्रो हि ऋग् यजुः साम्नाम् ।

ब्राह्मणः शतपथैतरेयादिः । एतेषां वेत्ता ब्राह्मणसंज्ञकः ।

'अनूचानो विनीते स्यात् साङ्गवेदविचक्षणे' । इति विश्वः ।

'योऽनूचानः स नो महान्' इति श्रुतौ ।

अन्वचोपत् ; 'उपेयिवान्' ( ३।२।१०९ ) इत्यादिना साधुः ।

'ऋषिर्वेदे वसिष्ठादौ दीधितौच पुमानयम्' इतिमेदिनी ।

एते सप्तविधाः—महर्षि-देवर्षि ब्रह्मर्षि-परमर्षि-काण्डर्षि-श्रुतर्षि-राजर्षयः ।

'ऋषयो मन्त्रद्रष्टारः—साक्षात्कृतधर्म्माणः' इति निरुक्ते ।

'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।

वीतरागभय-क्रोधः स्थितधीर्मुनिरुच्यते' ॥ इतिभगवद्गीतायाम् ।

ब्रह्मनिष्ठो ब्रह्मवेत्ता मुनिरित्यभिधीयते । इति पुस्तकान्तरे पाठः ।

आश्रमस्थो गृहस्थाश्रमस्थः ।

एवमन्वयविद्याभ्यां वित्तेन च समुच्छ्रितः ।
त्रिशुक्ला नाम विप्रेन्द्राः पूज्यन्ते वसनादिषु ॥
सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
प्राधीते शतसाहस्रमनन्तं वेदपारगे ॥

प्राधीतः प्रारब्धवेदः[*]।

सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् ।
भोजने चैव दाने च दहत्यासप्तमं कुलम् ॥

इदमुभयोः साम्ये । असाम्ये तु—

ब्राह्मणातिक्रमो नास्ति विप्रे मन्त्रविवर्ज्जिते ।
ज्वलन्तमग्निमुत्सृज्य नहि भस्मनि हूयते ॥

## 32. तथा—

सम्बन्धिन स्तथा सर्व्वान् दौहित्रंविट्पतिन्तथा ।
भागिनेयं विशेषेण तथा बन्धून् हापयेत् ॥

विट्पतिर्जामाता १(०) ।

## 33. विष्णुधर्म्मोत्तरे—

आत्मनस्तु भवेत्पात्रं नान्यस्य स्यात् पुरोहितः ।
पुरोहितेषु स्वे दत्तं दानमक्षय्यमुच्यते ॥
उपाध्यायर्त्विजोश्चैव गुरावपि च मानवैः ।
वर्णापेक्षा न कर्त्तव्या मातरं पितरं प्रति ॥

## 34. तथा—

मातृष्वसा स्वसा चैव तथैवच पितृष्वसा ।
मातामही भागिनेयी भागिनेयस्तथैव च ।
दौहित्रो विट्पतिश्चैव तेषु दत्तं महाफलम् ।

---

१ (०) 'ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि' ॥ इति श्रुतिः ।

35. **ब्राह्मे—**

यत् कन्यासु पिता कुर्य्याद् दानं पूजनमर्च्चनम् ।
कृतं तत् सुकृतं विद्यात् तद्दत्तं दत्तमक्षयम् ॥

अत्र पूजनं-सत्कारः ।

36. **पद्मपुराणे—**

दीनान्धकृपणानाथवाग्विहीनेषु यत्तथा ।
विकलेषु तथान्येषु जड़वामनपङ्गुषु ।
रोगार्त्तेषु च यद्दत्तं तत् स्याद्बहुगुणं धनम् ॥

37. **तथा—**

अब्राह्मणास्ते षट् प्रोक्ता ऋषिभिः शौनकादिभिः ।
आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी ।
तृतीयो बहुयाज्यः स्याच्चतुर्थो ग्रामयाजकः ।
पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च १(*) ।
अनागतान्तु यः पूर्व्वां सादित्याञ्चैव पश्चिमाम् ।
नोपासीत द्विजः सन्ध्यां सषष्ठ इति कीर्त्तितः २(†) ।

अयं निषेधो दानविशेषपरः ।

38. **तथा—**

अपूर्व्वञ्च यद्दानं अमन्त्राय प्रयच्छति ३(‡) ।
दातुर्निकृत्य हस्तं तद्भोक्तुर्जिह्वां निकृन्तति ॥

बहवो याज्या यजमाना यस्य स बहुयाज्यः ।
मस्य नगरस्य भृत इत्यन्वयः । इति हेमाद्रिः ।
षष्ठोऽब्राह्मणःस्मृतः' इति ग्रन्थान्तरं ।
अहरहः सन्ध्यामुपासीत' इति श्रुतिः ।
सन्ध्यासतं यान्तमादित्यमुपास्य ब्राह्मणः सकलभद्रमश्नुते नाकमीति विधूतपाप्मा' इति
तिरपरा ।
पद्मपुराणेऽपि-'सन्ध्यान्नूपासते येन सततं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्'' ॥
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्मसु ।
यदन्यत् कुरुते किञ्चिन्न तस्य फलभाग्भवेत्' ॥
अमन्त्राय इत्यत्र अपात्रायेति हेमाद्रौ पाठः ।

दानं दद्यात् प्रयत्नेन श्रद्धापूतमतन्द्रितः ।
अश्रद्धया हुतं दत्तं न च तत् प्रेत्य नो इह १(*) ॥
यद् यद्दिष्टं विशिष्टञ्च न्यायप्राप्तञ्च यद्भवेत् ।
तत्तद्गुणवते देयमित्येतद्दानलक्षणम् ॥

39. **तथा—**

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च ॥
प्रयोग :— शास्त्रीयमार्गेण कुसीदं, कर्म्मयोगः—आर्त्विज्यम् २(†) ।

40. **एतानाह गौतमः—**

ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य धनं जितम् ।
क्रयश्च विक्रयश्चैव निर्द्दिष्टो वैश्यशूद्रयोः ३(‡) ।

41. **यमः—**

कुटुम्बभक्त-वसनाद्देयं यदतिरिच्यते ।
मध्वास्वादो विषं पश्चाद्दातुर्धर्म्मोऽन्यथा भवेत् ।
कुटुम्बं पीड़यित्वापीति तु आवश्यकार्थं वेदितव्यम् ।

42. **तथा—**

द्वाविमौ पुरुषौ लोके सूर्य्यमण्डल भेदिनौ ।
दाता त्वन्नस्य दुर्भिक्षे सुभिक्षे हेमवस्त्रदः ॥
संश्रुत्य यो नदित्सेत याचितश्च न यच्छति ।
उभावनीतिकावेतौ मृथापापमवाप्नुतः ॥

43. **मनुः—**

सान्तानिकं यक्ष्यमाणमध्वगं सर्व्ववेदसम् ।
गुर्व्वर्थं पितृमात्रर्थं स्वाध्याया ह्युपतापिनः ॥

---

१ (*) अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत् ।
असदित्युच्यते पार्थ नच तत् प्रेत्य नो इह ॥ इति भगवद्गीतायाम् ।

२ (†) ऋत्विजामिदं यज्ञादिकर्म्मार्त्विज्यम् ।
" 'कृताः कुर्व्वन्ति ये यज्ञमृत्विजो याजकाश्च ते' इति कात्यः ।
" ऋत्विक् ऋतौ यजतीति । 'ऋत्विग्' ( ३।२।५९ ) इत्यादिना साधुः ।

३ (‡) निर्व्विष्टमिति हेमाद्रौ पाठः । कृष्यादिना यद्धनमुपार्जितं निर्व्विष्टम् ।
" 'निर्व्वेशो भृतिभोगयो' रिति अमरात् ।

नवैतान् स्नातकांश्चैव ब्राह्मणान् धर्म्मभिक्षुकान् १(*)।
निःस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः।
एतेभ्यो हि द्विजाग्र्येभ्यो देयमन्नं सदक्षिणम्।
इतरेभ्यो वहिर्वेदि कृतान्नं तु विधीयते॥

साम्तानिकः-सन्तानप्रयोजनकविवाहवान्, तादृशविवाहार्थीति यावत्, अध्वगः तीर्थार्थं प्रचलितः।
सर्व्ववेदाः-सर्व्वस्व दक्षिणयागकृत्।
'सर्व्वं वेदाः स येनेष्टो यागः सर्व्वस्वदक्षिणः इत्यभिधानात्' २(†)।

गुरुरत्र गोबलीवर्द्दन्यायेन मातापितृव्यतिरिक्तो ज्ञेयः। उपतापी रुग्नः। विद्या-विशेषत इति-अल्पविद्याय अल्पं, बहुविद्याय बहुदातव्यमित्यर्थः।

### 44. दक्षः—

व्यसनापहरणार्थञ्च कुटुम्बार्थञ्च याचते।
एवमन्विष्य दातव्यं सर्व्वदानेष्वयं विधिः॥

व्यसनं-राजचौराद्युपद्रवः। आपदुर्भिक्षादिजनिता। अत्र आद्योऽर्थशब्दो-निवृत्तिवचनः।

### 45. महाभारते –

हृतस्वा हृतदाराश्च ये विप्रा देशविप्लवाः (व)।
अर्थार्थमभिगच्छन्ति तेभ्यो दत्तं महाफलम्॥

### 46. विष्णुधर्म्मोत्तरेऽपि—

यक्ष्यतश्चतथा दत्तं व्यसनं तर्त्तुमिच्छताम् ३(‡)।
दुःखान्वितानां दीनानां लक्ष्यणं परिचोदितम्॥
विवाहमेखलाबन्ध-प्रतिष्ठादिषु कर्म्मसु।
आपन्नेषु च यद्दत्तं तदक्षयमुदाहृतम्।

---

१(*) 'स्नातकव्रतचारी' इति। 'स्नातकव्रतलोपे च भोजनं न समाचरेत्' इति स्मृतिः। ष्णा शौचे, स्नातिश्च। 'गत्यर्था' इत्यादिसूत्रेण क्तः (३-४-७२)। ततः 'संज्ञायां कन्' (५।३।७५)।

२(†) —इत्यमरः। विश्वजिदादियागादौ सर्व्वस्वं दक्षिणात्वेन देयम्। सर्व्वस्वं दक्षिणा यत्र विश्वजिदादौ स येनेष्टः क्रतुः स सर्व्ववेदाः। तथाच काठकश्रुती— 'उशन् ह वै वाजश्रवसः सर्व्ववेदसन्ददौ'। इत्यादि ।१।

३(‡) यक्ष्यतश्च इत्यत्र यियक्षतामिति हेमाद्रौ पाठः।





47. **दक्षः—**

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
सहस्रगुणमाचार्य्ये त्वनन्तं वेदपारगे ॥
द्विगुणं साहस्रमनन्तञ्च यथाक्रमं दाने विशेषः ।
समं द्विगुणसाहस्रमनन्तञ्च यथाक्रमम् ।
दाने फलविशेषः स्याद्धिंसाया एवमेव हि । इति दक्षोक्तेः ॥

48. **भारते—**

अध्यापयेत्तु यः शिष्यं कृतोपनयनं द्विजः ।
सरहस्यं सकल्पञ्च वेदं भरतसत्तम ।
तमाचार्य्यं महाबाहो प्रवदन्ति मनीषिणः ४(*) ।

## (८) अथ पात्रलक्षणम् ।

—*—

49. **याज्ञवल्क्यः—**

स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति ।
निषेकादीनि कर्म्माणि यः करोति नृपोत्तम ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ।
एकदेशमुपाध्याय ऋत्विग् यज्ञकृदुच्यते ॥

50. **बृहस्पतिः—**

शूद्रे ( शत ) समगुणं दानं वैश्ये तु द्विगुणं मतम् ।
क्षत्रिये त्रिगुणं प्राहुः षड्गुणं ब्राह्मणे स्मृतम् ।
श्रोत्रिये चैव साहस्रं आचार्य्ये द्विगुणं मतम् ।
आत्मज्ञे शतसाहस्रमनन्तं चाग्निहोत्रिणि ॥

---

४ (*) श्रुतिषु च 'आचार्य्यवान् पुरुषो वेद' ।
" 'आचार्य्यस्ते गतिर्वक्ता' ।
" 'वेदमनूच्याचार्य्यो ऽन्तेवासिनमनुशास्ति' ।
'आचार्य्यदेवो भव' ।
" एवमेव मानवे धर्म्मशास्त्रे प्रमाणमस्ति ( २।१४० )

### 51. विष्णुधर्म्मोत्तरे—

अमानुषे समं दानं गोषु ज्ञेयं फलन्तथा।
द्विगुणञ्च तदेवोक्तं तथा (या) त्रैवर्ण्यसङ्करे।
शूद्रे चतुर्गुणं प्रोक्तं विशि चाष्टगुणं स्मृतम्।
क्षत्रिये षोड़शगुणं ब्रह्मबन्धौ तदेव तु।
द्वात्रिंशद्गुणं स्मृतं दानं वेदाध्ययनतत्परे १(:)।
शतघ्नं तद्विनिर्दिष्टं प्राधीते लक्षसम्मितम्।
अनन्तञ्च तदेवोक्तं ब्राह्मणे वेदपारगे २(×)।

एतेषु केषाञ्चिद्ब्राह्मणादीनामपात्राणामपि पात्रत्वनिरूपणं मशकवद्गवादिदान-व्यतिरिक्तदानविषयं वेदितव्यम्।

यद्वा, अन्नदानपरमेतत्—

### 52. [तत्रैव]

अन्नदाने न कर्त्तव्यं पात्रापेक्षणमण्वपि।
अन्नं सर्व्वत्र दातव्यं धर्म्मकामेन सर्व्वदा। इति विष्णुधर्म्मोत्तरोक्तेः।

इति पात्रलक्षणम्॥

## (६) अथ अपात्रनिरूपणम्।

—*—

### 53. मनुः—

गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान्।
प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्॥
ये व्यपेताः स्वकर्म्मभ्यः परपिण्डोपजीविनः।
द्विजत्वमभिकाङ्क्षन्ति तांश्च शूद्रवदाचरेत्॥

---

१ (:) तैत्तिरीयश्रुति :—'यावती वै देवतास्ताः सर्व्वा वेदविदि ब्राह्मणे वसन्ती'ति।

२ (+) 'वेदमेव सदाभ्यस्येत् तपस्तप्स्यन् द्विजोत्तमः।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते'॥ श्रुतौ।

" 'अनधीत्य द्विजो वेदान् अनुत्पाद्य तथात्मजान्।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः'॥

54. वशिष्ठः—

उदक्यान्वासते येषां ये च केचिदनग्नयः ।
कुलञ्चा श्रोत्रियं येषां सर्व्वे ते शूद्रधर्म्मिणः ॥
अन्वासते-कर्म्मकाले समीप एव तिष्ठति ।

55. महाभारते—

यस्तु प्रेष्यान् द्विजान् मूढ़ो भोजयेद्धव्यकव्ययोः ।
न भवेत्तत्फलन्तस्य वैदिकीयं तथा श्रुतिः ॥

56. यमः—

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलाम् ॥

57. भविष्यपुराणे—

नाब्राह्मणाय दातव्यं न देयं ब्राह्मणाक्रिये ।
न ब्राह्मणब्रुवे चैव नच दुर्ब्राह्मणे धनम् ॥

58. व्यासः—

ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कारवर्ज्जितः ।
जातिमात्रोपजीवी च भवेदब्राह्मणः स तु ॥
गर्भाधानादिभिर्युक्तस्तथोपनयने नच ।
न कर्म्मविन्न चाधीते स भवेद्ब्राह्मणाक्रियः ॥

59. वराहपुराणे—

अव्रती वैश्यराजन्यौ शूद्रस्याब्राह्मणात्मजः ।
वेदव्रतविहीनश्च ब्राह्मणो ब्राह्मणब्रुवः ॥
यस्य वित्तञ्च वेदी च विच्छिद्येते त्रिपौरुषम् ।
स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः ।
न वार्य्यपि प्रयच्छेत नास्तिके हैतुकेऽपि वा ।
स पाषण्डिषु सर्व्वेषु नावेदविदि धर्म्मवित् ॥

नास्तिकः-परलोकवासनाशून्यः । हैतुकः-हेतुभिः परलोकं निराकरिष्णुः १(+) ।

यथा प्लवेनोपलेन निमज्जत्युदके तरन् ।
दातृ-प्रतिग्रहीतारौ तथैवाज्ञौ निमज्जतः ॥ इति विष्णूक्तेः (60) ।

इति सामान्येतिकर्त्तव्यतानिरूपणपूर्व्वकमपात्रनिरूपणम् ॥

## (१०) अथेदानीं परिभाषा निरूप्यते ।

—*—

61. **तत्राधिकारिणो व्यासेनोक्ताः—**

वर्णानामाश्रमाणाञ्च चातुर्व्वर्ण्यं युधिष्ठिर ।
दानधर्म्मंप्रवक्ष्यामि यथा व्यासेन भाषितम् ॥

62. **स्कान्दे—**

श्रद्धावान् पापभीरुश्च मददम्भविवर्जितः ।
पूर्व्वनिश्चयमाश्रित्य यथावत् कर्म्मकारकः ॥

63. **शूद्रे तु विशेषमाह जातुकर्ण्यः—**

अधिकारी भवेच्छूद्रः पूर्त्तधर्म्मे न वैदिके २(०) ।

---

१ (+) 'पाषण्डिनो विकर्म्मस्थान् वैडालव्रतिकान् शठान् ।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्' ।
" 'सन्देहकृद्धेतुभिर्यः सर्व्वकर्म्मसु हैतुकः' विष्णुपुराणे ।
अन्यत्र हैतुकः कुयुक्तिव्यवहारी वैतण्डिको वा । टी० मंत्र; १८ अ: ।
" 'भ्रष्टः स्वधर्म्मात् पाषण्डः' ।
" " नास्तिकः 'अस्ति नास्ति दिष्टं मतिः' पाणिनिः (४।४।६०)—
" नास्ति परलोकादीश्वरश्चेति मतिरस्येति ।

२ (०) पुष्करिण्यस्तथा वाप्यो देवतायतनानि च ।
अन्नदानमथारामः पूर्त्तमित्यभिधीयते ॥ इति व्यास.
" अत्र पाठान्तरञ्च—'आरामश्च विशेषेण पूर्त्तं कर्म्मविनिर्द्दिशेत्' ।
" तथा—'ग्रहोपरागे यद्दानं सूर्य्यसंक्रमणेषु च ।
द्वादश्यादौ च यद्दानं तदिदं पूर्त्तमुच्यते' इति नारदः ।
" अपरञ्च—'शरणागतसन्त्राणं भूतानाञ्चाप्यहिंसनम् ।
बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते' ।
अग्निहोत्रं तपः सत्यं वेदानाञ्चैव पालनम् ।
आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते' इति मनुः ।

## 64. याज्ञवल्क्यः—

आर्षंच्छन्दश्च दैवत्यं विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥
अविदित्वा तु यः कुर्य्याद् याजनाध्ययनं जपम् ।
होममन्तर्जलादीनि तस्य चाल्पं फलम्भवेत् १(+) ।
यश्च जानाति तत्त्वेन आर्षं छन्दश्च दैवतम् ।
विनियोगं ब्राह्मणञ्च मन्त्रार्थं ज्ञानकर्म्म च ।
एकैकस्य ऋषेः सोऽपि वन्द्यो ह्यतिथिवद्भवेत् ।
देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः ॥

## 65. तथा—

येन यदृषिणा दृष्टं सिद्धिःप्राप्ता च येन वै ।
मन्त्रेण तस्य तत् प्रोक्तमृषेर्भावस्तदार्षकम् २(†) ।
छन्दसा छन्द उद्दिष्टं वाससी इव चाकृते ।
आत्मा संछादितो देवैर्मृत्योर्भीतैस्तु वै पुरा ।
आदित्यैर्वसुभीरुद्रैस्तेन च्छन्दांसि तानि वै ।
यस्य यस्य तु मन्त्रस्य उद्दिष्टा या च देवता ।
तदाकारं भवेत्तस्य दैवत्वं दैवतोच्यते ।
पुराकल्पे समुत्पन्ना मन्त्राः कर्म्मार्थमेव च ।
अनेन चेदं कर्त्तव्यं विनियोगः स उच्यते ।
नैरुक्तं यच्च मन्त्रस्य विनियोग-प्रयोजनम् ।
प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं तदिहोच्यते ।
एवं पञ्चविधं योगं जपकाले ह्यनुस्मरेत् ।
होमे चान्तर्जले योगे स्वाध्याये याजने तथा ।

## 66. गृह्यपरिशिष्टे—

बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म्म प्रकीर्त्तितम् ।
तस्य तावति शास्त्रार्थे कृते सर्व्वं कृतं भवेत् ॥

---

१ (+) मार्तभट्टाचार्य्यस्याह्निकाचारतत्त्वेऽपि चास्ति ।

२ (†) 'चार्षन्तु विज्ञानं मीमांसासूत्रोक्तम्' इति वाचस्पतिमिश्राः ।

प्रवृत्तमन्यथाकुर्य्याद् यदि मोहात् कथञ्चन।
यतस्तदन्यथाभूतं तत एव समापयेत्॥

प्रवृत्तं-प्रारब्धम्। अन्यथाभूतं-क्रमाद्यन्यत्वेन वैपरीत्यमापन्नम्।

समाप्ते यदि जानीयान् मयैतदन्यथाकृतम्।
तावदेव पुनः कुर्य्यान्नावृत्तिः सर्व्वकर्म्मणः॥

प्रधानस्याक्रियायान्तु साङ्गन्तत् क्रियते पुनः।
तदङ्गस्याक्रियायान्तु नावृत्तिः सर्व्वकर्म्मणः॥

67-68. **अदेयान्याह—मनुर्याज्ञवल्क्यश्च—**

सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम् १(+)।
अन्वाहितञ्च निक्षेपः सर्व्वस्वं चान्वये सति॥

आपत्स्वपि न देयानि न च वस्तूनि पण्डितैः।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः॥

सामान्यमनेकस्वामिकम्।

69. **देवलः—**

पक्वमन्नं गृहस्थस्य वानप्रस्थस्य गोरसः २(:)।
वृत्तिश्च भैक्ष्य वृत्तीनां न देयं पुण्य मिच्छता।
दुर्भिक्षे समनुप्राप्ते कुटुम्बे सीदति क्षुधा।
असाधोरपि गृह्णीयादृणापाकरणार्थकम्।
वृत्तिर्भिक्षातिरिक्तं वर्त्तनम्।

इति परिभाषानिरूपणम्॥

---

१ (+) 'याचितं'—संव्यवहारार्थं याचित्वानीतं वसनाभरणादि।
'न्यासस्तु'—गृहस्वामिनेऽदर्शयित्वा तत्परोक्षमेव गृहस्वामिनेऽर्पणीयमिति गृहजन-हस्ते स्थापितं द्रव्यं 'न्यासः'। आधि, र्मानसीव्यथा। 'दाराः' भार्य्या।
'तद्धनं' दारधनम्। एतत्तु षड्विधं मनुना परिकीर्त्तितम्।

२ (:) 'पक्वमन्नं' सिद्धमन्नमित्यर्थः। तथाच स्मृतौ—
'सर्व्वमेवमतं प्राहुः सरूपं धान्यमुच्यते।
आमं वितुषमित्याहुः सिद्धमन्नमुदाहृतम्'।

" " 'गोरसः' गोक्षीरम्। यद्वे त्वाहुः।—दधि क्षीरं हवि रामिक्षा च।

## (११) अथ अग्राह्यद्रव्याणि ।

—*—

70. **स्कान्दे—**

अजिनं मृतशय्याञ्च मेषीं चोभयतोमुखीम् १(०) ।
कुरुक्षेत्रे च गृह्णानो न भूयः पुरुषो भवेत् ।

71. **आग्नेये—**

हस्त्यश्वरथयानानि मृतशय्यासनादि यत् २(:) ।
कृष्णाजिनञ्च गृह्णाति अनापत्स्वपि यो द्विजः ।
तथोभयमुखीं घोरां सशैलां मेदिनीन्तथा ३(+) ।
कुरुक्षेत्रे च यद्दानं चाण्डालात् पतितात्तथा ।
मासिकेऽपि मृतश्राद्धे भुञ्जन् प्रेतत्वमाप्नुयात् ४(†) ॥

72. **तथा—**

प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्ज्जयेत् ।
प्रतिग्रहेण विप्राणां ब्राह्मं तेजो विनश्यति ॥

73. **ब्रह्मवैवर्त्ते—**

पितृमातृगुरोरर्थे विवाहार्थे च धर्म्मतः ।
अध्वरार्थे च विदुषां ग्रहीतव्यं धनं सदा ॥

74. **यमः—**

राजधानी यथा शून्या यथा कूपश्च निर्ज्जलः ।
यथा हुतमनग्नौ च तथा दत्तं द्विजेऽनृचे ॥
अनृचे वेदज्ञानरहिते ।
यथा काष्ठमयो हस्ती यथा चर्म्ममयो मृगः ।
यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः ॥

---

१ (०) मेषीमित्यत्र मञ्चीमिति हेमाद्रौ पाठः ।
२ (:) 'तथोभयतोमुखीं गाञ्चे'ति पाठान्तरमस्ति ।
३ (+) 'मृतशय्यासनादयः' इति भिन्नः पाठः । प्रेतमुद्दिश्य दत्तशय्या इत्यर्थः ।
४ (†) 'मृतश्राद्धे' स्थाने 'नव श्राद्धे' इति हेमाद्रौ पाठः ।

75-76. **व्यास-शातातपौ—**

नष्टशौचे-व्रतभ्रष्टे विप्रे वेदविवर्जिते ।
रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम् ॥

77. सत्पात्रासन्निधाने षट्त्रिंशन्मते—

पात्रं मनसि सञ्चिन्त्य क्रियावन्तं गुणान्वितम् ।
देशे काले च संप्राप्ते देयमप्सु विनिक्षिपेत् ॥

78. **भारतेऽपि—**

मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् १(+) ।
दाता तत्फलमाप्नोति प्रतिग्राही न दोषभाक् ।
नामगोत्रे समुच्चार्य्य सम्प्रदानस्य चात्मनः ।
संप्रदेयं प्रयच्छन्ति कन्यादाने तु पुंत्रयम् २(×) ।

इति अग्राह्यद्रव्यनिरूपणम् ॥

## (१२) अथ दानधर्म्माः ।

—*—

ओँकारमुच्चरन् प्राज्ञो द्रविणं स-कुशोदकम् ।
गृह्णीयाद्दक्षिणे हस्ते तदन्ते स्वस्ति कीर्त्तयेत् ।
कोऽदादिति च मन्त्रेण ३(†) सर्व्वं ग्राह्यं सुबुद्धिना ॥

79. **भविष्ये—**

अदत्तदक्षिणं दानं व्रतञ्चैव नृपोत्तम ।
विफलन्तद्विजानीयाद् भस्मनीव हुतं हविः ।
सुवर्णं परमन्दानं सुवर्णं दक्षिणा परा ।
सर्व्वेषाञ्चैव दानानां सुवर्णं दक्षिणेष्यते ।
देयद्रव्यतृतीयांशं दक्षिणां परिकल्पयेत् ।

---

(+) 'मनसा पात्रमुद्दिश्य भूमौ तोयं विनिक्षिपेत् ।
विद्यते सागरस्यान्तो दानस्यान्तं न विद्यते' ॥ इति श्रुतिः ।

(×) सम्प्रदानकाले तु सम्प्रदेयस्य प्रतिग्रहितुः नाम-गोत्र-प्रवरोच्चारणपूर्व्वकं चात्मनश्च वैपुत्रपित्रोच्चारणं भवति । एवमेव विवाहादौ वर्त्तितुमेति पुंत्रयम् ।

(†) 'कोऽदात् कस्मा अदात् कामोऽदात् कामायादात् ।
कामो दाता कामः प्रतिग्रहीता कामैतत्ते' । यजुः अः—७, ४८ मः ।

अनुक्तदक्षिणे दाने दशांशं वापि शक्तितः।
सुवर्णं रजतं ताम्रं तण्डुला धान्यमेव च।
नित्यश्राद्धं देवपूजा सर्व्वमेतददक्षिणम्।
नित्यं देयानि राजेन्द्र गावः पृथ्वी सरस्वती।
दातारं तारयन्त्येते पाठ-वापन-दोहनैः १(×)॥

80. ब्रह्मवैवर्त्ते—

दानकाले तु देवत्वं प्रतिमादेः प्रकीर्त्तितम्।
धेनूनामपि धेनुत्वं श्रुत्युक्तं दानयोगतः॥
दातुर्वै दानकाले तु द्रव्यन्तादिति निश्चयः।
दानसम्बन्धि-विप्रेण द्रव्यमादाय गच्छता॥
तत्सर्व्वं विदुषा तेन विक्रेयं स्वेच्छया विभो।
कुटुम्बभरणं कार्य्यं धर्म्मकार्य्यञ्च सर्व्वशः॥

इति दानधर्म्माः॥

## (१३) अथ मूल्याध्यायो निरूप्यते।

वराटिकानां दशकद्वयन्तु सा काकिनी ताश्च पणश्चतस्रः
इत्यादि २(*)।
द्वात्रिंशत्पणिका गावश्चतुष्कार्षापणो वरः ३(+)॥
वृषे षट्कार्षापणका अष्टावनडुहि स्मृताः।
दश कार्षापणा धेनावश्वे पञ्चदशैव तु॥

---

१ (×) पाठ-वापन-दोहनैरित्यत्र—'दोह-वापन-पाठनै' रिति। 'एते' इत्यत्र एता इति च पाठः समुपलभ्यते।
एतानि चातिदानत्वेन व्यपदिष्टानि हेमाद्रौ।
तथाचाप्यत्रोक्तं "त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती"ति।

२ (*) एतच्च भास्करीयलीलावत्यामपि। विषये एतस्मिन् स्मृती, पुराणे, धर्मशास्त्रे, शिल्प-शास्त्रे, वैद्ये चापि प्रमाणम्। हेमाद्रौ पुष्कलानि प्रमाणानि समुद्धृतानि।
'माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु।
काकिणी तु चतुर्भागो माषस्य च पणस्य च' इति कात्यायनः।

३ (+) 'कार्षापणो दक्षिणस्यां दिशि रौप्यं प्रवर्तते।
पणैर्निबद्धः पूर्वस्यां षोडशैव पणस्तु' इति नारदः।
'चतुःकार्षापणीवर' इत्यत्र 'चतुष्कः पौराणिको मतः' इति पाठः समुपलभ्यते।

हिरण्ये कार्षापणकाः पणा नव तथाधिकाः ।
वस्त्रे कार्षापणश्छागेऽष्टौ पणा द्वादशाधिके ॥
वृषल्यामथ पञ्चाशन् मूल्यं कार्षापणाः स्मृताः ।
निष्के पञ्चाशदेव स्याद् गजे पञ्चशतानि च ॥
पञ्चकार्षापणाः प्रोक्ता दोलायां षड् रथे तथा ।
गृहेऽष्टौ कार्षापणकास्ताम्रे कार्षापणः स्मृतः ॥
ताम्रकर्षेऽपि चं पण इत्येषा मूल्यकल्पना १(+) ।
अधिकं कल्पयेन्मूल्यं नोनं वृत्तानुसारतः ॥
एतन्मूल्यं दक्षिणाविषये आवश्यकदाने मुल्यासम्भवे च ग्राह्यम् ।
अधमो ह्ययं पक्षः सति वित्ते न ग्रहणीयः २(×) ॥
निष्काः पञ्च च दातव्या धेनोः पञ्च पुराणिकाः ।
धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः ३(*) ॥
निष्कं निष्कार्द्धं पादं वा तदर्द्धार्द्धमथापि वा ।
तृतीयांशस्तु दातव्यः पञ्च कार्षापणानि वा ॥
त्रयः कार्षापणा यद्वा शक्तितो मूल्यकल्पना ।
निष्को दीनारः ४(†) ॥
दीनारस्तु भवेत् कर्षैः शतैः कार्षापणैस्तथा ५(‡) ।
दीनारो रौप्यकैरष्टाविंशत्या परिकीर्त्तितः ॥
सुवर्णसप्ततितमो भागो रौप्यक इष्यते ।
जाल-सूर्य्यमरीचिस्थं त्रसरेणु रजः स्मृतम् ॥
तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ।
गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः ॥

---

'इति च मूल्यकल्पना' पुस्तकान्तरे पाठः ।
'ग्रहणीयः' इति ग्रन्थान्तरे भिन्नः पाठः ।
प्रायश्चित्तप्रकरणे कृतावुक्तं—
'प्राजापत्यव्रताशक्तो धेनुं दद्यात् पयस्विनीम् ।
धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः' ।
'दीनारेऽपि च निष्कोऽस्त्री' इत्यमरः ।
'द्वात्रिंशत्सुवर्णः' इति मेदिनी ।
'द्वात्रिंशद्रत्तिकापरिमितं काञ्चनं दीनारः' इति भाष्यः ।
इति मानवे धर्मशास्त्रे, इतोऽप्यधिकोऽस्ति ।

कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोड़श ।
पलं सुवर्णाश्चत्वारः पलानि धरणं दश १(+) ॥
द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः ।
ते षोड़श स्याद्धरणं पुराणश्चैव राजतः ॥
कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः ।
धरणानि दश ज्ञेयः शतमानस्तु राजतः ॥
चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः २(×) ।

इति मूल्याध्यायः ॥

## (१४) अथ देयद्रव्यदैवतानि ।

—*—

### 81. विष्णुधर्म्मोत्तरे—

अभयं सर्व्वदैवत्यं भूमिर्वै विष्णुदेवता ।
कन्या दासस्तथादासी प्राजापत्याः प्रकीर्त्तिताः ३(*) ॥
प्राजापत्यो गजः प्रोक्तस्तुरगो यमदैवतः ।
तथा चैकशफं सर्व्वं कथितं यमदैवतम् ॥
महिषश्च तथा याम्य उष्ट्रो वै नैऋतो भवेत् ।
रौद्री धेनुर्विनिर्दिष्टा छागश्चाग्नेय उच्यते ॥
मेषन्तु वारुणं विद्याद्वराहो वैष्णवः स्मृतः ।
आरण्याः पशवः सर्व्वे कथिता वायुदैवताः ॥
जलाशयानि सर्व्वाणि वारिधानीं कमण्डलुम् ।
कुम्भश्च करकं चैव वारुणानि विनिर्दिशेत् ॥

---

१ (+) विष्णुगुप्तः-कौटिल्यः, एतन्मते 'दीनारो रौप्यकैरष्टाविंशत्या परिकीर्त्तितः ।
सुवर्णस्य सप्ततितमो भागो रौप्यक इष्यते' ।

२ (×) पुष्कलस्तु प्रमाणं हेमाद्रावस्ति ।

३ (*) वैधदानकाले कस्य देयद्रव्यस्य किं दैवतं शास्त्रोक्तमन्त्रेण कथ्यते ।
" सर्व्वेषां वस्तूनान्तत्तदभिमानि-देवताया—
अधिष्ठातृदेवताया वा विद्यमानत्वेन तत्तदुल्लेखः आवश्यकः,
" तथा च ब्रह्मसूत्रम्—"अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्" अ: [२. १. ५] इति ।
" श्रुतिश्चात्र 'अधिष्ठात्रः देवता विद्यन्ते' इति ।

समुद्रजानि रत्नानि वारुणानि तथैव च।
आग्नेयं कनकं प्रोक्तं सर्व्वलोहानि चाप्यथ॥

प्राजापत्यानि शस्यानि पक्वान्नमपि च द्विजाः १(+)।
ज्ञेयानि सर्व्वगन्धानि गान्धर्व्वाणि विचक्षणैः २(×)॥

वार्हस्पत्यं स्मृतं वासः सौम्या ज्ञेया रसास्तथा।
पक्षिणश्च तथा सर्व्वे वायव्याः परिकीर्त्तिताः॥

विद्या ब्राह्मी विनिर्द्दिष्टा विद्योपकरणानि च।
सारस्वतानि ज्ञेयानि पुस्तकादीनि पण्डितैः॥

सर्व्वेषां शिल्पभाण्डानां विश्वकर्म्मा तु दैवतम् ३(†)।
द्रुमाणामथ पुष्पाणां शाकानां हरितैः सह॥

फलानामपि सर्व्वेषां तथा ज्ञेयो वनस्पतिः।
मत्स्यमांसे विनिर्द्दिष्टे प्राजापत्ये तथैव च॥

छत्रं कृष्णाजिनं शय्यां रथमासनमेव च।
उपानहौ तथा यानं यच्चान्यत् प्राणवर्जितम् ४(‡)॥

उत्तानाङ्गिरसत्वेन प्रतिगृह्णीत मानवाः ५(§)।
शूरोपयोगि यत् सर्व्वं शस्त्रचर्म्मध्वजादिकम् ६(*)॥
रणोपकरणं सर्व्वं कथितं शक्रदैवतम् ७(०)।
गृह्णन्तु सर्व्वदैवत्यं यत्त्वनुक्तं द्विजोत्तमाः॥
तज्ज्ञेयं विष्णुदैवत्यं सर्व्वं वा विष्णुदैवतम्।
इति देयद्रव्यदेवतानि॥

---

पक्वान्नमपि 'चर्म्माणीति' हेमाद्रौ पाठः।
'ज्ञेयानि सर्व्वगन्धानि गान्धर्व्वाणि वै' इति हेमाद्रौ पाठः, परमेव समीचीनः गन्धशब्दस्य नियतपुंलिङ्गत्वात्।
'सर्व्वभाण्डाना'मिति हेमाद्रौ पाठः।
यानमित्यत्र 'यच्च'मिति क्वचित् पाठः।
'तनु-चाङ्गिरसत्वेन' इति हेमाद्रौ पाठः।
चर्म—चाप-धनु-तरवारि-खड्गि-पताकाध्वजादीनाम्।
'शस्त्रदैवत'मिति हेमाद्रौ पाठः।

# (१५) अथ देयप्रतिग्रह-स्थलम्।

—*—

82. प्रतिग्रहमाग्नेयेन प्रतिगृह्णीयात्।

आग्नेयस्तु देयद्रव्यस्य मध्यभागः १(+)॥

83. 'मध्य आग्नेय' इति श्रुतेः।

84. **कात्यायनः—**

कुशोपरि निविष्टेन तथा यज्ञोपवीतिना।
देयं प्रतिग्रहीतव्यमन्यथा विफलम्भवेत॥
ॐकारेण दद्यात् प्रतिगृह्णीयाच्च २(*)।
प्रणवो जगतां वीजं वेदानामादिरेव च॥
एष एव परं ब्रह्म पवित्रमयमुत्तमम्।
तस्मात् प्रणवमुच्चार्य्य कार्य्यौ दानप्रतिग्रहौ॥

85. इति स्कन्दपुराणोक्तेः।

86. **विष्णुधर्म्मोत्तरेऽपि—**

भूमेः प्रतिग्रहं कुर्य्याद्भूमिं कृत्वा प्रदक्षिणम्।
करे गृह्य तथा कन्यां दासदास्यौ तथा द्विजः ३(†)॥
प्रतिग्रहं स्वीकारम्।
करन्तु हृदि विन्यस्य धर्म्म्यो ज्ञेयः प्रतिग्रहः।
आरुह्य तु गजस्योक्तः कर्णे चाश्वस्य कीर्त्तितः॥
तथा चैकशफानान्तु सर्व्वेषामविशेषतः।
प्रतिगृह्णीत गां पुच्छे शृङ्गे कृष्णाजिनन्तथा॥
सामान्येनैकशफानां कर्णे प्रतिग्रह उक्तः, ये त्वेकशफाः

---

१ (+) ॐ स्वस्तीति वा यद्वचनाभि वदेदिति केचित् सूरयः।

,, दक्षिणहस्त इति हेमाद्रौ पाठः, मध्यमेव पाठः साधुः। अमरेणापि तथैवोक्तः।

२ (*) 'सर्व्वमन्त्रप्रयोगेषु ओमित्यादौ प्रयुज्यते।

तेन संपरिपूर्णानि यथोक्तानि भवन्ति हि' इति महर्षियाज्ञवल्क्यः।

३ (†) 'करे गृहीत्वा कन्यान्तु' इति हेमाद्रौ पाठः।

शृङ्गिणस्ताम् विशेषतः स्कन्धे प्रतिगृह्णीतेत्यर्थः ।
आरण्यापशवश्चान्ये पुच्छे ग्राह्या विचक्षणैः १(‡) ॥
प्रतिग्रहमथोष्ट्रस्य आरुह्य च तथा भवेत् २(×) ।
वीजानां मुष्टिमादाय रत्नान्यादाय सर्व्वतः ॥
वस्त्रं दशान्तादादद्यात् परिधायाथवा पुनः ।
आरुह्यौपानहौ यानमारुह्यैव तु पादुके ॥
ईशायान्तु रथो ग्राह्यश्छत्रं दण्डे च धारयेत् ।
आयुधानि समादाय तथामुच्य विभूषणम् ॥
वर्म्मध्वजौ तथा स्पृष्ट्वा प्रविश्य च तथा गृहम् ।
अवतीर्य्य च सर्व्वाणि जलस्थानानि वै द्विजाः ॥
द्रुमांश्च प्रतिगृह्णीयान्मूलेन्यस्तकरो द्विजः ।
छत्रं च चामरं मूले फलं संगृह्य गौरवात् ॥

87. परिशिष्टे—

प्रतिगृह्णीत गां पुच्छे कर्णे वा हस्तिनं करे ।
मूर्ध्नि दासीमजाश्चैव पृष्ठेऽश्वतरगर्दभौ ॥
अश्वं कर्णे शटे वापि अन्तमुद्दिश्य धारयेत् ।
शुचिर्वाप्यशुचिर्वापि दद्यादभयदक्षिणाम् ॥
शुचिनाऽशुचिना वापि ग्राह्या चाभयदक्षिणा ।
द्रव्यान्यन्यान्यथादाय स्पृष्ट्वा वा ब्राह्मणःपठेत् ॥
कोऽदादित्याद्यमुं मन्त्रं सर्व्वदानेष्वयं विधिः ३(*) ।
इति देयद्रव्यप्रतिग्रहस्थलम् ॥

## (१६) अथ दानदेशः ४(०) ।

—*—

उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षन्तद् भारतं नाम भारती यत्र सन्ततिः ॥

---

'चामरा' इत्यत्र कर्णगा इति हेमाद्रौ पाठः ।
'यानानां चाधिरोहणात्' ,, ,, ,, ।
मन्त्रोऽयं माध्यन्दिनः, शुक्लयजुः अः७ । ४८ मन्त्रः ।
मन्त्रापरिज्ञाने ॐ स्वस्तीति ब्रूयात् ।
देवीपुराणे,— 'सर्व्वे हिमाचलाः पुण्याः सर्व्वा नद्यः शुभप्रदाः ।
दान-स्नानोपवासादिफलदाः सततं नृणाम्' ॥

नवयोजनसाहस्रो विस्तारोऽस्य महामुने
कर्म्मभूमिरियं स्वर्गमपवर्गमपीच्छताम् ॥

४४. मनुः—

"सरस्वती-दृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तन्देवनिर्म्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥
आसमुद्रात्तु वै पूर्व्वादासमुद्रात्तु दक्षिणात् ।
तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं प्रचक्षते ॥
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञीयो देशो म्लेच्छदेशस्ततः परः १(†)
एषु दानं महापुण्यं संसार-भयनाशनम्" २(†) ।

इति दानदेशः ॥

## (१७) अथ दानकालः ।

—*—

अयनेविषुवे चैव चन्द्रसूर्य्यग्रहे तथा ।
अमायां पूर्णिमायाञ्च संक्रान्तौ हरिवासरे ॥
यथाविधि प्रदातव्यं वित्तशाठ्यं विना जनैः ३(*) ।

इति दानकालः ॥

---

—तथैव व्यासः,—
'गङ्गाद्वारे प्रयागे च अविमुक्ते च पुष्करे ।
नगरे चाट्टहासे च गङ्गासागरसङ्गमे ॥
कुरुक्षेत्रे गयायाञ्च तीर्थे चामरकण्टके ।
एवमादिषु तीर्थेषु दत्तमक्षयतामियात् ।
सर्व्वतीर्थमयी गङ्गा तत्र दत्तं महाफलम् ॥

१ (†) विष्णुः,— चातुर्व्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते ।
स म्लेच्छदेशो विज्ञेयः आर्य्यदेशस्ततः परः ॥

अपरा श्रुतिश्च,—

२ (‡) 'तीर्थे चायतने गोष्ठे कूपारामसरित्सु च ।
गृहे चाथ वने वापि तडागे रुचिरेऽथवा ।
महादानानि देयानि संसारभयभीरुणा' ॥

३ (*) मनुः,— 'ऋतुः प्रवर्त्तमानस्तु योऽनुकालेन वर्त्तते ।
न तु व्यस्तविकल्पस्य दुर्बलैर्विद्यते फलम्' ॥

## (१८) अथ दानप्रकारः संक्षेपेणोक्तः।

—*—

तत्रादौ विष्णुरोम् तत्सदद्य इत्याद्युच्चार्य्यामुकप्रवराद्यन्वितं भवन्तममुकदानसम्प्रदानत्वेन वृणे इति सङ्कल्प्य पुगीफलं १(×) ब्राह्मणहस्ते दत्त्वा उदङ्मुखो यजमानः प्राङ्मुखं ब्राह्मणं गन्धपुष्पवासोभूषणैरभ्यर्च्च्य देयञ्चालङ्कृत्य स्वप्रवराद्युच्चारणपूर्व्वकं ब्राह्मणाय दत्त्वा पूजयित्वा च तदाशिषो गृह्णीयात्।
ततो दानफलमीश्वराय समर्पयेत्।

इति दानसामान्यविधौ तत्प्रकारः॥

## (१९) दशदानद्रव्यपरिमाणम्।

—*—

89. **मदनरत्ने**—

तत्र गोमूल्यं सुवर्णनिष्कयो (रूप्ययो) र्निष्कं मुख्यम्। तदर्द्धं तदर्द्धं वा गौणम्। भूमिपरिमाणन्तु उत्तमपक्षे गोचर्म्ममात्रम्।

90. **तल्लक्षणन्तत्रैव**—

दशहस्तेन दण्डेन त्रिंशद्दण्डान्निवर्त्तनम् २(०)।
दश तान्येव गोचर्म्म दत्त्वा स्वर्गे महीयते। इत्युक्तम्।

---

१ (×) 'पुगीफल'मित्यत्र हरितकीफलं ग्राह्यमिति केचित्।
"हरीतकी फलं श्रेष्ठं न गुवाकं कदाचन"।
तदभावे कदली सङ्कल्पे विधिपूर्व्वकम्॥
सङ्कल्पपात्रमुक्तं भविष्ये-- 'सुतिलाम्रकदलीश्च काश्मर्य्यादिभिस्तथा।
संकल्पो नैव कर्त्तव्यो मन्मथेन कदाचन'।
गङ्गोदकोदुम्बरं पात्रं वारिपूर्णं गुणान्वितम्।
दर्भत्रयं साग्रमूलं फलपुष्पतिलान्वितम्'। इति तत्रैव।

२ (०) मत्स्यपुराणे तु चान्यथोक्तम्,—'दशहस्तेन दण्डेन त्रिंशद्दण्डान्निवर्त्तनम्।
त्रिभागहीनं गोचर्म्ममानमाह प्रजापतिः'॥
बृहस्पतिना तत्रैवमुक्तं मिताक्षरायामाचाराध्याये,—
'यत्किञ्चित् कुरुते पापं ज्ञानतोऽज्ञानतोऽपि वा।
अपि गोचर्म्ममात्रेण भूमिदानेन शुद्ध्यति'॥
अत्र पाठान्तरञ्च— 'सप्तहस्तेन दण्डेन त्रिंशद्दण्डैर्निवर्त्तनम्।
दश तान्येव गोचर्म्म दत्त्वा स्वर्गे महीयते'।

मध्यमपक्षे, दशहस्ताः समन्ततः ।

अधमपक्षे पञ्चहस्ताः समन्ततः ॥

एतद्दक्षिणा निष्कसुवर्णम् । तिलदानं तिलराशिदानम् । राशिपरिमाणञ्च पुरुषपरिमितम् । द्रोणमात्रं वा । द्रोणपरिमाणञ्च—

पलञ्च कुडवः प्रस्थ आढ़को द्रोण एव च ।

धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ।

पलपरिमाणञ्च—

मुष्टिरेकपलं स्मृतम् १(‡) ।

91. इति महार्णवनिबन्धानुसारेण ज्ञेयम् ॥

तथाच षट्पञ्चाशदधिकशतद्वयं मुष्टयो द्रोण इति ।

यद्वा पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तिताः ॥

इतिमते षोड़शसेरा अष्टादशसेरा वा तिला भवन्ति २ *) । तिलदानं-तिलपात्र-दानमिति केचित् ।

पात्रमानञ्च षोड़शपलानि । एतद्दक्षिणा माषचतुष्टयमितं सुवर्णम् । हिरण्य-प्रमाणमेकस्तोलः । तावत्येव दक्षिणा । अथवा रजतं दक्षिणा ।

हिरण्ये दीयमाने तु रजतं दक्षिणेष्यते ।

अन्यस्मिन् दीयमाणे तु रजतंदक्षिणेष्यते ३(+) ॥

92. इतिस्मृतेः ४(‡) ।

आज्यमुत्तमपक्षे षष्टिपलानि । मध्यमे चत्वारिंशत् । अधमे द्वादश । दक्षिणा सुवर्णमाषे । लवणमपि आज्यवत् । गुड़स्तद्द्विगुणो ज्ञेयः । दक्षिणा पूर्ववत् । धान्यं द्रोणपरिमितम् । तद्दक्षिणा यथाशक्ति । सूक्ष्ममष्टहस्तमात्रं वस्त्रम् । दक्षिणा पूर्ववत् । रूप्यमानं चत्वारस्तोलकाः । एकस्तोलको दक्षिणा ।

इति दशदेयद्रव्यपरिमाणम् ॥

---

१ (‡) मतान्तरेतु मुष्ट्यादीनां प्रमाणं यथा,—
'षड्मुष्टिर्भवेत् कुडिः कुडवरष्टौ च पुष्कलम् ।
पुष्कलानि च चत्वारि आढकः परिकीर्त्तितः ।
चतुराढको भवेद्द्रोणः खारी तस्य चतुष्टयम्' ।
अन्यत् परिमाणप्रमाणं भास्कराचार्य्यैः पाटीगणिताध्याये उक्तम् ।

२ (†) दानमहार्णवधृतं पैठर्य्यं: । सेरा—सेटकाया इति ।

" रजतं निष्कञ्च सुवर्णमिति पाठो बहुषु निबन्धेषु दृश्यते ।

३ (‡) "अग्न्यपत्यं दानानां सुवर्णं दक्षिणा स्मृता ।

४ (‡) सुवर्णे दीयमाने तु रजतं दक्षिणेष्यते" इत्यपि हेमाद्रौ ।

## (२०) अथ तुलापुरुषदानप्रयोगः १(*)।

—*—

### 93-94. हेमाद्रौ मत्स्यपुराणे—

शुभास्तत्राष्ट होतारो द्वारपालास्तथाष्ट वै।
अष्टौ तु जापकाः कार्य्या ब्राह्मणा वेदपारगाः।
हेमालङ्कारिणः कार्य्या द्विजा वै पञ्चविंशतिः।

अष्टौ ऋत्विजः, अष्टौ द्वारपालाः, अष्टौ जापकाः, एको गुरुरित्येवं पञ्चविंशतिर्वरणीयाः २(†)।

तत्र तुलापुरुषदानं करिष्यन्नादौ माङ्गं प्रायश्चित्तं कृत्वा कृतस्नानः परिहिताहत-वासा दर्भपाणिः प्रसन्नमनाः कुशोपहितपीठोपविष्ट आचम्य प्राणानायम्य देशकालादि संकीर्त्यामुककाम पापक्षयकामः श्रीलक्ष्मीनारायण प्रीतिकामो वा इत्येवाऽद्यामुक-प्रवरोऽमुकगोत्रोऽमुकपुत्रोऽमुकशर्म्माऽहममुकतुलापुरुषमहादानं करिष्ये इति (सङ्कल्प्य) प्रारिप्सित कर्म्मणोनिर्व्विघ्नेन परिसमाप्त्यर्थं गणेशपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं गोविन्दोमापतिविनायकादिपूजन-माचार्य्यादिवरणं मण्डपप्रतिष्ठादीनि च करिष्ये इति च सङ्कल्प्य गणेशपूजनादिनान्दीश्राद्धान्तं कृत्वा (ततो) गोविन्दमुमापतिं विनायकञ्च व्याहृतिभिस्तत्तल्लिङ्गकमन्त्रैर्वा—

---

१ (*) श्रीमत् नारायणभट्टकंबाचस्पतिभिः तुलादानपद्धतिग्रन्थे तुलापुरुषदान प्रयोगादयः पुष्कलत्वेन उक्ताः। महादानेषु आद्यं दानं तुलापुरुषाख्यम्। तथाहि 'आद्यन्तु सर्व्वदानानां तुलापुरुषसंज्ञितम्' इति मात्स्ये। अपरं दानसागराख्यसन्दर्भे चास्ति।

२ (†) 'शुभास्तत्राष्टहोतारः द्वारपालास्तथाष्ट वै।
अष्टौतु जापकाः कार्य्याः ब्राह्मणा वेदपारगाः।
हेमालङ्कारिणः कार्य्याः द्विजा वै पञ्चविंशतिः' इति मात्स्ये।
सत्यां शक्तौतु अन्ये सदस्याधनुवादकादयो वरणीयाः।
'गोप्यानि यानि पुण्यानि महादानानि षोडश।
तानि ते संप्रवक्ष्यामि यथा वदनुपूर्व्वशः।
तुलापुरुषदानोऽयं येषामाद्योऽभिधीयते'। इति मात्स्ये।

आवाहनादि षोड़शोपचारैः सम्पूज्य विप्रप्रभृति ब्राह्मणान् पूजयित्वा चामुककामः श्रोवा अद्य करिष्यमाणेऽमुकतुलापुरुषमहादाने भवन्तो मामनुजानन्तु इति बद्धाञ्जलिः सविनयस्तान् विज्ञापयेत् ।

ते च ॐ कुर्व्वन्त्विति १(०) सहर्षं ब्रूयुः। ततो यथोक्तं गुर्व्वादिवरणं कृत्वा तांश्च सम्पूज्य यथाविधि गुर्व्वादिकर्म्मं कुर्व्वन्तु इति बद्धाञ्जलि स्तान् प्रार्थयेत्। ततस्ते यथाज्ञानं करवामेति प्रतिब्रूयुः। तत आचार्य्य ऋत्विग्भिः सह मण्डपप्रतिष्ठां कृत्वा महावेद्यां षोड़शारं सर्व्वतोभद्रं वा विलिख्य पुष्पैरवाकिरेत्। ततस्तदुपरि चित्रं वितानं बन्धीयात।

तत ईशानकोणस्थितग्रहवेद्यां सर्व्वतोभद्रमण्डलं विरचय्य तदुपरि फलपुष्पादिसहितं चित्रं वितानं बध्नीयात्। ततोमहावेद्याश्चतुर्दिक्षु पूर्व्वस्यामेव वा कुण्डचतुष्टये वा स्थण्डिलचतुष्टये वा कुण्डेवा स्थण्डिले वा अग्निं प्रणीय ग्रहवेद्यां सर्व्वतोभद्रदेवताः सम्पूज्य नवग्रहमखोक्तविधिना२(:) नवग्रहान् सर्व्वान् नवाधिदेवता-नवप्रत्यधिदेवता गणपत्यादिपञ्चक मिन्द्रादिदशलोकपालांश्चावाह्य—

## 95. मातृस्थे—

ध्रुवोऽध्वरस्तथासोम आपश्चैवानिलोऽनलः ३(*)।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः।
इत्यष्टवसूनिन्द्रेशानयोर्मध्ये स्थापयेत्।

---

१ (०) कुर्व्वन्त्वित्यत्र करोत्विति पाठः। समीचीनतया प्रतिभाति विज्ञापकस्य यजमानस्यैकत्वेन क्रियाया बहुवचनान्तत्वानुपपत्तेः। तैच प्रार्थित विप्रादयः।

२ (:) मातृस्थे नवग्रहमखः सम्यगुवर्णितोऽस्ति। तत्र वेदोक्तमन्त्रैव साधिदैवतप्रत्यधिदैवत-नवग्रहान् ग्रहमखस्थे आवाह्य प्रत्येकेन स-स्वरूप गन्ध-माल्य-ध्वज-वसन-बलि-धूप-प्रदीपादिभिः समर्च्य तपद्रोत्यनुसारेण होमो विधेयः। विनायकादिपञ्चदेवानामिन्द्रादि-दशलोकपालानाञ्च वेदोक्तमन्त्रैः पूजन-हवने कुर्य्यात्।

३ (*) ध्रुवाद्यष्टौ वसवः। आदित्याद्यादयदेवताः।

96. **पुराणे—**

धाताऽर्य्यमा च मित्रश्च वरुणोऽंशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्ज्जन्यो दशमः स्मृतः ।
ततस्त्वष्टा ततो विष्णु रजघन्योजघन्यजः ।
इति द्वादशादित्यानिन्द्राग्निमध्ये आवाहयेत् ।

97. **पुराणे—**

वीरभद्रश्च शम्भुश्च गिरीशश्च महायशाः ।
अजैकपादहिर्ब्बुध्न्यः पिनाकी चापराजितः ।
भुवनाधीश्वरश्चैव कपाली च विशाम्पतिः ।
स्थाणुर्भगश्च भगवान् रुद्रा एकादश स्मृताः १(†) ।
इत्येकादश रुद्रानग्नियममध्ये आवाहयेत् ।

98. **भविष्यपुराणे—**

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ।
धृतिः पुष्टिः तथा तुष्टिरात्मनः कुलदेवता २(०) ।
इति षोडशमातृर्यमनिर्ऋतिमध्ये आवाहयेत् ।
पुनर्गणपतिन्तन्मन्त्रेण नाममन्त्रेण वा निर्ऋतिवरुणमध्ये आवाहयेत् ।

99 **वायुपुराणे—**

आवहः प्रवहश्चैव उद्वहः संवहस्तथा ।
परावहश्च विवहस्तथा परिवहोऽनिलाः ३(:) ।
इति सप्त मरुतो वरुणवायुमध्ये आवाहयेत् ।

---

रुद्रा एकादश प्रोक्ताः । हेमाद्रौ दानखण्डे पृथक्त्वं वर्णितमस्ति ।
अत्र 'मातान्या लोकमातरः' इति हेमाद्रौ पाठः ।
'धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह' इत्यपि पाठान्तरम् ।
तदाह शातातपः—
'नानिष्ट्वा पितृयज्ञेन वैदिकं किञ्चिदाचरेत् ।
अत्रापि मातरः पूर्वं पूजनीयाः प्रयत्नतः' इति ।
अतएव-'पूज्याविनिःश्वासाचार्या करद्वामयपावकः' इति च ।
सप्तवायुनामित्यौनपञ्चाशद्वायुनामाचीनैषी हेमाद्रावस्ति ।

ततो ब्रह्माणं विष्णुं रुद्रं अर्कं वनस्पतिं चेति पञ्चदेवतास्तत्तन्मन्त्रैर्वायुसोम-मध्ये आवाहयेत्। एवं द्व्युत्तरं शतं देवान् प्रतिष्ठामन्त्रेण प्रतिष्ठाप्य अन्वाधानं कुर्य्यात्।

तत्र प्रजापतिमिन्द्रमग्निं सोमं आज्येनात्र यथा प्रधानं नवग्रहान् नवाधिदेवान् नव च प्रत्यधिदेवान् विनायकादिपञ्चकमिन्द्रादि दशलोकपालान् अष्टवसून् द्वादशादित्यान् एकादशरुद्रान् सप्त मरुतो ब्रह्मविष्णुरुद्रार्कवनस्पतीन् अष्टोत्तरशतसंख्याभिर्द्वादशसंख्या-भिर्वा समिच्चरुतिलाज्यादियथासम्भवद्रव्येण शेषेण स्विष्टकृतमित्याद्युक्त्वा एता अङ्गप्रधान देवताः साङ्गोपाङ्गेन कर्म्मणा सद्योयक्ष्ये इति। यजमानान्वारब्ध आचार्य्यो यजमान एव वा अन्वादाय ब्रह्मोपासनाद्याघाराद्याज्यभागान्ते तत्तद्द्रव्येण यथोक्तसंख्यया सूर्य्यादिपञ्चाशीतिदेवेभ्यस्तत्तन्मन्त्रै ऋत्विजश्चतुःशाखिनः स्वगृह्योक्तविधिना १(†) जुहुयुः।

ततो वस्वादित्यरुद्रगौरीमरुतां मन्त्रानुरोधेन समुदायापन्नानामेक एव होमः कार्य्यः पृथक्मन्त्राभावात्। ते च मन्त्रा यजुर्वेदोक्ताः—

100. वसो पवित्रम् २(०)
101. नमस्ते रुद्र ३(+)
102. श्रीश्च ते ४(×)
103. मरुतो यस्य ५(S)

एतैर्म्मन्त्रैरथवा प्रणवादि चतुर्थ्यन्तैः स्वाहान्तं ध्रुवाय अध्वराय इत्यादिभि-र्जुहुयुः ६(†)।

---

१ (†) आश्वलायन-पारस्कर-गोभिलादि-स्व स्व-गृह्योक्तविधानेनेति।

२ (०) वसोः पवित्रमसि द्यौरसि पृथिव्यसि मातरिश्वनो घर्म्मोऽसि विश्वधा असि
परमेण धाम्ना दृꣳहस्व माह्वार्मा ते यज्ञपतिर्ह्वार्षीत्॥ अ: १, म: २ यजुः।

३ (+) नमस्ते रुद्र मन्यव उतोऽत इषवे नमः।
बाहुभ्यामुत ते नमः॥ अ: १६ म: १ यजुः। अत्र रुद्रस्यान्येऽपि वेदोक्त मन्त्राःसन्ति।

४ (×) श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्।
इष्णन्निषाणामुं म इषाण सर्व्वलोकं म इषाण॥ अ: ३१, म: २२, यजुः।

५ (S) मरुतो यस्य हि क्षये पाथा दिवो विमहसः।
स सुगोपातमो जनः॥ अ: ८, म: ३१, यजुः।

६ (†) 'प्रणवादिर्नमोऽन्तश्च चतुर्थ्यन्तश्च सत्तमः।
देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्त्तितः' इति गारुडे।
" " ओंकारादि समायुक्तं नमस्कारान्त कीर्त्तितम्।
स्वनाम सर्व्वसत्त्वानां मन्त्र इत्यभिधीयते' इति राघवभट्टीये।

होमे क्रियमाणे द्वारजापकाः स्वशाखोक्तां शान्तिं पठेयुः ।
ततदैवतान्यपि सूक्तानि पठेयुः १(‡) ।
ततोऽग्नि-महादिपूजा स्विष्टकृमवाहुतयश्च ।
तत इन्द्रादिभ्यो बलिदानं कुर्य्या देतैर्मन्त्रैराचार्य्यः ।
ते च मन्त्रा यथा—
एह्येहि सर्व्वामरसिद्ध (संघैः) साध्यैरभिष्टुतो वज्रधरामरेश ।
संवीज्यमानोऽप्सरसां गणेन, रक्षाध्वरं नो भगवन्नमस्ते ॥
ॐ इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं (सदीपं) बलिं समर्पयामि ।
एह्येहि सर्व्वामरहव्यवाह, मुनिप्रवीरै २(ऽ) रभितोऽभिजुष्ट ।
तेजोवता लोकगणेन सार्द्धम्, ममाध्वरं पाहि कवे नमस्ते ।
अग्नये साङ्गायेत्यादि पूर्व्ववत् ।
ॐ एह्येहि वैवस्वत धर्म्मराज सर्व्वामरैरर्चित धर्म्ममूर्त्ते ।
शुभाशुभानन्दशुचामधीश शिवाय नः पाहि मखं नमस्ते ॥
यमाय इत्यादि पूर्व्ववत् ।
ॐ एह्येहि रक्षोगणनायक त्वं विशाल-वेताल पिशाचसंघैः ।
ममाध्वरं पाहि पिशाचनाथ ३(०) लोकेश्वर त्वं भगवन्नमस्ते ॥
निर्ऋतये इत्यादि पूर्व्वत् ।
ॐ एह्येहि यादोगणवारिधीनां गणेन पर्ज्जन्य महाप्सरोभिः ।
विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान् भगवन्नमस्ते ॥
ॐ वरुणाये त्यादि पूर्व्ववत् ।
ॐ एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढ़ः सह सिद्धसङ्घैः ।
प्राणाधिपः कालकवेः सहायः गृहाण पूजां भगवन्नमस्ते ॥
ॐ वायवे इत्यादि पूर्व्ववत्
ॐ एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् ।
सर्व्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥

---

चतुर्वेदीक्तशाख-पाठ्य-सूक्तानि तत्रादानादि पद्धतिषु
लिखितानि सन्ति ततोऽनुसन्धेयानि ।
'प्रवीरै' रित्यत्र प्रवर्य्यैरिति द्वयीनपद्धतीपाठः ।
'भूताधिनाथ' इति गङ्गापुत्रपद्धतीपाठः ।
अपरमपि एतत् पद्धति वर्ज इति ।

ॐ सोमायेत्यादि पूर्व्ववत् ।

ॐ एह्येहि विश्वेश्वर नस्त्रिशूल कपालखट्वाङ्गधरेण सार्द्धम् ।

लोकेश-भूतेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते ॥

ॐ ईशानायेत्यादि पूर्व्ववत् ।

निर्ऋतिवरुणयोर्मध्ये—

ॐ एह्येहि पातालधराधरेन्द्र नागाङ्गनाकिन्नरगीयमानः ।

यक्षोरगेन्द्रामरसिद्धसङ्घै रनन्त रक्षाध्वरमस्मदीयम् ॥

ॐ अनन्तायेत्यादि पूर्व्ववत् ।

इन्द्रेशानयोर्मध्ये—

ॐ एह्येहि सर्व्वाधिप देववर्य्य लोकेश सार्द्धं पितृदेवताभिः ।

सर्व्वस्य धातास्यमितप्रभावो विशाध्वरं नः सततं शिवाय ॥

ॐ ब्रह्मणे इत्यादि पूर्व्ववत् ।

ततः पूर्व्वस्यान्दिशि उपलिप्य कुशानास्तीर्य्य च बद्धाञ्जलिः—

त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।

ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्व्वन्तु तानि मे ॥

देवदानवगन्धर्व्वा यक्षराक्षसपन्नगाः ।

ऋषयो मुनयो गावो देवमातर एव च ॥

एते ममाध्वरे रक्षां प्रकुर्व्वन्तु मुदान्विताः ।

ब्रह्मा विष्णुश्च रुद्रश्च क्षेत्रपालगणैः सह ।

रक्षन्तु मण्डपं सर्व्वे घ्नन्तु रक्षांसि सर्व्वतः १(०) ॥

एतानावाह्य त्रैलोक्यस्थेभ्यः स्थावरेभ्यो ( जङ्गमेभ्यश्च ) भूतेभ्यो बलिं समर्पयामि इत्येवं प्रयोगेण देवमात्रन्तं सार्व्वभौतिकं बलिन्दत्वा आचम्य भूमिं स्पृशेत्—

104. **तत्र मन्त्रः—**

भूमिर्भूमिमगान्माता माता मातरमप्यगात् ।

---

(१) 'इत्यावाह्य सुरान्दद्याद्बलिन्भूमौ हैमभूषणम् ।
कुम्भजानि च सूपानि हैमानि कटकानि च ।
यवाङ्कुरीयविधानि नानाविध भवनानि च ।
विमुखं गुरवे दद्याद्यथाशक्त्यादिकम्'
इतिहेमाद्रावधाधिकः पाठोऽस्ति ।

ततो यथोक्त प्रकारेण तोरणस्पर्शनं द्वारपूजनञ्च कृत्वा बलीञ्च दत्त्वा मण्डपस्तम्भेषु सर्व्वेभ्यो देवेभ्यो नमः। वंशेषु किन्नरेभ्यो नमः। पृष्ठे पन्नगेभ्यो नमः। इति स्तम्भपूजनम्।

105. **ततो ध्वजपूजनम्—**

कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः।
शङ्कुकर्णः सर्व्वनेत्रः सुमुखः सुप्रतिष्ठितः॥
ब्रह्मा नागश्च पूर्व्वादि दशैते ध्वजनायकाः।

ततश्चैवं प्रयोगः। कुमुदसहिताय पूर्व्वध्वजाय नमो गन्धं समर्पयामि इति पञ्चोपचारैः पूजयेत्॥

कुमुदाक्षसहिताय आग्नेयध्वजाय नमो गन्धं समर्पयामि।
पुण्डरीकसहिताय दक्षिणध्वजाय नमो गन्धं समर्पयामि॥
वामनसहिताय नैर्ऋतध्वजाय नमो गन्धं समर्पयामि।
शङ्कुकर्णसहिताय पश्चिमध्वजाय नमो गन्धं समर्पयामि॥
सर्व्वनेत्रसहिताय वायव्यध्वजाय नमो गन्धं समर्पयामि।
सुमुखसहितायोत्तरध्वजाय नमो गन्धं समर्पयामि॥
सुप्रतिष्ठितसहिताय ऐशान्यध्वजाय नमो गन्धं समर्पयामि।
ब्रह्मसहिताय ऊर्द्ध्वदिग्ध्वजाय नमो गन्धं समर्पयामि॥
नागसहिताय अधोदिग्ध्वजाय नमो गन्धं समर्पयामि।

ततः साचार्य्य ऋत्विग् आचान्तो यजमानो मध्यवेदामुपविश्य मण्डपोपरि यथोक्तलक्षणं तुलादण्डं दक्षिणोत्तरायतं१(†) स्थापयित्वा दक्षिणप्रान्तबन्धादारभ्य तत्तदधिष्ठितदेवताः पूजयेत्॥

106. **ताश्च यथा,—विश्वकर्म्मोक्ते—**२(‡)

ईशः शशी मारुतरुद्रसूर्य्याः, स्यादिश्वकर्म्मागुरुरग्निरोऽग्नी।
प्रजापतिर्व्विश्वजगद्विधाता, पर्ज्जन्यशम्भू पितृदेवताश्च॥
सौम्यश्च धर्म्मामरराजमश्वि-जलेशमित्रावरुणौ मरुद्गणाः।
धनेश-गन्धर्व्व-जलेश-विष्णु-रेताश्चतुर्व्विंशतिरेव देवताः॥

---

१(†) तुलादण्डकाष्ठतन्मानादि निर्म्माणादिच सर्व्वं हेमाद्रौ वर्णितमस्ति।
" एवमेव तुलादानपद्धतौ च विद्यते।
" विश्वकर्म्मणाप्युक्तम् यथा—
२(‡) विश्वकर्म्म-कृत वास्तुशास्त्रे निम्नवर्णा दौष।

स्यात् पञ्चविंशः पुरुषः पुराणो यस्तोल्यमानस्तुलया महत्या १(‡) । अत्राङ्गिरोऽग्न्योः पर्ज्जन्यशम्भ्वोर्मित्रावरुणयोश्च मिलितयोरेव देवतात्वम् । एतासां लक्षणानि आकरे ज्ञेयानि । गोविन्दप्रतिमा तुलामध्येमौक्तिकस्रजा सुवर्णशृङ्खलया वा द्वादशाङ्गुलया अवलम्बनीया । यथा तुलास्थितः कर्त्ता तन्मुखं पश्यति । अतएव गोविन्दप्रतिमा स्थूला कार्य्या । हस्तधारणार्थं सूर्य्यधर्म्मराजप्रतिमाद्वयं कार्य्यम् । नेति केचित् । एता देवतास्तासु तासु प्रतिमासु आवाह्य अग्न्युत्तारणं कृत्वा प्रतिष्ठाप्य नाममन्त्रैः सम्पूज्य तुलादण्डस्थचतुर्व्विंशतिधातुबन्धे यथागाढं पौराणैर्वैदिकैश्च मन्त्रैः स्थापयेत् ।

107. **ते च मन्त्राः—**

पञ्चवक्त्र वृषारूढ़ प्रतिवक्त्रं त्रिलोचन ।
कपालशूलखट्वाङ्गिन् चन्द्रमौले सदाशिव ॥
आगच्छभगवन्नीशतुलाबन्धमलङ्कुरु ।
तमीशानमिति २(:) ॥
ॐ भूर्भुवः स्वः ईशानं स्थापयामि ।
अत्रिपुत्र जगत्प्राण यमुनाविषयोद्भव ॥
दशाश्ववाहन श्वेत गदापाणे वरप्रद ।
आगच्छ भगवंश्चन्द्र तुलाबन्धमलङ्कुरु ॥
सोमो धेनुम् ३(*) ।
ॐ भूर्भुवः स्वः सोमं स्थापयामि ॥
मृगारूढ़ महाबाहो मारुत त्वं सदागते ।
ध्वजहस्त महाकाय प्राणरूप महाबल ॥
आगच्छ भगवन् वायो तुलाबन्धमलङ्कुरु ।
वायो ये ते ४(†) ॥

---

१ (‡) 'महात्मा' इति भिन्नः पाठः ।

२ (:) तमीशानञ्जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम् ।
पूषा नो यथा वेदसामसद्‌वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ अ: २५, म: १८ यजुः ।

३ (*) सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति ।
सादन्यं विदथ्यं सभेयं पितृश्रवणं योददाशदस्मै ॥ अ: १८, म: २१ यजुः ।

४ (†) वायो ये ते सहस्रिणो रथासस्तेभिरागहि ।
नियुत्वान् सोमपीतये । अ:, म:, २७ । १२ यजुः ।

ॐ भूर्भुवः स्वः वायुं स्थापयामि।

वृषारूढ़ महादिव्य व्यक्ताव्यक्त स्वरूपधृक्॥

नागहार महाकाय सृष्टिसंहारकारक।

आगच्छ भगवनुद्र तुलाबन्धमलङ्कुरु १(§)॥ इमा रुद्राय २(*)।

ॐ भूर्भुवः स्वः रुद्रं स्थापयामि।

पद्मासनपद्महस्त सिन्दूरारुण स प्रभ॥

रथारूढ़ महाबाहो काश्यपेयमहाद्युते।

आगच्छ भगवन् सूर्य्य तुलाबन्धमलङ्कुरु॥

ॐ षट्सूर्य्य ३(*)—

ॐ भू र्भुवः स्वरादित्यं स्थापयामि।

दंशपाणेमहावीर सुचित्रकर्म्मकारक॥

विश्वकृद् विश्वधृक्त्वं रशनामानदण्डधृक्।

ॐ विश्वकर्म्मन् हविषा ४(†)—

ॐ भूर्भुवः स्व विंश्वकर्म्माणं स्थापयामि।

दण्डाक्षसूत्रवरद कमण्डलुधर प्रभो॥

चतुर्भुजहयारूढ़ पीताम्बरबृहस्पते।

वाचस्पते समागच्छ तुलादण्डमलङ्कुरु॥

ॐ बृहस्पते अति ५(‖)—

ॐ भूर्भुवः स्वर्बृहस्पतिं स्थापयामि।

कमण्डलुश्च शक्तिश्च यष्टिं दर्भमयींक्रमात्॥

---

१ (§) 'आगच्छ भगवन्नर्क यज्ञेस्मिन् सन्निधिं कुरु' इति तुलादानपद्धतौ पाठः।

२ (*) इमा रुद्रायतव(प)से कपर्दिने क्षयद्वीराय प्रभरामहे मतीः।
यथाशमसद्द्विपदे चतुष्पदे विश्वंपुष्टं ग्रामेऽअस्मिन्ननातुरम्। अ: १६, म: ४८ यजुः।

३ (*) षट् सूर्य्यस्य श्रवसा महाँ२। असि सत्रादेवमहाँ२। असि। महादेवानाम सूर्य्यः
पुरोहितोविभु ज्योतिरदाभ्यम्॥ अ ३३, म: ४० यजुः।

४ (†) विश्वकर्म्मन् हविषा वावृधानः स्वयंयजस्व पृथिवी मुतद्याम्।
मुह्यन्त्वन्ये अभितः सपत्ना इहास्माकं मघवा सूरिरस्तु॥ अ १७, २२ म:, यजुः।

५ (‖) बृहस्पते अतियदर्य्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु।
यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्॥
उपयामगृहीतोऽसि बृहस्पतये त्वा। एषतेयोनिर्बृहस्पतये त्वा। अ: २६, म: ३ यजुः।

कल्यमङ्गिरोनाम कराग्राभ्यां समन्ततः ।
आगच्छ भगवन् विप्र तुलादण्डमलङ्कुरु ॥

ॐ त्वमग्ने प्रथमो अङ्गिराः १(×)—

प्रणेयश्चाग्निनामाच कल्यं श्रजपास्रजम् ।
शक्तिं च पुस्तकञ्चैव क्रमदेव कमण्डलुम् ।
आगच्छ भगवन्नग्ने तुलादण्डमलङ्कुरु ॥

ॐ अग्निं दूतम् २(S)—

ॐ भूर्भुवः स्वरङ्गिरोग्नी स्थापयामि ।
यज्ञोपवीती हंसस्थ एकवक्त्रश्चतुर्म्मुखः ॥
प्रजापते समागच्छतुलादण्डमलङ्कुरु ।
अक्षस्रुचं स्रुवं धत्ते कुण्डिकाञ्च प्रजापतिः ॥

ॐ प्रजापते न ३(‡)—

ॐ भूर्भुवः स्वः प्रजापतिं स्थापयामि ।
शुभ्रवर्णा महाकाया दिव्याभरण भूषिताः ॥
विश्वेदेवाः समायान्त्वलङ्कुरुध्वं तुलां शुभाम् ।

विश्वेदेवा सः ४(०)—

ॐ भूर्भुवः स्वर्व्विश्वान् देवान् स्थापयामि ।
हंसारूढो महाबाहु रेकवक्त्र श्चतुर्भुजः ॥
विष्टरं स्रक्स्रुवं धत्ते ह्यक्षमालाञ्च कुण्डिकाम् ।
जगद्विधातरागच्छ तुलादण्डमलङ्कुरु ।

---

१ (×) त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥ अ ३४, मः १२ यजुः ।

२ (S) अग्निं दूतं वृणीमहे होतारं विश्ववेदसं । अस्य यज्ञस्य सुक्रतुम् ॥
( अग्निं दूतं पुरोदधे हव्यवाह मुपब्रुवे ॥ देवाँ २॥ आसादयादिह )
अ २२, मः १७, यजुः ।

३ (‡) प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ अ १०, मः २० यजुः ।

४ (०) विश्वेदेवास आगत शृणुता म इमं हवम् । एदं बर्हिर्निषीदत ।
अ १४, मः १, यजुः

विश्वकर्म्मा विमनाः १(।)—

ॐ भूर्भुवः स्वर्जगद्विधातारं स्थापयामि ।
पर्ज्जन्यञ्च महाकारं गजवक्त्र त्रयान्वितम् ॥
योधत्ते सर्व्वजीवानां वरं बीजञ्च शङ्खकम् ।
कुठारञ्च पयोजञ्च चिन्तारत्नं महाशुचिः ॥
पाशं चक्रं किशलयं कुण्डञ्च दशभिः करैः ।
एतल्लक्षणसम्पन्नं तुलाबन्धे निवेशयेत ॥

शन्नोवातः पवताम् २(+)—

पञ्चवक्त्रं वृषारूढं प्रतिवक्त्रं त्रिलोचनम् ।
कराल शूल खट्वाङ्गं शम्भुं खण्डेन्दु भूषितम् ॥
एतल्लक्षणसम्पन्नं तुलाबन्धे निवेशयेत ।

नमः शम्भवाय ३(×)—

ॐ भूर्भुवः स्वः पर्ज्जन्यशम्भू स्थापयामि ।
कुशविस्त(ष्ट)र संयुक्तं पितरं पिण्डपात्रिणम् ।
पितरं तं समावाह्य तुलाबन्धे निवेशयेन ॥

नमोवः पितरोरसाय ४(s)—

ॐ भूर्भुवः स्वः पितॄण् स्थापयामि ।
दशाश्व वाहनं सौम्यं गदापाणिं वरप्रदम् ।
उक्तलक्षणकं सौम्यं तुलाबन्धे निवेशयेत ॥

---

१(।) विश्वकर्म्माविमना आद्विहाया धाताविधातापरमोत सन्दृक् ।
तेषामिष्टानि समिषामदन्ति । यत्रासप्तऋषीन्पर एकमाहुः । अ १७, मः २६, यजुः ।

२ (+) शन्नोवातः पवतां शन्नस्तपतु सूर्य्यः ।
शन्नः कनिक्रदद्देवो: पर्ज्जन्योऽभिवर्षतु । अ ३६, मः १०, यजुः ।

३ (×) नमः शम्भवायच मयो भवायच नमः शङ्करायच मयस्करायच ।
नमः शिवाय च शिवतरायच । अ १६, मः ४१, यजुः शतरुद्री ।

४ (s) नमोवः पितरो रसाय । नमोवः पितरः शोषाय ।
नमोवः पितरो जीवाय । नमोवः पितरः स्वधायै ।
नमोवः पितरो घोराय । नमोवः पितरोमन्यवे ।
नमोवः पितरः पितरो नमोवः । अ २, मः ३२, यजुः ।

उद्बुध्यस्वाग्ने १(‡)— ॐ भूर्भुवः स्वः सौम्यं स्थापयामि ।
चतुर्वक्त्रं चतुष्पादं चतुर्बाहुं सिताम्बरम् ॥
सर्व्वलक्षणसम्पन्नं श्वेतं धर्म्मं विचिन्तयेत् ।
दक्षिणेचाक्षमालाच तस्य वामेतु पुस्तकम् ॥
उक्त लक्षणकं धर्म्मं तुलाबन्धे विचिन्तयेत् ।

पद्भ्यां जङ्घाभ्याम् २(०)—
ॐ भूर्भुवः स्वः धर्म्मं स्थापयामि ।
चतुर्द्दन्त गजारूढं वज्रहस्तं पुरन्दरम् ॥
शचीपतिं वृत्रहनं सहस्रनयनोज्ज्वलम् ।
उक्त लक्षणकं शक्रं तुलाबन्धे निवेशयेत् ॥

त्रातारमिन्द्रम् ३(×)—
ॐ भूर्भुवः स्वः सुरराजं स्थापयामि ।
तरुणौ देवभिषजौ स्वश्वारूढौ महाबलौ ॥
तयो रोषधयः कार्य्या दिव्या दक्षिणहस्तयोः ।
वामयोः पुस्तके कार्य्ये दर्शनीयतमाविमौ ॥
उक्तलक्षणसम्पन्नौ तुलाबन्धे निवेशयेत् ।

यावांकशा ४(†) ।
ॐभूर्भुवः स्वः अश्विनौ स्थापयामि ।
वरुणं यादसामीशं लोकेशं पाशपाणिनम् ॥
उक्तलक्षणकं देवं तुलाबन्धे निवेशयेत् ।

तत्त्वा यामि ५(*)—
ॐ भूर्भुवः स्ववरुणं स्थापयामि ।
पद्मपाणिं तथा मित्रं कमलासनसंस्थितम् ॥

---

१ (‡) उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते संसृजेथामयञ्च ।
अस्मिन् सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत । अ १५, मः ५४, यजुः ।

२ (०) जङ्घाभ्यां पद्भ्यां धर्म्मोऽसि विशिराजा प्रतिष्ठितः ।

३ (×) त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम् ।
ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्तिनोमघवा धात्विन्द्रः । अ २०, मः ५ यजुः ।

४ (†) यावांकशा मधुमत्यश्विना सूनृतावती तयायज्ञं मिमिक्षतम् । उपयामगृहीतोऽस्यश्विभ्यांत्वा ।
एषते योनि र्माध्वीभ्यांत्वा । अ ११, मः ७, यजुः ।

५ (*) तत्त्वा यामि ब्रह्मणावन्दमान स्तदाशास्ते यजमानोहविर्भिः ।
अहेडमानो वरुणेहबोध्युरुशंसमानआयुः प्रमोषी । अ १८, मः ४९, यजुः ।

द्विभुजं श्वेतमूर्त्तिश्च सर्व्वभूतहिते रतम्।
वरुणं सरितामीशं लोकेशं पाशपाणिनम्॥
मित्रावरुणकौ देवौ तुलाबन्धे निवेदयेत्।

अयं वा मित्रावरुणा १(S)—

ॐ भूर्भुवः स्वर्मित्रावरुणौ स्थापयामि।
इन्द्रेण सप्तधा च्छिन्नं दितेःपुत्रं मरुद्गणम्॥
महावीर्य्यं महाबाहुं तुलाबन्धे निवेशयेत्।

मरुतोयस्य २(*)—

ॐ भूर्भुवः स्वर्मरुद्गणं स्थापयामि।
नरयुक्त विमानस्थं कुवेरं चोत्तरेश्वरम्॥
निधीनाञ्च पतिं श्रेष्ठं राज-राजं महाबलम्।
उक्तलक्षणसम्पन्नं तुलाबन्धे निवेशयेत्॥

वयं सोम ३(०)—

ॐ भूर्भुवः स्वर्धनेशं स्थापयामि।
वरदो भक्तलोकानां किरीटी कुण्डली गदी॥
गन्धर्व्वः पुरुपोध्येयोवीणावाद्यरतः सदा।
एवं गन्धर्व्वकं देवं तुलाबन्धे निवेशयेत्॥

यमेन दत्तम् ४(†)—

ॐ भूर्भुवः स्वर्गन्धर्व्वं स्थापयामि।
जलेशं यादसामीशं पाशपाणिं महाबलम्।
उक्तलक्षणकं देवं तुलाबन्धे निवेशयेत्॥

इमं मे वरुण ५(‡)—

ॐ भूर्भुवः स्वर्जलेशं स्थापयामि।
प्रादक्षिण्याद्दक्षिणाधः करादारभ्य नित्यशः॥

---

१ (S) अयं वां मित्रावरुणा सुतः सोम ऋतावृधा। ममेदिह श्रुतं हवम्। उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा। अ ७, मः ९ यजुः।

२ (*) मरुतोयस्य हि क्षये पाथा दिवो विमहसः। स सुगोपातमो जनः। अः ८, मः ३१ यजुः।

३ (०) वयंसोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि। ऋक् ६, म ५७. मः १०।

४ (+) यमेनदत्तं त्रितमेन मायुनगिन्द्र एनं प्रथमो अध्यतिष्ठत्। गन्धर्व्वो अस्य रशनामगृभ्णात् सूरादश्वं वसवो निरतष्ट॥ अ १९, मः १२, यजुः।

५ (‡) इमं मे वरुण: श्रुधि हवमद्याच मृडय। त्वामवस्युराचके। अ २१, मः १, यजुः।

वहन् कौमोदकीं पद्म शङ्खचक्रैरलङ्कृतः ।
उक्तलक्षणकं विष्णुं तुलाबन्धे निवेशयेत् ॥

विष्णोरराटमसि १(×)—

ॐ भूर्भुवः स्वर्विष्णुं स्थापयामि ।

ततोगोविन्दप्रतिमां समौक्तिकस्रजं तुलामध्ये वहन् कौमोदकीमिति पुराणमन्त्रेण२(*) अनन्तरं पठितेन सहस्रशीर्षेति वैदिकेनच। ॐ भूर्भुवःस्व गोविन्दं स्थापयामि। इत्यृचा लम्बयेत ।

ततोनिकामे निकामे ३(*)—

४(*) दधिक्राव्णः । शिवोभव ५(×) यतोयत ६(S) स्थिरोभव ७(‡) एतैर्म्मन्त्रैः स्तम्भद्वयमुत्तरसंस्थं सम्पूज्य एतैरेव मन्त्रैः पुनस्तुलाप्रान्तद्वयं सम्पूज्य तुला समन्ततः पूर्व्वादिदिक्षु इन्द्रादीन् सम्पूज्य दीपान् प्रज्ज्वालयेत्।

ततो द्वारजापकाः स्व स्वशाखोक्तां शान्तिं पठेयुः ।

ततोऽधिवासनदक्षिणादाने । ॐ अद्येत्यादि देशादिसंकीर्त्त्यामुकप्रवरान्वितायामुकगोत्रायामुकशर्म्मणे आचार्य्याय ( अमुकप्रवरोमुकगोत्रः ) अमुकशर्म्माऽह मधिवासनकर्म्मणः साङ्गतासिद्ध्यर्थं दक्षिणां सम्प्रददे इति ।

एवं ब्रह्मादिभ्योऽपि आचार्य्यार्द्ध-दक्षिणा देया ।

१ (×) विष्णोरराटमसि विष्णोः श्नप्त्रे स्थः । विष्णोः स्यूरसि । विष्णोर्ध्रुवोऽसि । वैष्णवमसि विष्णवे त्वा । १५. म: २१, यजुः ।

२ (*) 'वहन् कौमोदकीं पद्म शङ्खचक्रैरलङ्कृतः । उक्तलक्षणकंविष्णुं तुलाबन्धे निवेशयेत्' इत्यनेन प्रागुक्तेन ।

३ (*) निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः । पच्यन्तां योगक्षेमो नः कल्पताम् । अ २२, म: २२, यजुः ।

४ (*) दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभिनो मुखाकरत् प्रण आयूंषि तारिषत् ॥ अ २३, म: ३२, यजुः ।

५ (×) शिवोभव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः । माद्यावा पृथिवी अभिशोचीर्मान्तरिक्षं मा वनस्पतीन् ॥ अ ११, म: ४५, यजुः ।

६ (S) यतोयतः समीहसे ततो नो अभयं कुरु । शं नः कुरु प्रजाभ्यो भयं नः पशुभ्यः ॥ अ ३६, म: २२, यजुः ।

७ (‡) स्थिरोभव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहनः ॥ अ ११, म: ४४, यजुः ।

इदमधिवासनं निशीथे कार्य्यम्।

अधिवासनानि सर्व्वाणि मध्यरात्रेतु कारयेत्।

इति विष्णुधर्म्मोत्तरवचनात्। ततोजागरणेन तां निशामति वाहयेयुः।

ततः प्रभाते कृतनित्यक्रियाः सर्व्वे भवेयुः।

ततो यजमानः प्राग्वत् पुण्याह वाचनादिकं कुर्य्यात्।

ततोऋत्विजो यजमानान्वारब्धाः स्व स्वकुण्डे ऋग्वेदादिक्रमेण पूर्णाहुति प्रभृति यथाशास्त्रं कर्म्मसमाप्तिं कुर्युः। यस्य स्मृत्याच अनेन होमकर्म्मणा कर्म्माङ्गदेवताः प्रीयन्तां नममेतिवदेत्।

ततस्तुलामहावेदि पश्चिमोपविष्टं यजमानं गुर्व्वादयः कलसोदकेन स्वशास्त्रोक्त-वैदिकैर्म्मन्त्रै १(+) पौराणमन्त्रैश्च अभिमिञ्चेयुः।

ततः सर्व्वौषधीभिरनुलिप्य शुद्धजलेनस्नात आचान्तोयजमानः शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः कृतत्र्यायुष-करणोगृहीतकुसुमाञ्जलि स्तुलां त्रिः प्रदक्षिणी कृत्य महावेद्यां पश्चिमे प्राङ्मुखउपविश्य एभिर्म्मन्त्रैस्तुलामनुमन्त्रयेत।

ॐ नमस्ते सर्व्वभूतानां शक्तिस्त्वं (सत्य) सर्व्वमाश्रिता।
साक्षिभूता जगद्धात्री निर्म्मिता विश्व योनिना ॥
ॐ नमस्ते सर्व्वभूतानां साक्षिभूते सनातनि।
पितामहेन देवि त्वं निर्म्मिता परमेष्ठिना ॥
त्वया धृतं जगत् सर्व्वं सहि: स्थावरजङ्गमम्।
सर्व्वभूतात्म-भूतस्थे नमस्ते विश्वधारिणि ॥
ब्रह्मणोदुहिता त्वंहि त्वं सत्यं परमाश्रिता।
काश्यपी गोत्रतश्चैव नामतोविश्रुता तुला ॥
प्रसादं कुरु कल्याणि साक्षिर्त्यं देहि शाम्भवि।
एकतः सर्व्वसत्यानि तथानृतशतानि च ॥
धर्म्माधर्म्मकृतां मध्ये स्थापितासि जगद्धिते।
त्वं तुले सर्व्वभूतानां प्रमाणमिह कीर्त्तिता ॥

१ (+) वैदिक मन्त्रैः 'ॐ आपोहिष्ठा: मयोभुवः' इत्यादि नवभिर्मन्त्रैः। पौराणिकाः 'ॐ सुरास्त्वा-मभिषिञ्चन्तु' इत्यादि, 'एते त्वामभिषिञ्चन्तु धर्म्मकामार्थसिद्धये'। इत्युक्ता नव संख्यकमन्त्राः पश्चे पश्चादुच्यन्ते। यथा 'आपोहिष्ठा'त्र्यृचः। 'आतारमिन्द्र' मित्येकः। 'ववच्वमोजम्यनमवीति' :पञ्च। 'पवन्त मा पितर' इति नव। 'त्रिरोमि' इति पञ्च। अ: २६, म: ८-१७, यजुः।

मां तोलयन्ती संसारा दुद्धरस्व नमोऽस्तुते ।
योऽसौ तत्त्वाधिपो देवः पुरुषः पञ्चविंशकः ॥
स एषोऽधिष्ठितो देवि त्वयि तस्मान्नमोनमः ।
ततस्तुलामध्यविलम्बित-गोविन्द मनुमन्त्रयेत् ॥

यथा— नमो नमस्ते गोविन्द तुलापुरुषसंज्ञक ।
त्वं हरे तारयास्मान् हि अस्मात् संसारसागरात् ।

ततोऽञ्जलिस्थकुसुमानि तुलायां हरौच विकीर्य्य पुनस्तुलां प्रदक्षिणीकृत्य दक्षिण करमुष्टौ हैमीं सूर्य्य प्रतिमां वामकरमुष्टौ हैमीं धर्म्मराजप्रतिमाञ्चादाय नित्यदेवं च गृहीत्वा लक्ष्मीनारायणौ स्मरन् प्राङ्मुख उत्तरशिक्ये तुलामारुह्य गोविन्द प्रतिमामुखं पश्यन्नासीत। आरोहणसमये रुद्राध्यायो१(+) जप्यः। तत ऋत्विगादयोदक्षिण-शिक्ये यजमान परिमाणाभ्यधिकं सुवर्णादि द्रव्यं निदध्युः। पुष्टिकामनायान्तु अधिकद्रव्य प्रक्षेपेण भूमिसंस्थितां तुलां कुर्य्युः। ततो यजमानोगोदोहनमात्रं २(०) तत्र स्थित्वा ततोऽवतीर्य्य पुनन्तु मां देवजना इति तृचं(+)पठित्वा पौराणान् मन्त्रान् पठेत्। यथा—

नमस्ते सर्व्वभूतानां साक्षिभूते सनातनि ।
पितामहेन देवि त्वं निर्म्मिता परमेष्ठिना ॥

---

१ (+) नमस्ते रुद्र मन्यवे उतोत इषवे नमः। बाहुभ्यामुत ते नमः। इत्यादिकोऽन्वेष्टव्यः। शुक्ल यजुः, अः १६।

" एतस्य प्रमाणं फलञ्च यथा,—
'सुरापी स्वर्णहारीच रुद्रजापी जलेस्थितः।
सहस्रशीर्षाजापीच मुच्यते नात्रसंशयः'। स्मृतौ भट्टभास्करीयभाष्येच।

" कात्यायन श्रौतसूत्रेच प्रक्रियास्ति। १८।७।१-५।

" 'अथातो यः शतरुद्रियंजुहोति' इत्यादिरुव्वटाचार्य्यभाष्ये।

" 'यः शतरुद्रीयमधीतेसोऽग्निपूतोभवति। सवायुः पूतोभवति स आत्मपूतोभवति स सुरापानात् पूतोभवति स ब्रह्महत्यायाः पूतोभवति स सवर्णस्तेयात्पूतोभवति स कृत्याकृत्यात् पूतोभवति तस्माद् अविमुक्तमाश्रितोभवत्याश्रमी सर्व्वदा सकृद्वा जपेत्। अनेन ज्ञानमाप्नोति संसारार्णवनाशनम्' इति कैवल्योपनिषदि।

२ (०) गोदोहनं यज्ञार्थे यावताकालेन स्यात्तावत् कालमात्रम्।

३ (+) पुनन्तु मा देवजनाः पुनन्तु मनसा धियः।
पुनन्तु विश्वाभूतानि जातवेदः पुनीहि माम्।
पवित्रेण पुनीहिमा शुक्रेण देवदीद्यत्।
अग्नेक्रत्वा क्रतूँ रनु। यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा।

त्वया धृतं जगत् सर्व्वं सह(वहिः)स्थावरजङ्गमम् ।
सर्व्वभूतात्मभूतस्थे नमस्ते विश्वधारिणि ॥ इति ।
जपेन्मन्त्रांस्तु पौराणान् पुनन्तु मेतिवै तृचम् ।
आरोहयेद्विधानेन रुद्राध्यायेन वै नृप १(ऽ) ॥
इति वह्निपुराणोक्तेः ।

एवं तुलाभभिमन्त्र्य दानीयद्रव्याण्यभि मन्त्रयेत् ।
यथा पवित्रमतुल मपत्यं जातवेदसः २(+) ॥
तथा स्वेन पवित्रेण सुवर्णं हि पुनातु माम् ।
यथाग्नि देवताः सर्व्वाः सुवर्णं हि तदात्मकम् ॥
तथा स्वेन पवित्रेण सुवर्णं हि पुनातु माम् ।
यत्कृतं मे स्वकायेन मनसा वचसाऽथवा ॥
दुष्कृतन्तत् सुवर्णस्थं यातु मुक्ति परां शुभाम् ।
इत्यनेन सुवर्णम् ।

रुद्रनेत्र समुद्भूतं रजतं पितृवल्लभम् ।
प्रदानादस्य मे रुद्रः प्रीयतां भक्त वल्लभः ॥
इत्यनेन रजतम् ।

ताम्रं पुष्टिकरं सर्व्वदेव प्रियकरं शुभम् ।
सर्व्वरक्षा करं नित्य मतः शान्ति प्रयच्छ मे ॥
इत्यनेन ताम्रम् ।

एवं पठित्वा तुलितद्रव्यार्द्धमाचार्य्याय दद्यात् । अपरार्द्धमृत्विग्भ्यः । एवमुत्सर्गद्वयमित्येके । गुर्व्वृत्विग्भ्यः सर्व्वेभ्य एकएवोत्सर्ग इत्यन्ये ।

## (२१) अथ उत्सर्गप्रयोगः ।

—*—

वेदि पश्चिमे उपविश्य प्राङ्मुख आचान्तः कर्त्ता तुलाद्रव्यं तुलसी कुशोदकेन सम्प्रोक्ष्याभ्यर्च्य च साक्षतकुशजलपाणिर्देशादिकं स्मृत्वा कामनायां एकैकमन्वन्तर कालावच्छिन्न प्रतिलोकपालस्थान निवास पूर्व्वकार्कवर्ण (सुवर्ण) किङ्किनीजाल-

---

१ (ऽ) रुद्राध्यायः ॐ नमस्ते रुद्र मन्यवे ।
उतोत इषवे नमः बाहुभ्यामुततेनमः ॥ इत्यादि शुक्लयजुर्वेदीयः ।

२ (+) पवित्रं वै हिरण्यम् इति श्रुतिः ।
'अग्नेरपत्यं प्रथमं सुवर्णम्' इतिस्मृतिश्च ।
अस्यवेनाद्दी दान वाक्ये चास्ति ।

मालि विमानात्रस्थानानन्तर भूपालमौलि-मणिरञ्जित पादपीठ श्रद्धान्वितः यज्ञसहस्रयाजि दीप्तप्रताप जितसर्व्वमहीपलोक भूमण्डलाधिकरणक राजराजत्वकामः, अथवा श्रीलक्ष्मीसहित विष्णुप्रीतिकामः सर्व्वपापक्षयकामो वा, अमुक प्रवरान्वितोऽमुक-गोत्रोऽमुक शर्म्माहमेतत् स्व शरीर समतोलित सुवर्णादि द्रव्यार्द्धादि अग्निदैवतं, रजतं चेत् चन्द्रदैवतम्, ताम्रञ्चेत् सूर्य्यदैवतम्, तुभ्यममुकगोत्रायामुकशर्म्मणे आचार्य्याय (सम्प्रददे) त्वदनुज्ञया नानाशाखाध्यायिभ्यो नानागोत्रेभ्यो नानाशर्म्मभ्यः अन्येभ्यश्च ब्राह्मणेभ्यो दीनानाथेभ्यश्च सम्प्रददे नममेति करस्थं जलं गुरुहस्ते निक्षिपेत्। सचाचार्य्यो ब्राह्मणे यजमाने सोङ्कारमुच्चैः स्वरेण, क्षत्रिये निरोङ्कारं मन्त्रस्वरेण, वैश्ये उपांशु, शूद्रेतु मनसा स्वस्तीत्युक्त्वा सावित्रीं पठित्वा द्रव्यं स्पृष्ट्वा स्वशाखोक्तां कामस्तुतिं पठेत्।

पुनर्देशादि सङ्कीर्त्यापरं द्रव्यार्द्धं अग्निदैवतममुकगोत्रेभ्योऽमुकशाखाध्यायिभ्यो-ऽमुकशर्म्मभ्य ऋत्विग्भ्यो द्वारपालेभ्यो युष्मदनुज्ञया नानाशाखाध्यायिभ्यो नानागोत्रेभ्यो-नानाशर्म्मभ्योऽन्येभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च सम्प्रददे नममेति उक्त्वा ऋत्विगादिहस्ते जलं क्षिपेत्।

तेच पूर्व्ववत् स्वस्तीत्यादि पठेयुः। वरणक्रमेण गुरुकराधःस्थितोत्तान दक्षिण करेभ्यः सर्व्वेभ्यो युगपदेव गुर्व्वादीनां गोत्रादुच्चार्य्य पूर्व्ववद् युगपदेववा उत्सर्गः कार्य्यः। पुनर्देशादि स्मृत्वा कृतैतत्तुलापुरुषमहादान प्रतिष्ठार्थं दक्षिणां शतं सुवर्णान् ग्राम रत्न वस्त्र गोऽश्वगजादीनि अमुकगोत्रेभ्योऽमुकशर्म्मभ्योऽमुकशाखाध्यायिभ्यो गुर्व्वृत्विग्भ्यो युष्मभ्यं सम्प्रददे नममेति पूर्व्ववत्।

अथवा होत्रादिभ्यो यथाशक्ति सुवर्णं दक्षिणां दद्यात्।
मुक्ताफलसहस्रार्द्धं यथोपकल्पिताश्च भूमिं गुरवे दद्यात्॥

यदाच गुरुणा होतृभ्य एव तुलाद्रव्यं विभज्य दीयते तदा द्वारपालेभ्यो जापकेभ्य-श्चापरा दक्षिणा देया।

केचन हिरण्यादिना गुर्व्वादीन् परितोष्य अन्येभ्यो दीनानाथ भिक्षुकेभ्यश्च एवं तुलाद्रव्यं विभज्य दद्यादित्याहुः।

ततः सहस्रं शतं वा यथाशक्ति ब्राह्मणान् भोजयेत्।

पुनः पुण्याहवाचनं कृत्वा प्रादक्षिण्येन गत्वा आवाहित ग्रहादीन् पूजयित्वा प्रणम्य "यान्तु देवगणा"(*) इत्यादिना विसृज्य च प्रतिमां सोपस्कारां मण्डपवितानादिकञ्चाचार्य्याय दद्यात्। केचिदत्रावसरे आर्य्यावेक्षणं कुर्व्वन्ति।

---

१ (+) 'यान्तु देवगणाः सर्व्वे पूजामादाय यामिकाम्।
इष्टकाम समृद्ध्यर्थं पुनरागमनाय च'॥ इति स्मृती।

तत् प्रकारस्तु कांस्यपात्रे आज्यमासिच्य तत्र हिरण्यं प्रक्षिप्य तत्रात्म प्रतिमामवलोक्य -

आज्यन्तेजः समुद्दिष्टमाज्यं पापहरं स्मृतम् ।
आज्यं सुराणामाहार आज्ये लोकाः प्रतिष्ठिताः ॥
इति मन्त्रमुक्त्वा ब्राह्मणाय दद्यात ।

ततः— प्रमादात् कुर्व्वतां कर्म्म प्रच्यवेताध्वरेषु यत ।
स्मरणादेव तद्विष्णोः सम्पूर्णस्यादिति श्रुतिः (स्मृतिः) ।
मन्त्रहीनं क्रीयाहीनं भक्तिहीणं यदर्पितम् ।
तत सर्व्वं पूर्णतां यातु भास्करस्य प्रसादतः । इतिपठेत् ।

ततः—

मया कृतेनानेनामुकतुलापुरुषदानकर्म्मणा भगवान् विष्णुः प्रीयतां नममेत्युक्त्वा नूयनातिरिक्तता परिहारार्थं विष्णुस्मरणं करिष्ये इत्युक्त्वा ॐ अच्युतानन्त गोविन्दाय नमः इति मन्त्रं दशवारं जप्त्वा अञ्जलिं बद्धा विप्रान् प्रार्थयेत । भोः श्रीमन्तः मया-यत्कृतं तुलापुरुषदानाख्यं कर्म्म देशतः काल तो मन्त्र तो भक्तितो द्रव्यतः शक्तितश्च नूयनातिरिक्तं तद्विष्णुस्मरणाद्भवतां ब्राह्मणानां वचनाच्च परिपूर्णमस्तु इतिमे भवन्तोब्रुवन्तु इति यजमानेनोक्ते सर्व्वं परिपूर्णमस्त्विति ब्राह्मणा ब्रूयुः । ततोब्रह्मार्पणम् ।

यत्करोषि यदश्नासि यज्जुहोसि ददासि यत ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ इति भगवद्गीतोक्तेः

## मन्त्रचतुष्टयं यथा—

नमोविश्वसृजे तुभ्यं विश्वरूपात्मने नमः ।
परमानन्द रूपत्वं पाहि संसारकर्द्दमात् ॥
तेजोमयमिमं ध्येयं सदा पश्यन्ति योगिनः ।
स त्वं भवादुद्धर मां देहि मुक्तिं मनाननीम् ॥
यथाहि भूरादि समस्तलोका, स्त्वयिस्थिता देववरेश नित्यम् ।
तथा (अमी) सुरा ये सुरलोकपाला. ब्रह्मादयो देवगणाश्च नित्यम् ॥
तव प्रसादा १(०) दहमप्यशेषा पापैर्विमुक्तस्तु तथा भवेयम् ।
तथाकुरुत्वं सततं मुरारे विष्णो नृसिंहेश नमोनमस्ते ॥

ॐ तत्सद् ब्रह्मार्पणमस्तु इत्युक्त्वा ब्राह्मणाशीषोगृहीत्वा सानुनयं तान् विसृज्य सुहृन्मित्रादियुतः सोत्साहः मिष्टान्नादिकं भुञ्जीत ।
तुलाद्रव्यं गृहे चिरं नधारयेत् ।

---

१(०) ॐ तत्वत् इत्यपि क्वचित् पाठः

108 ब्रह्मवैवर्त्ते—

दातव्यमिति नो जातु वक्तव्यं मनुजैः कचित ।
अहोरात्रमतिक्रम्य तद्दानं द्विगुणं भवेत् ।
दशोत्तरं पर्व्वसु तत् शतं चन्द्रग्रहे भवेत् ।
सूर्य्यग्रहे सहस्रन्तु मरणेऽनन्तकं स्मृतम् ।
तस्माद्दातव्यमित्युक्ते( क्त्वा ) देयमेव नचान्यथा ।
बुधैस्तदेव वक्तव्यं दातुं शक्यं यदेवहि ।
उक्त्वा नदीयते यद्धि यातनावहमेव तत् इति ॥

अयं सुवर्णतुलाविधिः रजतताम्रतुलादानादावतिदिश्यते । न्यायसाम्यात्। एवं कुर्व्वतः फलमुक्तम् , यथा—

109 मात्स्ये—

अनेन विधिना यस्तु तुलादानं करोति वै ।
पुण्यकालेतु सम्प्राप्ते सपदं याति वैष्णवम् ।
बिमानेनार्कवर्णेन किङ्किणीजालमालिना ।
नारायण पुरंगत्वा कल्पकोटि शतं वसेत् ।
पुत्र पौत्र प्रपौत्रांश्च तारयेदेकविंशतिम् ॥
देदीप्यमानवपुषा विजितप्रभाव-
माक्रम्य मण्डलमखण्डकचन्द्र भान्वोः ।
सिद्धाङ्गनानयनषट् पदनीयमान-
वक्त्राम्बुजोऽम्बुज मयेन चिरं सहास्ते ॥
इति पठति य इत्थं यः शृणोति प्रसङ्गा-
दपि कलुषवितानैर्म्मुक्तदेहः समन्तात् ।
दिवममरवधूभिर्याति सम्प्रार्थ्यमानः,
पदममरसहस्रैः सेवितं चन्द्रमौलेः ॥

इति श्रीमत् परमवैदिक-श्रीनागदेव भट्टसुतेनानन्तदेवेन विरचिते विधानपारिजाताख्य-निबन्धे तुलापुरुषदान प्रयोगः समाप्तः ।

## (२२) अथ प्रसङ्गाद्रजतादितुलापुरुषदानविधिः ।

(110) तत्र गोपथब्राह्मणे सुवर्णतुलापुरुषविधानं प्रकारान्तरेणोक्तम् ।

अथ चेन्निस्वपक्षः स्याद् यथा सम्पद्यते धनम् ।
धातुभिः सहतौल्यस्तु वासोभिश्च रसैस्तथा ।
व्रीह्यादिभिः सर्व्वधान्यै र्यथा सम्पद्यते गृहे ॥

(111) एतत्फलमप्युक्तं—

यत्पापं स्वकुले जात-त्रिसप्तपुरुषैः कृतम् ।
तत् सर्व्वं नश्यति क्षिप्रमग्नौतुलं यथा तथा ॥
अनामयं स्थानमवाप्य देवै रलङ्घनीयं सुकृतं हि रम्यम् ।
समस्त दोषान् परिमुक्तपापा द्दिवीन्द्रवद्राजति सूर्य्यलोके ॥
सूर्य्यलोके दिवीत्यभेदेन सम्बन्धः १(*) ।

(112) भविष्योत्तरेऽपि मत्स्यपुराणरीत्या हेमतुला उक्ता ।

(113) कृष्ण उवाच—

अनेनैव विधानेन केचिद्रूप्यमयीन्तुलाम् ।
कर्पूरेण तथेच्छन्ति केचिद् ब्राह्मण पुङ्गवाः ॥
अनेन हेमतु लोक्तेनेत्यर्थः ।
मया सिततृतीयायां नार्य्यः सौभाग्यदां तुलाम् ॥
कुङ्कुमेन प्रयच्छन्ति लवणेन गुड़ेन वा ।
न तत्र होमो मन्त्रो वा एवमेव प्रदीयते ॥

(114) विश्वामित्रः—

आदित्ये राहुणा ग्रस्ते सुवर्णैस्तोलयेत्तनुम् ।
सोमग्रहेतु रूप्येण यथादानन्तथा शृणु ॥
प्रवर्य्यस्य मुखे युक्ता दुत्पन्नः पवित्रदेहतः ।
सर्व्वपापहरायैतद्ददामि प्रीयतां विभुः ॥

---

१(*) वस्तुतः हेमाद्री दानखण्डेऽपि ।

इत्युच्चार्य्य जलं स्वप्सु निक्षिपेद्द्विज-सत्तमः ।
प्रीयन्तां पितरः कांस्ये ताम्रेचैव पितामहाः ॥
लवणे सिन्धु( सीधु ) जे लक्ष्मीः प्रीयतां पार्व्वती गुड़े ।
गन्धैर्गुड़ैर्व्वा वासोभिः सौभाग्यं लवणे परम् ॥
प्रीयतां विश्वधात्रीति दान मन्त्रोविधीयते १(*) ।
तुलापुरुषतोराजन् याति तत् परमं पदम् ॥
सर्व्वपापविशुद्धात्मा मुक्तिं यात्यपुनर्भवाम् ।
हत्वातु ब्राह्मणं भूप तोलयेदात्मनस्तनुम् ।
सुवर्णेनात्मतुल्येन ब्रह्महत्यां व्यपोहति ॥

अत्र सुवर्णरजततुलायां 'प्रवर्ग्यस्ये'त्यादिमन्त्रं, कांस्यादि तुलायांतु 'प्रीयन्तां पितर'-इत्यादि मन्त्रं, गन्धगुड़वासः—सिन्धु-जातिरिक्त-लवण-तुलायां 'विश्वधात्री' इत्यादि मन्त्रम्,

गुड़तुलायां प्रीयतां पार्व्वतीत्यादिकं वा मन्त्रमुक्त्वा जले जलप्रक्षेपः कार्य्यः । फलन्तु कांस्यादि तुलायां सौभाग्यमेव, फलान्तरानुक्तेः । लवणेतु परमधिकं सौभाग्यम् ।

उपक्रान्तयोः सुवर्ण-रजत-तुलयोः फलं तुलापुरुषत इत्यादिनोक्तं वेदितव्यम् । सुवर्णतुलायान्तु ब्रह्महत्यादुरितनाशोऽपि भवतीति वचनस्वारस्येनार्थः । व्याख्यानान्तरन्तु वचनानां दोषग्रस्तत्वादुपेक्ष्यम् ।

अत्र हेमाद्रितुलायामेतावत्येव इति कर्त्तव्यता । अधिके मानाभावात् । अत्रानुक्तदक्षिणत्वात् सामान्यतो विहितसुवर्णादन्यून मधिकं वा यथाशक्ति दक्षिणा देया ।

इति रजतादि तुलापुरुष दानविधिः ॥

## (२३) अथ लोहतुलापुरुष-दानविधिः ।

—*—

### (115) स्कान्दे—

लोहना माऽभवत् पूर्व्वं दानवः सुमहाबलः ।
स देवैः समरे क्रुद्धैर्बहुधा शकलीकृतः ।
तदङ्गमभवत् सर्व्वं लोहं यद्दृश्यते क्षितौ ।
आत्मानं तोलयित्वा तु दद्याल्लोहन्तु तत्समम् ।

१ (*) 'दानमन्त्रविधीयते' इत्यपि पाठान्तरमस्ति ।
दानमन्त्रीविधीयते इतिच भिन्नः पाठः ।

द्विजाय शिवभक्ताय तथान्यस्मै द्विजातये।
पादुकोपानहच्छत्र-चामरासन-संयुतम्॥
अयने विषुवे पुण्ये व्यतीपातादि-पर्व्वसु।
श्रद्धायुतः शुचौ देशे विशेषादुत्तरायणे॥
पञ्चामृतेन संस्नाप्य देवदेवमुमापतिम्।
केवलेन घृतेनाथ प्रस्थमात्रेण धूर्जटिम्॥
सुगन्धि चन्दनजलैस्ततः संस्नापयेद्विभुम्।
चन्दनागुरु-कक्कोल-कर्पूरमृगनाभिभिः॥
विलिप्य परमेशानं सुमनोभि रथार्चयेत्।
भक्त्या निवेद्य नैवेद्य मनवद्येन चेतसा॥
ततः प्रणम्य जगतामीश्वरं प्रार्थयेदिति।
देवदेव जगन्नाथ कृपालो परमेश्वर॥
मामुद्धर स्वसंसार पङ्कसंकोच दुःखितम्।
इति सम्प्रार्थ्य योदद्या लोहमात्मसमं नरः॥
सयाति शिव(सायुज्यं) सालोक्यं यावदिन्द्राश्चतुर्दश।
ततः पुनरिहायातः पृथिव्या मेकराड् भवेत॥

अत्रापि पूर्व्ववद्दक्षिणा। अनुक्तदक्षिणेषु तस्या यथाशक्ति विहितत्वात्।

इति लोहतुलापुरुष-दानविधिः॥

## (२४) अथ नानारोगघ्न लोहादि तुलापुरुष दानविधिः।

### (116) गरुड़ पुराणे—

सनत्कुमार उवाच—

तुलापुरुषदानन्तु शृणु मृत्युजयोद्भवम्।
अष्टलोहं प्रदातव्यं सर्व्वरोगोपशान्तये॥
कांस्यञ्च यक्ष्मके देयं त्रपुञ्चार्शोविकारके।
अपस्मारेच सीसं स्यात् ताम्रं कुष्ठे मुत्रकृच्छ्रे॥
पित्तलं रक्तपित्तेच रूप्यं प्रदर-मेहयोः।

सुवर्णं सर्व्वरोगेषु प्रदद्यान्मृत्युनोदनम् १(::) ।
फलोद्भवं तथा दद्याद्ग्रहणी दारुजे रुजौ २(+) ॥
गौडं भस्मकरोगेषु योगन्तु गण्डमालके ।
जाङ्गलं चाग्निमान्द्येतु रोमोत्पातेतु पौष्य (द्रय) कम् ॥
जाङ्गलं काष्ठजमित्यर्थः ।
मधूद्भवं तथा देयं कासश्वास जलोदरे ॥
घृतोद्भवं तथादेयं छर्द्दिरोगोपशान्तये ।
क्षीरं पित्तविनाशाय दाधिकं भगदारणे ॥
लावणं वेपनाशाय पैष्टं दद्रुविनाशने ।
अन्नञ्च सर्व्वरोगाणां नाशने स्मृतमेव च ॥
वेपः कम्पः स्तद्रोग इत्यर्थः ३(×) ।
अधिदैवतञ्च लोहे महाभैरव उच्यते ॥
कांस्ये पूषाचाश्विनौच वायुश्च सीसके स्मृतः ।
ताम्रे सूर्य्यस्तथा प्रोक्तः पैत्तलेच कुजस्तथा ॥
रौप्येच पितरो ज्ञेयाः सुवर्णे सर्व्वदेवताः ।
फले सोमोगुडे चाप स्ताम्बूलेच विनायकः ॥
गन्धर्व्वाः कुसुमेचैव जाङ्गलेऽग्निस्तथा स्मृतः ।
मधौ यक्षाः प्रयत्नेन घृते मृत्युञ्जयः स्मृतः ॥
क्षीरे तारागणाः सर्व्वे दध्नि सर्पाः प्रकीर्त्तिताः ।
पिष्टे प्रजापतिर्न्नैव श्चान्ने सर्व्वाश्च देवताः ॥
आर्त्तोयदा स्यात्पात्रं वा प्राप्नुयात् पुण्यदेश(तः) जम् ।
नित्यं(मृत्यु) मृत्युञ्जयप्राप्त-विधिना यत्प्रदीयते ॥
तदेव सर्व्वशान्त्यर्थं भवतीह नसंशयः ।
तुलापुरुषदानेन मृत्युञ्जयति मानवः ॥

अत्राधिदेवतोत्कीर्त्तनं तत्तत्तुलादाने तत्तत् पूजाविधानार्थम् ।

मृत्युञ्जयप्राप्तविधिना-मृत्युञ्जयपूजोपयुक्तादि तत्प्रकारेण मृत्युञ्जयशिवं पूजयित्वेत्यर्थः । तत्पूजाविधिश्चोक्तो देवी पुराणे,—

१ (::) मृत्यु मोदनमित्यत्र मत्फलोदनमिति हेमाद्रौ पाठः ।
२ (+) ग्रहणीदोषंदारुजं इति हेमाद्रौ पाठः ।
३ (×) टु वेपृकपि चलने, वेपनं कम्पः । वेपथुः । 'टितोऽथुच' ।

मृत्युञ्जयश्च देवोऽयं चतुर्भुजस्त्रिनेत्रकः १(॥) ।
अक्षमालाधरो देवो दक्षिणेन तु पाणिना ।
वामेनामृतकुण्डीञ्च धारयनमृतान्विताम् ।
वरदाभयपाणिश्च सर्व्वाभरणभूषितः ।
शुक्लः सुनीलवासाश्च पद्मस्योपरि संस्थितः ।
जाती हृच्च शिरो ज्ञेयं जूयष्टञ्च शिखा स्मृता २(+) ।
यो-वौषडिति कवचं जौ नेत्रे च प्रकीर्त्तिते ३(×) ।
जः फड़स्त्रं समुद्दिष्टं षड़ङ्गोऽयं भवेत् सदा ।
ॐ स्यादावाहने मन्त्र ॐकारो वै विसर्ज्जने ।
अष्टौ वै शक्तयः प्रोक्ताः पञ्चाक्षरसमन्विताः ।
जया च विजया चैव अजिता चापराजिता ।
भद्रकाली कपाली च क्षेम्या मृत्युपराजिता ।
'ॐ जूंसः'मन्त्रप्रयोगेण पूज्यो मृत्युञ्जयः शिवः ४(†) ।
गन्धादिभिर्यथान्यायं यथा ब्राह्मणपूजनम् ।
मृत्युञ्जयोक्तदानेषु सर्व्वेष्वेवं विधिः स्मृतः ।
ॐ जूंस इति वै दातुः कामौघं साधयेत् सदा । ५(‡) ।

## (117) गारुड़े च—

लोहे सदा मन्त्रममुं गृहीतुर्हृदि रोपयेत् ।
शिरोललाटे कण्ठे च जिह्वामूले च गण्डयोः ।
नाभौ च ब्रह्मगुह्ये च एतदङ्गाष्टकं न्यसेत् ।
अरत्निहस्तमात्रं वा सारन्तस्य प्रकीर्त्तितम् ।
यथेच्छया प्रयोगेण यथावत् कर्त्तुरिच्छया ।
षष्ट्या पलैः संघटितमज्ञातपलितं भवेत् ।

१ (॥)　ॐ जूं सः, इतिमन्त्रेण देवोऽयञ्च (चतुर्भुजस्त्रिनेत्रकः) इति हेमाद्रौ ।
अस्य पूजाविधा मृत्युञ्जयतन्त्रे मन्त्रकल्पद्रुमे चास्ति ।

२ (+)　जाती तथाशिरोऽष्टयम् इति हेमाद्रौ पाठः ।

३ (×)　जै वौषडिति भिन्नः पाठोऽस्ति ।

४ (†)　'ॐ जूं सः मन्त्रप्रयोगेण' इति हेमाद्रौ पाठान्तरम् । अथाष्टौ शक्तयोऽभिमानयोगा ।

५ (‡)　अयं जपस्यो मन्त्रः । मृत्युञ्जयदेवस्य ॐ जूं सः इति पुराण-मन्त्रमाध्वीकः [illegible]
[illegible] भेदः । 'अपरस्य मन्त्रमृत्युञ्जयाख्य इतोऽप्यस्ति, तथापि मन्त्रोऽयं तन्त्रसारे ।

लोहनिष्पन्नमेवैतत् तन्नवान्नेन मिश्रितम् ।
पञ्चाशत्पलसंयुक्तं दण्डं चायस संज्ञितम् ।
वस्त्रैराच्छाद्य दानेन यमदण्डो न विद्यते इति १(S) ।

अत्रापि सुवर्णं दक्षिणा देया २(*) ।

इति नानारोगघ्नलोहादितुलापुरुषदानविधिः ॥

—*—

## (२५) अथ विष्णुधर्म्मोत्तरोक्त घृतादितुलापुरुषदानविधिः ।

—*—

(118) **शङ्कर उवाच—**

तुलादानं प्रवक्ष्यामि सर्व्वपापविनाशनम् ।
यद् गौर्य्याचरितं पूर्व्वन्तथा नारायणेन च ।
पुण्यदिनमथासाद्य तृतीयायां विशेषतः ।
गोमयेनोपलिप्तायां भूमौ कुर्य्याद्धटं शुभम् ।
दारवं शुभवृक्षस्य चतुर्हस्तप्रमाणतः ।

उपरितनो दण्डो धटम ।

सुवर्णन्तत्र बध्नीयात् स्वशक्त्या घटितं धटे ।
शिक्यद्वयन्तु बध्नीयादभितो धूटिके ततः ३(+) ।
तत्रारोहेत् सवस्त्रश्च पुष्पालङ्कारभूषितः ।
अभीष्टदेवतां गृह्य स्नापयित्वा घृतादिभिः ।
तुलादानस्य सर्व्वस्य विधिरेषः प्रकीर्त्तितः ।

सर्व्वस्य वक्ष्यमाणघृतादितुलापुरुषदानस्येत्यर्थः ।

प्रथमा तु घृतस्योक्ता तेजोवृद्धिकरी तुला ।
माक्षिकेण तु सौभाग्यं तैलेन बहुलाः प्रजाः ।

---

१ (S) येषु कर्म्मसु दक्षिणा विशेषतो नोक्ता तेषु च यथाशक्ति देया इति शिष्टाचारः। तददाने, तथाहि 'हतो यज्ञस्त्वदक्षिणः' 'यज्ञार्थं दक्षिणाहीनम् नाशियज्ञ-समीरितम्' इति च प्रत्यवायश्रुतिः ॥

२ (*) आत्मानं तोलयित्वा तु दद्याल्लोहम् ततसमम।
द्विजाय विषमकाय यद्वाऽन्यस्मै द्विजातये। इति स्कान्दोक्तः पाठः।

३ (+) 'शक्त्या द्वयन्तु बध्नीयात् स्थापयेत् पिटके ततः' इति हेमाद्रौ पाठः।

वासंसा दिव्यवस्त्राणि प्राप्नोति तुलया धृ( तम् )तः।
लवणस्य तु लावण्यं अरोगित्वं गुडस्य च ॥
असापत्नं शर्करया सुरूपं चन्दनेन तु।
अविभक्ता भवेद्भर्त्रा(स्त्री) तुलया कुङ्कुमस्य तु ॥
न सन्तापो हृदि भवेत् क्षीरस्य तुलया सदा।
सर्व्वदानप्रदाः सर्व्वाः सर्व्वपापक्षयङ्कराः ॥
यो ददाति तुलाः सर्व्वाः स गच्छेत् परमं पदम्१(*)। २(०) इति।

इति घृतादितुलापुरुषदानविधिः ॥

—*—

## (२६) अथ पराशरोक्तगुडादितुलापुरुषदानविधिः।

—*—

गुडं वा यदि वा खण्डं लवणं वापि तोलितम्।
यो दद्यादात्मनस्तुल्यं नारी वा पुरुषोऽपि वा ॥
पुमान् प्रद्युम्नवत् स स्यान्नारी सा पार्व्वती यथा।
सुवर्णं दक्षिणायुक्तं सवस्त्रं भूषणान्वितम् ॥
अलङ्कृत्य द्विजाग्र्यं तं परिधाय च वाससी।
खण्डादि तोलितं पश्चाद् द्विजाय प्रतिपादयेत् ॥

(119) तत्रैवान्यच्च—

मन्त्रेणारुह्य च तुलां चिन्तयित्वा हरिं परम्।
अवरुह्य ततो दद्यादर्द्धं पादमथापि वा ॥
गुरुं सम्पूज्य विधिवत् स्वर्णालङ्कारभूषणैः।
विसर्ज्जयेन्नमस्कृत्य भोजयित्वा विधानतः ॥
शेषं द्विजेभ्यो दातव्यं स्त्रीभ्योऽन्येभ्य स्तथैव च।
इष्टबन्धुविशिष्टानामाश्रितानां ततः परम् ॥
मन्त्रेण दद्यादभिमन्त्रितां यः, सकृत्तुलामेकतमां द्विजेभ्यः।
स याति गौर्य्याः सदनं सुपुण्यं, न शोकदौर्भाग्यमुपाप्नुते पुमान् ॥

इति गुडादितुलापुरुष दानविधिः।

---

१ (*) 'यो ददाति तुलाः सर्व्वाः स गौर्य्यालयमाप्नुयात्' इति हेमाद्रौ पाठः।

२ (०) 'मन्त्रेण दद्यादभिमन्त्रिताम्, सकृत्तुला'मेकतमां द्विजेभ्यः। स याति गौर्य्याः सदनं सुपर्व्वैः, न शोकदौर्गत्यमुपाप्नुते पुमान्' अयमधिकः हेमाद्रौ दानखण्डे पाठः। एवं हेमाद्रौपाठोऽन्यथास्ति।

## (२७) अथ सुवर्णरजत-ताम्रव्यतिरिक्ततुलापुरुषदानस्य प्रयोगः ।

—*—

अयनादिपुण्यकालमासाद्य यथाशक्ति मण्डपं सम्पाद्य तुलां सम्पादयेत् ।
शाकेङ्गुदीचन्दन देवदारु, श्रीपर्णीबिल्वप्रियकाञ्चनानाम् ।
स्तम्भद्वयं हस्तयुगावखातम्, कृत्वा मृजुं पञ्चकरोच्छ्रितञ्च ॥
तदन्तरं हस्तचतुष्टयं स्यात्, अथोत्तराङ्गं च तदङ्गमेव ।
समानजातिश्च तुलावलम्बिना(नी), हैमेन मध्ये पुरुषेण युक्ता ॥
दैर्घ्येण सा हस्तचतुष्टयं स्यात्, पृथुत्वमस्याश्च दशाङ्गुलानि ॥
सुवर्णपत्राभरणा च कार्य्या, सलोहपाशद्वयशृङ्खलाभिः ।
युता सुवर्णेन च रत्नमाला, विभूषिता माल्यविभूषणाभ्याम् ॥

ईदृशीं शिक्यद्वयावलम्बि फलकद्वयोपेतां दक्षिणोत्तरावलम्बिनीं तुलां निर्म्माय सर्व्वसम्भारान् समानीय, धर्म्मराज-सूर्य्यविष्णुप्रतिमाः कृत्वा गणेशगौरीष्ट देवतादीन् सम्पूज्य प्रार्थयित्वा (प्राच्य) देशकालौ स्मृत्वा चामुकगोत्रोऽमुकप्रवरोऽमुकशर्म्मामुककामः-श्रीविष्णुप्रीतिकामो वा घृतान्यतमद्रव्येण तुलापुरुषदानं करिष्ये । इति सङ्कल्प्याचार्य्यं वृत्वा तस्मै वस्त्रादि दद्यात् ।

अथागमोक्तविधिना शुद्धेन वा मन्त्रेण त्र्यम्बकं सम्पूज्य १(०) । ततस्तोलनीय-द्रव्याधिदेवतां पुर्व्वोक्तां सम्पूज्य कृताप्युत्तारणो धर्म्मराज-सूर्य्य-विष्णु-प्रतिमाः सम्पूज्य विष्णुप्रतिमां तुलामध्यभागे लम्बितां बद्ध्वा दक्षिणप्रान्तबन्धादारभ्य चन्दनादिना तदधिष्ठितदेवताः पूजयेत् २(†) ।

ताश्च । यथा—ईशम् । शशिनम् । मारुतम् । रुद्रम् । सूर्य्यम् । विश्वकर्म्माणम् । गुरुम् । अङ्गिरोऽग्नी । प्रजापतिम् । विश्वम् । जगद्विधातारम् । पर्जन्यशम्भू । पितृदेवताम् । सौम्यम् । धर्म्मम् । अमरराजम् । अश्विनौ । जलेशम् । मित्रावरुणौ ।

---

१ (०) ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनान् मृत्योर्मुक्षीय मामृतात् ॥

इत्यनेन मन्त्रेण । शुक्लयजुः ३।६० ।

२ (†) ॐ भूर्भुवः स्वः ईशानाय नमः इतीशानमावाहयेत् ॥ एवमुत्तरत्रापि ज्ञेयम् । इति तुलाधारपक्षे पाठान्तरम् ।

मरुद्गणान् । धनेशम् । गन्धर्व्वम् । वरुणम् । विष्णुम् । इत्येता श्चतुर्व्विंशति देवताः पूजयेत् १(†) ।

ॐ भूर्भुवः स्वः अमुकं स्थापयामीति प्रयोगेण स्थापयित्वा २(*) मध्यस्थां विष्णुप्रतिमां सम्पूज्य—निकामे निकामे। दधिक्राव्णः। शिवो भव ३(‡) ।

यतो यतः । स्थिरो भव । इत्येतै र्म्मन्त्रैस्तम्भद्वयमुत्तरसंस्थम् सम्पूज्य तुलायाः समन्तात् पूर्व्वादिक्रमेण इन्द्रादीन् सम्पूज्य ४(०) । अष्टौ दीपान् दत्त्वा गुरुणाभिषिक्तो-यजमानो गृहीतकुसुमाञ्जलिस्तुलां त्रिः प्रदक्षिणीकृत्योपविश्य प्राङ्मुख तुलामनु-मन्त्रयेत् ।

ॐ नमस्ते सर्व्वदेवानां शक्तिस्त्वं सर्व्व(त्य) माश्रिता ।
साक्षिभूता जगद्धात्री निर्म्मिता विश्वयोनिना ॥
एकतः सर्व्वसत्यानि तथानृतशतानि च ।
धर्म्माधर्म्मकृतां मध्ये स्थापितासि जगद्धिते ॥
त्वं तुले सर्व्वभूतानां प्रमाणमिह कीर्त्तिता ।
मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तु ते ॥
योऽसौ तत्त्वाधिपो देवः पुरुषः पञ्चविंशकः ।
स एषोऽधिष्ठितो देवि त्वयि तस्मान्नमोनमः ॥

इति तुलां प्रार्थ्य मध्यस्थं विष्णुं प्रार्थयेत ।

## तत्र ( अत्र ) मन्त्रः—

नमो नमस्ते गोविन्द तुलापुरुषसंज्ञक ।
त्वं हरे तारयस्वास्मानस्मात् संसारसागरात् ॥

इत्युक्त्वा गोविन्दतुलोपरि कुसुमाञ्जलिं त्रिः प्रक्षिपेत ।

पुनस्तुलां त्रिः प्रदक्षिणीकृत्य मन्त्राभरणसम्पन्नो वाममुष्टौ गृहीतधर्म्मराजो-दक्षिणमुष्टौ गृहीतसूर्य्य उन्सङ्ग(स्थः) स्थापितस्वेष्टदेवतः प्राङ्मुखमुत्तरशिक्यमारोहेत । दक्षिणेन सुवर्णं स्यादुत्तरेण स्वयं विशेत । इति वचनात ।

१ (†) पूजयेदिति तत्तत्कर्म्मेति शेषम् ।
२ (*) ॐ भूर्भुवः स्वः अमुकं स्थापयामीति प्रयोगेण स्थापयेत् । इति ग्रन्थान्तरं पाठः । मध्ये गोविन्दस्यापीत्यपि ।
३ (‡) एते मन्त्राः तुलापुरुषप्रकरणे प्रागुक्ताः ।
४ (०) तत्तन्मन्त्रै रिन्द्रादीन् सम्पूज्येति ।

ततो दक्षिणशिक्ये घृतादिद्रव्यमाचार्य्यो निधाय यावत् समधिकं वा पुष्टिकामे यजमाने भूमिस्पृष्टमपि कृत्वा धार्य्ये १(*) ।

अथ यजमानो विष्णु-प्रतिमामीक्षमाणः क्षणं स्थित्वा इमं मन्त्रं पठेत् ।

नमस्ते सर्व्वभूतानां साक्षिभूते सनातनि ।
पितामहेन देवि त्वं निर्म्मिता परमेष्ठिना ॥
त्वया धृतं जगत् सर्व्वं सहस्थावरजङ्गमम् ।
सर्व्वभूतात्मभूतस्थे नमस्ते विश्वधारिणि ॥ इति ।

घृतादितोलनीयद्रव्ये किञ्चित् सुवर्णं दत्तं चेत्तदा इमे मन्त्राः पठनीयाः ।

यथा पवित्रमतुलमपत्यं जातवेदसः ।
तथा स्वेन पवित्रेण सुवर्णं हि पुनातु माम् ॥
रुद्रस्य तु महत्तेजः कार्त्तिकेयस्य सम्भवः ।
तथा स्वेन पवित्रेण सुवर्णं हि पुनातु माम् ॥
यथाग्निर्देवताः सर्व्वाः सुवर्णं हि तदात्मकम् ।
तथा स्वेनपवित्रेण सुवर्णं हि पुनातु माम् ॥
यत् कृतं मे स्वकायेन मनसा वचसाथवा ।
दुष्कृतं तत् सुवर्णस्थं मुक्तिं यातु परां शुभाम् ॥

इत्युक्त्वा अवतीर्य्याणेत्याशुक्त्वा अमुककाम इदं द्रव्यं अमुकदैवतं घृतं चेन्मृत्युञ्जयदैवतं आचार्य्यायान्येभ्यो ब्राह्मणेभ्यः समाश्रितबन्धुवर्गेभ्यो दीनानाथस्त्रीभ्यश्च सम्प्रददे न ममेत्युक्त्वा कृतैतत्तुलापुरुषदानप्रतिष्ठासिद्ध्यर्थे यथाशक्ति सुवर्णं दक्षिणामाचार्य्याय दत्त्वा भूयसीञ्च दक्षिणामितरेभ्यो दत्त्वा ब्राह्मणभोजनं सङ्कल्प्य तुलोपहारादिधर्म्मराजादिप्रतिमास्तुलाद्रव्यार्द्धं तदर्द्धं वा आचार्य्याय दत्त्वा अन्येभ्यश्च प्रतिपाद्य आज्यावेक्षणं कृत्वा, प्रमादात्कुर्व्वतां कर्म्म । यस्यस्मृत्या च । यत्करोषि यदश्नासि । चतुर्भिश्च २(०) । एतान्मन्त्रानुक्त्वा ईश्वरे (कर्म्मफलं)समर्प्याचार्य्यं क्षमाप्यच इष्टबन्धुभिः सह भुञ्जीत ॥

नात्राधिवासनादि, न तत्र इति पूर्व्वोक्तवचनात् ।
इति सामान्यत स्तुलापुरुषदानविधानम् ॥

१(*) पाठोऽयमस्तुतोऽपि सर्व्वेष्वादर्शपुस्तकेषु धृततया अविकलं निवेशितः । 'धार्य्ये' इति क्रियान्वितम् तद बुध्योध्यम् ।

२ (०) एतेमन्त्राः अस्मिन् प्रकरणे प्रागुक्ताः ।

## (२८) अथ प्रसङ्गात् सर्व्वदानमन्त्रा निरूप्यन्ते ।

—*—

### तत्रादौ—

ब्राह्मणपादप्रक्षालनं कृत्वोदङ्मुखो यजमानः सङ्कल्पवाक्यमुच्चार्य्यामुकगोत्रं त्वाममुक दानसम्प्रदानत्वेनाहं वृणे इति कृत्वा प्राङ्मुख ब्रह्मादिभिः सह सम्पूज्य देयं (द्रव्यं) प्रोक्ष्यालङ्कृत्य च स्वगोत्राद्युच्चारणपूर्व्वकं देयं मन्त्रेण पात्राय दत्त्वा तत्प्रतिष्ठासिद्ध्यर्थं किञ्चिद्दक्षिणान्दत्त्वा ब्राह्मणाशिषो गृहीत्वा दानफलमीश्वराय समर्पयेत् ।

इति सर्व्वदानविधिः ॥

—*—

## (२९) अथ तथैव सुवर्णादीनां दानमन्त्राः ।

—*—

### तत्र सुवर्णस्य—

हिरण्यगर्भ गर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलद मतः शान्तिं प्रयच्छ मे ॥

### अथ रत्नस्य—

यथा रत्नेषु सर्व्वेषु सर्व्वे देवा व्यवस्थिताः ।
तथा शान्ति प्रयच्छन्तु रत्नदानेन मे सुराः ॥

### अथ रजतस्य—

रुद्रनेत्रसमुद्भूतं रजतं पितृवल्लभम् ।
प्रदानादस्य मे रुद्रः प्रीयतां भक्तवत्सलः ॥

### अथ ताम्रस्य—

ताम्रं पुष्टिकरं सर्व्वं देवप्रीतिकरं शुभम् ।
सर्व्वरक्षाकरं नित्यमतः शान्ति प्रयच्छमे ॥

### अथ कांस्यस्य—

कांस्यप्रभुः शिवः साक्षात् कांस्यमेव विभावसुः ।
कांस्यं विष्णु समं यस्मादतः शान्तिं प्रयच्छमे ॥

### अथ लोहस्य—

यस्मादायस कार्य्याणि त्वदधीनानि सर्व्वदा ।
हे लोहलाङ्गलादीनि अतः शान्तिं प्रयच्छमे ।।

### अथ रौप्यपात्रस्य—

कन्यावधो गवांचैव परदार-प्रधर्षणम् ।
रौप्यपात्रप्रदानेन क्षिप्रं नाशं प्रयातु मे ।।

### अथ कांस्यपात्रविशेषस्य—

यानि पापान्यनेकानि कर्म्मोत्थानि कृतानि च ।
कांस्यपात्र प्रदानेन तानि नश्यन्तु मे सदा ।।

### अथ ताम्रपात्रविशेषस्य—

परापवाद पैशुन्य मभक्षस्य भक्षणम् ।
तत्रोत्थितञ्च यत्पापं ताम्रपात्रेण नश्यतु ।।

### अथ तिलपात्रस्य—

देवदेव जगन्नाथ वाञ्छितार्थ-फलप्रद ।
तिलपात्रं प्रदास्यामि तवाङ्गे संस्थितोऽस्म्यहम् ।।

### अथ वस्त्रस्य—

शासनं सर्व्वलोकानां लज्जाया रक्षणं परम् ।
सुवेशधारि वस्त्रत्वमतः शान्तिं प्रयच्छमे ।।

### अथ पीतवस्त्रस्य—

पीतवस्त्रयुगं यस्माद्वासु देवस्य वल्लभम् ।
प्रदानादस्य मे विष्णुः प्रीयतां भक्तवत्सलः ।।

### अथ कम्बलस्य—

सर्व्वाधिव्याधि विध्वंसः सततं सुखमुत्तमम् ।
ऊर्णाप्रावरणस्यास्य दानाद्भवतु मे हरे ।।

### अथ रक्तवस्त्रस्य—

रक्तवस्त्रयुगं यस्मा दादित्यस्यच वल्लभम् ।
प्रदानादस्य मे सूर्य्यः सर्व्वं पापं व्यपोहतु ।।

## अथ अन्नस्य—

अन्नमेव परा(रं) लक्ष्मीरन्नमेव जनार्दनः।
अन्नं प्रदास्यामि समं भवतु मे जन्म जन्मनि ॥

## अथ गोः—

यज्ञसाधनभूता या विश्वस्याघौघनाशनी।
विश्वरूपधरोदेवः प्रीयतामनया गवा ॥

## अथ आज्यस्य—

कामधेनोः समुद्भूतं देवानामुत्तमं हविः।
आयुर्विवर्द्धनं पुंसा माज्यं पातु सदैव माम् ॥

## अथाश्वस्य—

विष्णु स्त्व-मश्वरूपेण यस्मादमृत सम्भव।
चन्द्रार्कवाहनो नित्य मतः शान्तिं प्रयच्छमे ॥

## अथ गजस्य—

महाशक्ति र्महाकायः पीताम्बरसमप्रभः।
सर्व्वसंग्रामजेताच गजो यच्छतु मे सुखम् ॥

## अथ दध्नः—

दधि त्वामदतः पुंसः सदा सन्तुष्टिरुत्तमा १(*)।
अतस्तव प्रदानेन इहामुत्रास्तु शं मम ॥

## अथ क्षीरस्य—

अलक्ष्मीं हरते नित्यं सुखसौभाग्य वर्द्धनम्
क्षीरं माङ्गल्यमायुष्य मतः शान्ति प्रयच्छ तु ॥

## अथ नवनीतस्य—

कामधेनोः समुद्भूतं विष्णोः प्रीति करं परम्।
नवनीतं प्रदास्यामि बलं पुष्टिश्च देहि मे ॥

---

१ (*) 'पुष्टिरुत्तमा' इति बहुषु निबन्धेषु पाठः।

### अथ स (श) क्तोः—

*प्राजापत्या यतः प्रोक्ताः स (श) क्वो यज्ञकर्म्मणि ।*
तस्मात् सक्तु प्रदानेन प्रीयतां मे प्रजापतिः ॥

### अथ सुवर्णतुलस्याः—

सुवर्ण तुलसीदाना द्वाङ्मनः काय सञ्चितम् ।
पापं प्रशममायातु सर्व्वे सन्तु मनोरथाः ॥

### अथ पादुकयोः—

कण्टकोत्कटपाषाण वृश्चिकाहि निवारणं ।
पादुके सम्प्रयच्छामि विप्रप्रीत्यानु गृह्यताम् ॥

### अथ गन्धस्य—

श्रीखण्डागुरुकर्पूर कस्तुरी कुंकुङ्कमान्वितम् ।
विलेपनं प्रयच्छामि सौख्यमस्तु सदा मम ॥

इति प्रसङ्गागत सुवर्णादि-दानमन्त्राः ।

—*—

## (३०) अथ हिरण्यगर्भदानम् १(०) ।

—*—

### (120) मात्स्ये—

अथातः सम्प्रवक्ष्यामि महादान मनुत्तमम् ।
नाम्ना हिरण्यगर्भाख्यं महापातक नाशनम् २(+) ॥
पुण्यन्दिनमथासाद्य तुलापुरुषदानवत् ।
ऋत्विग्मण्डलसम्भार-भूषणाच्छादनादिकम् ॥
कुर्य्यादुपोषितस्तद्व ल्लोकेशावाहनं बुधः ।
पुण्याहवाचनं कृत्वा तद्वत्कृत्वाधिवासनम् ॥

---

१ (०) उद्दिष्टक्रमप्राप्तं महादानमेतदुच्यते ।
२ (+) 'नाम्ना' इत्यत्र हैम्ना इति हेमाद्रौ पाठः ।

उपवासोऽपि ऋत्विग्भिः सह कार्य्यमिति स्थितिः।

इति दानसागरे १(†)।

ब्राह्मणैरानयेत्कुण्डं तपनीयमयं शुभम्।
द्वासप्तमङ्गुलोच्छ्रायं हेमपङ्कज-गर्भवत्॥
त्रिभागहीनं विस्तारं प्रशस्तं मुरजाकृतिम्।

कुण्डमिति। यजमानप्रवेशार्थं हिरण्यगर्भाख्यं पात्रम्। तपनीयमयं स्वर्णमयं, ...मपङ्कजाकृतिम्, अधोभागमध्यस्याष्टदलक-सुवर्णकमल युक्तम्। तदेव नाभिशब्द-...ाच्यम्। त्रिभाग हीन विस्तारमिति, अष्टाचत्वारिंशदङ्गुलविस्तृतमित्यर्थः।

दशांशानि-सरत्नानि दात्रं सूचीन्तथैवच।
हेमतालं सपीटकं वहिरादित्य संयुतम्॥
तथैवावरणं नाभे रुपवीतञ्च काञ्चनम्।
पार्श्वतः स्थापयेत्तद्वद्धेम दण्डं कमण्डलुम्॥

दशांशानीति-दशाखण्डाकाराणि, सुवर्णखण्डानि तानिच। पिटको मञ्जुषा. दात्री नालछेदनार्थम्. सूचि कर्णवेधनार्थं, नाभेरावरणार्थं वस्त्राकारं उपवीतमुपनयने. ...ारणार्थे दण्डकमण्डलु-समावर्त्तनधारणार्थं। एवं कमण्डल्वादीनि स्वर्णमयानि कृत्वा हेमकुण्डाद्वाह्य प्रदेशे पार्श्वतः स्थापयेदित्यर्थः।

वहिरादित्यसंयुतमिति पाठन्तु आदित्येत्याद्यादित्य-प्रतिमासंयुतः। वस्त्र दात्रादीनिसर्व्वाणि काञ्चनमयान्येव कार्य्याणि।

पद्माकारं विधानं स्यात् समन्तादङ्गुलाधिकम्।
मुक्तावलीसमोपेतं पद्मरागदलान्वितम्॥
तिलद्रोणोपरिगतं वेदीमध्ये ततोऽर्चयेत्।

अङ्गुलाधिक मङ्गुलेन सर्व्वतोऽधिकमित्यर्थः।

यद्यप्यत्र हिरण्यगर्भ-निर्माणसुवर्णपरिमाणं नोक्तं तथापि यावता यजमानस्य मु(स)खप्रवेशावस्थान-नियमयोग्यं २(०) भवति तावताकुण्डं घटनीयम्। अन्यदधि-वासनादिकं तुलापुरुषवद् बोध्यम्।

---

१ (×) दानसारे इत्यपि पाठोऽस्ति। दानसागरसन्दर्भे तु गौडीयबहुपवर्णनाम [illegible]।

२ (०) 'इह स्थान हिरण्यगर्भ-निर्माण-सुवर्णपरिमाणस्यानाम्नाद्यावता यजमानस्य प्रवेश धारणोपायिकं कुण्डं भवति तावते'ति हेमाद्रौ पाठः।

ततोमङ्गलशब्देन ब्रह्मघोषरवेण च।
सर्व्वौषध्युदकस्नानं स्नापितोवेद-वित्तमैः १(+)॥
शुक्लमाल्याम्बरधरः सर्व्वाभरणभूषितः।
इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः॥
नमो हिरण्यगर्भाय हिरण्यकवचायच।
सप्तलोकसुराध्यक्ष जगद्धात्रे नमोनमः॥
भूर्लोकप्रमुखालोका स्तव गर्भे व्यवस्थिताः।
ब्रह्मादय स्तथा देवा नमस्ते विश्वधारिणे॥
नमस्ते भुवनाधार नमस्ते भुवनाश्रय।
नमोहिरण्यगर्भाय गर्भे यस्य पितामहः॥
यतस्त्वमेव भूतात्मा भूतेभूते व्यवस्थितः।
तस्मान्मामुद्धराशेष दुःखसंसार सागरात्॥
एवमामन्त्र्य तन्मध्य माविश्यास्त उदङ्मुखः।
मुष्टिभ्यां परिसंगृह्य धर्म्मराज चतुर्म्मुखौ २(*)॥
जानुमध्ये शिरः कृत्वा तिष्ठेदुच्छ्वास पञ्चकम्।

अत्र गत इत्यधिवासनादि पूर्णाहुत्यन्तं कर्म्म समाप्तमनन्तरमित्यर्थः। अत्र हिरण्यगर्भं पिधानेनाच्छाद्य तस्य गर्भाधानादि कार्य्यम् ३(‡)।

गर्भाधानं पुंसवनं सीमन्तोन्नयनन्तथा।
कुर्य्युर्हिरण्यगर्भस्य ततस्ते द्विजपुङ्गवाः॥
गीतमङ्गल शब्देन गुरुमुत्थापयेत्ततः।
जातकर्म्मादिकाः कुर्य्यात् क्रियाः षोड़श चापराः॥

अत्र जातकर्म्मादि संस्काराणां स्वरूपतः करणासम्भवात्तत्तत्कर्म्म मन्त्रयुक्तमनुध्या(ष्ठा)न पूर्व्वकमेव, तत्तत् प्रधानकर्म्म मन्त्रपाठमात्रेण सर्व्वे ते कार्य्याः।

---

१ (+) सर्व्वौषधिः। 'मुरामांसी वचा कुष्ठं शैलेयं रजनीद्वयम्।
शठी चम्पकमुस्ता च सर्व्वौषधीगणाः स्मृताः'।

२ (‡) ताश्च क्रियाः। जातकर्म्म, नामकरणम्, निष्क्रमणम्, अन्नप्राशनम्, चूडाकरणम्, उपनयनम्, प्राजापत्यम्, ऐन्द्रम्, आग्नेयम्, सौम्यम्, इति। चत्वारि वेदव्रतानि, गोदानं समावर्त्तनञ्चेति बोध्यम्। पूर्व्वोक्तत्रयेण सह षोडशत्वमिति हेमाद्रौ।

२ (*) अत्र धर्म्मराज चतुर्मुखौ सुवर्णमयौ। दक्षिणमुष्टौ धर्म्मराजः। वाममुष्टौ चतुर्मुखः।

स्त्री शूद्रकर्तृकेत्वनुसन्धानमात्रं कार्य्यम्। तत्रापि स्त्रिया विवाहः समन्त्रकः।
सूच्यादिकञ्च-गुरवे दत्त्वा मन्त्रमिमं जपेत्।

नमोहिरण्यगर्भाय विश्वगर्भाय ते नमः।
चराचरस्य जगतो गृहभूताय वै नमः॥

मन्त्रोऽहं जनितः पूर्व्वं मर्त्यधर्म्माद् द्विजोत्तमः।
त्वद्गर्भसंभवादेष दिव्य देहो भवाम्यहम्।
चतुर्भिः कलशैर्भूयस्तत स्ते द्विजपुङ्गवाः १(ऽ)॥
स्नानं कुर्य्यु प्रसन्नाश्च (ङ्गाः) सर्व्वाभरण-भूषिताः।
देवस्यत्वेति मन्त्रेण स्थितस्य कनकासने २(×)।
अद्यजातस्य तेऽङ्गानि अभिषेक्ष्यामहे वयम्।
दिव्येनानेन वपुषा चिरञ्जीव सुखी भव॥
ततोहिरण्यगर्भन्तं तेभ्योदद्याद्विचक्षणः।
ते पूज्याः सावधानेन बहव स्तदनुज्ञया॥
अत्र तेभ्यो गुर्व्वादिभ्यः।
तद् विभागस्तु तुलापुरुष वद्धेमाद्रिगाथाचार्य्याणां वेदितव्यम्॥
तत्रोपकरणं सर्व्वं गुरवे विनि वेदयेत्।
पादुकोपानहच्छ त्र-चामरासन भाजनम्॥
ग्रामं वा विषयं वापि यथान्यदपि सम्भवेत् ३(०)।
इत्यत्र ग्रामादिकं दक्षिणात्वेन सम्भाव्यते॥

121. आत्मालङ्करण मपि कर्त्ता दद्यादिति, गोपथब्राह्मणे।
अनेनविधिना यस्तु पुण्येऽह्नि विनिवेदयेत्॥
कल्पकोटिशतं यावद् ब्रह्मलोके महीयते ४(‡)।

इति श्रीमदनन्तभट्ट विरचिते विधान-पारिजाते हिरण्यगर्भमहादानविधानम्॥

—*—

१ (ऽ) चतुर्भिः कलशैः [illegible] कुम्भसमीपस्थितैः [illegible] स्नानं [illegible] कुर्य्युरभ्यनयेति [illegible] इति हेमाद्रौ।

२ (×) देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्याम्। [illegible] १, १०।

३ (०) यद्द्रव्यप्रायः [illegible]। विषयः [illegible], उपपत्तिं वा। [illegible]।

४ (‡) हेमाद्रौ [illegible]।

# (३१) अथ ब्रह्माण्डदानम् ।

## तत्र ब्रह्माण्डदानप्रयोगः ।

—*—

### 122. मात्स्ये—

अथातः सम्प्रवक्ष्यामि ब्रह्माण्डं विधि पूर्व्वकम् ।
यच्चेष्टं सर्व्वभूतानां महापातक नाशनम् ॥
पुण्यं दिन मथासाध्य तुलापुरुषदानवत् ।
ऋत्विग् मण्डलसम्भार-भूषणाच्छादनादिकम् ॥
लोकेशावाहनन्तद्व दधिवासनकन्तथा १(०) ।

तुलापुरुषवदिति.—तद्वत प्रयत्नेनात्र दानसङ्कल्पोपवास-गोविन्दादिपूजानुज्ञा-ग्रहणादीनि पूर्व्वाङ्गसहितकर्म्माणि समति दिश्यन्ते ।

कुर्य्याद्विशतपलादूर्द्ध्व मा सहस्राच्च शक्तितः ।
शकलद्वयसंयुक्तं ब्रह्माण्डं काञ्चनं बुधः २(।) ॥
ग्रीवाहीनस्य कुम्भस्य सदृशं कारयेत्ततः ।
दिग्गजाष्टकसंयुक्तं षड्वेदाङ्ग समन्वितम ॥
लोकपालाष्टकोपेतं मध्यस्थित चतुर्म्मुखम् ।
शिवाच्युतार्कशिखर मुमा लक्ष्मी-समन्वितम ॥
वस्वादित्य मरुद्गर्भं महारत्न समन्वितम ।
वितस्तेरङ्गुलशतं यावदायामविस्तरम् ॥
कौशेयवस्त्रसंवीतं तिलद्रोणोपरि न्यसेत ।
तथाष्टादशधान्यानि समन्तात परिकल्पयेत ॥

दिग्गजाष्टकं क(कु)मैरावतादि प्रतिमात्मकम् ३(॥) । तथा षड्वेदाङ्ग प्रतिमायुतं वितस्तेरिति ।

---

१ (०) तुलापुरुषतुल्यं काल देशहविर्ग्रह-शिवादिपूजन-विप्रवाचनगुरु-ऋत्विग्वरण-मधुपर्कदान कुण्डमण्डप-वेदिकासम्भार लोकेशावाहनाधिवासनादिकवं कार्य्यम् ।

२ (।) शकलद्वयं खण्डद्वयम् । ब्रह्माण्डे तत्रचयमुक्तम्,—
कुम्भच्छाया भवेद्याहक् प्रतीच्यान्दिशि चन्द्रमाः ।
उदितः शुक्लपक्षादौ वपुरन्तस्य तादृशमिति ॥

३ (॥) तेषां दिग्गजादीनां लक्षणानि आदित्यपुराणोक्तानि हेमाद्रौ सन्ति ।

वितस्तेरङ्गुलशतं यावदायामविस्तरम्।
कौशेयवस्त्रसंवीतं तिलद्रोणोपरि न्यसेत्॥
तथाष्टादश धान्यानि समन्तात् परिकल्पयेत्।

द्वादशाङ्गुलात्मकवितस्तिमारभ्य शताङ्गुलं यावच्छक्त्यनुसारेण विस्तारोत्सेधेन मण्डपं कार्य्यमित्यर्थः।

पूर्व्वेणानन्तशयनं प्रद्युम्नं पूर्वदक्षिणे।
प्रकृतिं दक्षिणे देशे सङ्कर्षणमतः परम्॥
पश्चिमे चतुरो वेदाननिरुद्धमतः परम्।
अग्निमुत्तरतो हैमं वासुदेवमतः परम्॥
समन्ताद् गुणपीठस्थानर्च्चयेत् काञ्चनान् बुधः।
स्थापयेद्वस्त्रसंवीतान् पूर्णकुम्भान् दशैव तु॥

ब्रह्माण्डस्य पूर्व्वादिदिक्षु कृतगुणपीठे एतान् संस्थाप्यार्च्चयेदित्यर्थः। अत्र प्रतिमालक्षणं दानकाण्डतोऽवगन्तव्यम्१(+)।

दशैव धेनवो देयाः सहेमाम्बरदोहनाः।
पादुकोपानहच्छत्र चामरासनदर्पणैः॥
भक्ष्यभोज्यान्नदीपेक्षु फलमाल्यानुलेपनैः।
होमाधिवासनान्तेच स्नापितो वेदपुङ्गवैः॥
इत्थमुच्चारयेन्मन्त्रं त्रिः कृत्वाथ प्रदक्षिणम २(‡)।

### मन्त्रश्च—

नमोऽस्तु विश्वेश्वर विश्वधाम, जगत्पवित्रे भगवन्नमस्ते।
सप्ताधिलोका मरभूतत्वेन, गर्भेण सार्द्धं वितराभिरक्षाम्॥
ये दुःखितास्ते सुखिनो भवन्तु, प्रयान्तु पापानि चराचराणाम्।
त्वद्दानशस्त्राहतपातकानां, ब्रह्माण्डदोषाः प्रलयं व्रजन्तु॥

१(+) हेमाद्रौ दानकाण्डे आदित्य-पुराणविष्णुधर्म्मोत्तर-नारदीयपुराणोक्तानि प्रतिमाया लक्षणानि सन्ति। पूर्णकुम्भाश्च समन्तात् स्थापयेत्।

२(‡) स्नापितः शुक्लमाल्याम्बरधरः गृहीतकुसुमाञ्जलिर्यजमानो ब्रह्माण्डं त्रिः प्रदक्षिणीकृत्य मन्त्रमुच्चारयेदिति।

एवं प्रणम्यामरविश्वगर्भं, दद्याद्द्विजेभ्यो दशधा विभज्य ।
भागद्वयन्तत्र गुरोः प्रकल्प्य, समम्भजेच्छेषमतः क्रमेण ॥

स्वल्पश्च होमं गुरुरेक एव, कुर्य्यादथैकाग्निविधानयुक्त्या ।
स एव सम्पूज्यतमोऽल्पवित्तै र्यथोक्तवस्त्राभरणादिकेन ॥

अत्र पूर्व्वोक्तसहस्रपलपक्ष उत्तमः, तदर्द्धो मध्यमः, तदर्द्धोऽधमः, इत्यल्पपक्षोज्ञेयः ।

इत्थं य एतदखिलं पुरुषोऽत्र कुर्य्याद् ब्रह्माण्डदानमधिगम्य महद्विमानम् ।
निर्धूतकल्मषविशुद्धतनर्मुरारे रानन्दकृत् पदमुपैति सहाप्सरोभिः ॥

सन्तारयेत पितृपितामह पुत्रपौत्र-बन्धु-प्रियातिथिकलत्रशताष्टकं यः ।
ब्रह्माण्डदानशकलीकृतपातकौघ मानन्दयेच्च जननीकुलमप्यशेषम् ॥

इति पठति शृणोति वा य एतत , सुरभवनेषु गृहेषु धार्म्मिकाणाम् ।
मतिमपि च ददाति मोदते सा, ऽमरपतिभवने सहाप्सरोभिः १(*) ॥

इति विधानपारिजाते ब्रह्माण्डदानविधानम् ॥

—*—

## (३२) अथ कल्पपादपदानप्रयोगः ।

—*—

### 123 मात्स्ये—

कल्पपादपदानाख्यमतः परममुत्तमम् ।
महादानं प्रवक्ष्यामि सर्व्वपातकनाशनम् ॥

पुण्यं दिनमथासाद्य तुलापुरुषदानवत् ।
पुण्याहवाचनं कुर्य्याल्लोकेशावाहनन्तथा ॥

ऋत्विग् मण्डपसम्भारभूषणाच्छादनादिकम् ।
काञ्चनान् कारयेद्वृक्षान् नानाफलसमन्वितान् ॥

---

१ (*) अयं श्लोकोऽधिको हेमाद्रावस्ति । मार्कण्डेयपुराणमत्स्यपुराणविष्णुधर्मोत्तरायुक्त-हेमाद्रिनिबद्धनानादानेष्वपि तथाधिकाः सन्ति ।

नाना विहारवस्त्राणि भूषणानि च कारयेत् १(०) ।
शक्तितस्त्रिपलादूर्द्ध्वमा सहस्रात् प्रकल्पयेत् २(†) ॥
अर्द्धात कृष्णसुवर्णस्य कारयेत् कल्पपादपम् ।
गुड़प्रस्थोपरिष्टाच्च सितवस्त्रयुगावृतम् ॥
ब्रह्मविष्णुशिवोपेतं पञ्चशाखसभास्करम् ।
कामदेवमधस्ताच्च सकलत्रं प्रकल्पयेत् ॥
सन्तानं पूर्व्वतस्तद्वत् तुरीयांशेन कल्पयेत् ।
मन्दारं दक्षिणे पार्श्वे श्रिया सार्द्धं घृतोपरि ॥
पश्चिमे पारिभद्रन्तु सावित्र्या सह जीरके ।
सुरभिसंयुतं तद्वद्विलेप्य हरिचन्दनम् ॥
तुरीयांशेन कुर्व्वीत सौम्येन फलसंयुतम् ।

अत्र घृतादयो गुड़परिमिताः ग्राह्याः । सन्निधानात् कल्पपादप-सुवर्णपरिमाणं त्रिपलादूर्द्ध्वं सहस्रपलपर्य्यन्तं ज्ञेयम् ३(‡) ॥

कौशेयवस्त्र-संवीतानिक्षुमाल्य-फलान्वितान् ।
तथाष्टौ पूर्णकलशान् पादुकासनभाजनम् ४(*) ॥
दीपकोपानहच्छत्रचामरासनसंयुतम् ।
फलमाल्ययुतं तद्वदुपरिष्टाद्विनायकम् ५(ऽ) ॥
अशनभाजनं भोजनपात्रम्, वितानन्तु पञ्चवर्णम् ।
तथाष्टादश धान्यानि समन्तात् परिकल्पयेत् ।
होमाधिवासनान्तेच स्नापितो वेदपारगैः ॥

१ (०) अत्र नानावस्त्राणि, भूषणानि स्वर्णाद्याभरणानि । स्त्री-पुरुष-गो-गज-वाजि-मणि-वस्त्र-रजत भक्ष्य फलादीनि, इति हेमाद्रौ ।
एवमादिकमित्यत्र, कास्य-देव-हवि-श्राद्ध-विवाहादिपूजन-गुरु-ऋत्विक् चतुष्टय वरणमधुपर्कदानादीनि ज्ञेयानि ।

२ (+) 'अर्द्धात् कृष्णसुवर्णस्येति यथाशक्तिदानवत् कृष्णसुवर्णस्यार्द्धेन ब्रह्मादिप्रतिमासहितं कल्पपादपं कुर्य्यात्' इति हेमाद्रौ ।

३ (×) गुडप्रस्थोऽत्र द्वात्रिंशत्पलपरिमितः, तथाहि—
द्वात्रिंशत्पलकः प्रस्थः पुराणे परिकीर्त्तितः इति ।
ब्रह्मादीनां चतुष्कमुक्तं ब्रह्माण्डदाने ।

४ (*) पादुकासनभाजनमित्यत्र 'पादुकासनभाजन' मित्यन्यः पाठः ।

५ (ऽ) अत्र उपरिष्टाद् वितानक मिति च पाठान्तरमस्ति ।

त्रिः प्रदक्षिणमावृत्य मन्त्रमेतमुदीरयेत् ।
नमस्ते कल्पवृक्षाय चिन्तितार्थप्रदायिने ॥
विश्वम्भराय देवाय नमस्ते विश्वमूर्त्तये ।
यस्मात्त्वमेव विश्वात्मा ब्रह्मा स्थाणुर्दिवाकरः ॥
मूर्त्तामूर्त्तपरं बीजमतः पाहि सनातनः ।
त्वमेवामृतसर्व्वस्व मनन्तः पुरुषोऽव्ययः १(×) ॥
सन्तानाद्यैरुपेतः सन् पाहि संसारसागरात् ।
एवमामन्त्र्य तन्दद्याद् गुरवे कल्पपादपम् ।
चतुर्भ्यश्चापि ऋत्विग्भ्यः सन्तानादीन् प्रकल्पयेत् ॥

अत्र चतुर्भ्यः कुण्डचतुष्टयसम्बन्धि ऋत्विग्भ्य इत्यर्थः । स्वल्पत्वे एकाग्निवत कुर्य्यात, गुरोरेवमिति पूजनम् । स्वल्पत्वं ब्रह्माण्डवद्बोद्धव्यम् २(‡) ।

तथाहि—

स्वल्पेऽप्येकाग्निवत् कुर्य्याद् गुरवे वापि पूजनम् ।
न वित्तशाठ्यं कुर्व्वीत न च विस्मयवान् भवेत् ॥
अनेन विधिना यस्तु महादानं निवेदयेत् ।
सर्व्वपापविनिर्म्मुक्तः सोऽश्वमेधफलं लभेत् ॥
यो वा पठेत् सकलकल्पतरुप्रदानम् ,
यो वा शृणोति पुरुषोल्पधनः स्मरेद्वा ।
सोऽपीन्द्रलोकमधिगम्य सहाप्सरोभिः,
मन्वन्तरं वसति पापविमुक्तदेहः ॥

इति कल्पपादपमहादान विधानम् ॥

—*

## (३३) अथ गोसहस्रमहादानम् ।

—*—

अथातः सम्प्रवक्ष्यामि महादानमनुत्तमम् ।
गोसहस्रप्रदानाख्यं सर्वपापहरं परम् ॥

---

१ (×) यवाप्यता देवाः, एतेषां सर्व्वस्वं अमृतसर्व्वस्वम् ।

२ (०) एवञ्च लिङ्गपुराणोक्तं महादानं कल्पपादपाख्यमन्यदस्ति ।

" अत्र ब्रह्माण्डदानविधानवदिति ज्ञेयम् ।

पुण्यं तिथिमथासाद्य युगमन्वन्तरादिकम् ।
पयोव्रतस्त्रिरात्रं स्यादेकरात्र मथापि वा ॥
लोकेशावाहनं कुर्य्या तुलापुरुषदानवत् ।
पुण्याहवाचनं कुर्य्याद्धोमः कार्य्यस्तथैव च ॥
ऋत्विग्मण्डल सम्भार-भूषणाच्छादनादिकम् ।
वृषं लक्षणसंयुक्तं वेदिमध्येऽधिवासयेत् १(†) ॥
गोसहस्राद्विनिष्क्रम्य गवां दशकमेव च २(S) ।
गोसहस्रं वहिः कुर्य्याद्वस्त्रमाल्यविभूषितम् ॥

इदं पयोभक्षमात्रमधिवासनदिनात् पूर्व्वेद्युः कार्य्यम् । अधिवासनदिने तु तुलापुरुषवदुपवास एव । दानदिनेऽपि पयोव्रतः स्यात् । त्रिरात्रैकरात्रयोः सा व्यवस्था ।

सुवर्णशृङ्गाभरणं रौप्यपादसमन्वितम् ।

वहिः कुर्य्याद् मण्डपाद्वहिरासादयेदित्यर्थः । अस्मिन् गोसहस्रे न धेनुत्वे नियमः ।

अतः प्रविश्य दशकं वस्त्रमाल्यैस्तु पूजयेत् ।
सुवर्णघण्टिकायुक्तं ताम्रदोहनिकान्वितम् ॥
सुवर्णतिलकोपेतं हेमपट्टैरलंकृतम् ।
कौशेयवस्त्रसंवीतं माल्यगन्धसमन्वितम् ॥
हेमरत्नयुतैः शृङ्गैश्चामरैश्चापि शोभितम् ।
पादुकोपानहच्छत्रभाजनासनसंयुतम् ३(०) ॥

अतः—मण्डपाभ्यन्तरे इत्यर्थः ।

शृङ्गे द्वे दश सौवर्णिके । खुराः पञ्चपलाः । पञ्चाशत्पलं दोहनपात्रम् । सर्व्वमिदं प्रत्येकगोदशकसमीपे स्थाप्यम् ४(+) ।

गवां दशकमध्ये स्यात् काञ्चनो नन्दिकेश्वरः ।
कौशेयवस्त्रसंवीतो नानाभरणभूषितः ॥
लवणद्रोणशिखरे माल्येक्षुफलसंयुतः ।
कुर्य्यात् पलशतादूर्द्ध्वं सर्व्वमेतदशेषतः ॥

१ (†) वृषलक्षणं वृषोत्सर्गविधाने द्रष्टव्यम्, इत्यत्र मूलपाठः ।
२ (S) इदं गोदशकं गोसहस्राद् भिन्नमिति केचित् ।
तदपि सगतम् 'सवत्सं दशकं गवामिति' भविष्योत्तरे विशेषोक्तेरिति मूलपाठः आदर्शपुस्तकान्तरे ।
३ (०) चामरासनेति क्वचिदादर्शग्रन्थे पाठः ।
४ (+) दशसौवर्णिके द्वे शृङ्गे । खुराः पञ्चपलाः स्युरिति ।

भक्तितः पलसाहस्रत्रितयं यावदेव तु १(*) ॥
गोशते वै दशांशेन सर्व्वमेतत् प्रकल्पयेत् ।
सलक्षणश्च कर्त्तव्योऽधिवासो यथाविधि ॥
ऊर्द्ध्व स्त्रिनेत्रो द्विभुजः सौम्यास्यो नन्दिकेश्वरः ।
वामे तु शूलभृद्दक्षे चाक्षमाला समन्वितः ॥

ऊर्द्ध्व स्थित इत्यर्थः । पलसाहस्रत्रितयमिति प्रागुक्तेः, इदन्तु नन्दिकेश्वरप्रतिमा-विषयमिति हेमाद्रौ ।

गोभूषणं नन्दिकेश्वरादिसर्व्वविषयमित्यस्मिन् ग्रन्थेऽभिहितम् । सर्व्वमेतत्-प्रकल्पयेदिति तु गोसहस्रोक्तम्, लवणद्रोणातिरिक्तं सर्व्वं दशांशेन कल्पयेदिति मदनरत्ने-व्याख्यातम् ।

पुण्यकालं समासाद्य गीतमङ्गलनिःस्वनैः ।
सर्व्वौषध्युदकस्नान-स्नापितो वेदवित्तमैः २(०) ॥
इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ।
नमो वो विश्वमूर्त्तिभ्यो विश्वमातृभ्य एव च ।
लोकाधिवासिनीभ्यश्च रोहिणीभ्यो नमो नमः ।
गवामङ्गेषु तिष्ठन्ति भुवनान्येकविंशतिः ॥
ब्रह्मादयस्तथा देवा रोहिण्यः पान्तु मातरः ।
गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः ॥
गावः शिरसि मे नित्यं गवां मध्ये वसाम्यहम् ।
यस्मात्त्वं वृषरूपेण धर्म्म एव सनातनः ॥
अष्टमूर्त्तिरधिष्ठानमतः पाहि सनातनः ।
इत्यामन्त्र्य तु यो दद्याद् गुरवे नन्दिकेश्वरम् ॥
सर्व्वोपकरणोपेतं गोयुगञ्च विचक्षणः ।
ऋत्विग्भ्यो धेनुमेकैकां दशकाद्विनिवेदयेत् ॥

पूर्वासादितगोदशकाद्गोद्वयं गुरवे दत्त्वा ऋत्विग्भ्यो गवामष्टकं दद्यादित्यर्थः ।

गवां शतमथैकैकं तदर्द्धं वाथ विंशतिः ।
दश पञ्चाशद्वा दद्यादन्येभ्य स्तदनुज्ञया ॥

---

१ (*) पलशतादूर्द्ध पलसहस्रत्रितयं यावदिति । गोशते वै दशांशेनेति, अत्र तु दशांशो देयो, नामिकामेकस्य वृषभं वेदिमध्येऽधिवासयेत् । 'लवणद्रोणशिखरे—लवणद्रोणोपरि' इत्यर्थः । अत्र तु हेमाद्रावपि नन्दिकेश्वरलक्षणादिकं स्पष्टमुक्तम् । पलदशकादूर्द्ध पलशतं यावदिति साभरणनन्दिकेश्वरस्थापनादिकं कुर्य्यादित्यर्थः । इति हेमाद्रौ ।

२ (०) 'वेदपुङ्गवै' रिति हेमाद्रौ पाठः ।

नैका बहुभ्यो दातव्या यतो दोषकरी भवेत् ।
बह्वयश्चैकस्य दातव्याः श्रीमदारोग्यवृद्धये ॥
पयोव्रतः पुनस्तिष्ठेदेकाहं गोसहस्रदः १(+) ।
श्रावयेच्छृणुयाद्वापि महादानानुकीर्त्तनम् ॥
तद्दिनं ब्रह्मचारी स्याद्यदीच्छेद्विपुलां श्रियम् ।
अनेन विधिना यस्तु गोसहस्रप्रदो भवेत् ॥
सर्व्वपापविनिर्म्मुक्तः स्वर्गलोके महीयते २(S) ।
इति गोसहस्राख्यं पञ्चममहादानम् ॥

—*—

## (३४) अथ हिरण्यकामधेनुदानम् ।

—*—

### 124 मात्स्ये—

अथातः सम्प्रवक्ष्यामि कामधेनु-विधिं परम् ।
सर्व्व-कामप्रदं नृणां महापातक नाशनम् ॥

---

१ (+) इदं हि पयोव्रतानन्तरं ब्रह्मचर्यापेक्षम् इति विशेषो हेमाद्रौ । 'अयज्ञो न ऋतमिष्यति' इतिवचनात् ।

२ (S) 'सप्तजन्मानुगमं पापं पुरुषैः सप्तभिः कृतम् ।
तत्क्षणाद् विधिनानेन नाशयेद् गोप्रदो नरः ।
सर्व्वेषामिष्टदानानां फलं यत् परिकीर्त्तितम् ॥
तदवाप्नोति विप्रर्षे गोसहस्रप्रदो नरः ।
अश्वमेधं दशोत्तमं गोसहस्रप्रदस्तु यः ॥
दद्यादाम्नाया इत्याहुः पितरः ( पितर )तदर्थानि हि ।
यश्चादनेन विधिना गोसहस्रं यो नरः ।
प्रदद्यात् स विशुद्धात्मा याति तत् परमं पदमिति ॥
एवं मत्स्यपुराणेऽन्यत् फलाधिकं प्रकरणान्ते प्रकीर्त्तितम् ।
अनेन विधिना यस्तु गोसहस्रप्रदो भवेत् ।
सर्व्वपापविनिर्मुक्तः सिद्धचारणसेवितः । इत्यारभ्य—
इति पठति य एतद् गोसहस्रप्रदानम्,
सुरभवनमुपेयात् संस्मरेद्वापि पश्येत् ।
अनुभवति सुखं वा वाच्यमानो निकामम् ,
प्रहतकलुषदेहः सोऽपि यातीन्द्रलोके—इत्यन्तम् ।

लोकेशावाहनं तद्वद्धोमः कार्य्योऽधिवासनम्।
तुलापुरुषवत् कुर्य्यात् कुण्डमण्डपवेदिकाः॥
स्वल्पेष्वेकाग्निवत् कुर्य्याद् गुरुरेव समाहितः।
काञ्चनस्यापि शुद्धस्य धेनुं वत्सञ्च कारयेत्॥
उत्तमा पलसहस्रे स्तदर्द्धेन तु मध्यमा।
कनीयसी तदर्द्धेन कामधेनुः प्रकीर्त्तिता १(०)॥

अत्रोक्त सुवर्णचतुर्थांशेन वत्सः कार्य्यः, गुड़धेन्वादौ तथा दर्शनात्।

शक्तितस्त्रिपलादूर्द्ध्वं अशक्तोऽपीह कारयेत्।
वेद्यां कृष्णाजिनं न्यस्य गुड़प्रस्थसमन्वितम्॥
न्यसेदुपरि तां धेनुं महारत्नैरलङ्कृताम्।

अत्र कृष्णाजिनस्थ गुड़प्रस्थे स्थाप्येत्यर्थः २(।)।

कुम्भाष्टकसमोपेतां नानाफल समन्विताम्॥
तथाष्टादश धान्यानि समन्तात् परिकल्पयेत्।
इक्षुदण्डाष्टकन्तद्वन्नानाफलसमन्वितम्॥
भाजनञ्चासनन्तद्वत् ताम्रदोहनकन्तथा।

कौशेयवस्त्रद्वयसंप्रयुक्ताम्,
दीपातपत्राभरणाभिरामाम्।
सचामरां कुण्डलिनीं सघण्टाम्,
मणिकपादुकसरौप्यपादाम् ३(‡)॥
रसैश्च सर्व्वैः परितोऽभिजुष्टाम्,
हरिद्रयापुष्पफलैरनेकैः।
अजाजिकुस्तुम्बरुशर्कराभिः,
वितानकं चोपरि पञ्चवर्णम् ४(S)॥

---

१ (०) अवत् देश-काल-शुद्धिमारभ्य तोरणपताकाद्यन्तं सर्व्वं प्रोक्तं मात्स्योक्त तुलापुरुष-दानविहितं वेदितव्यम्। स्वल्पेष्वपि एकाग्निवदिति—एकाग्निवत् करणमुक्तं हेमाद्रौ। प्रस्थपरिमाणादिकं कल्पतरुदाने व्याख्यातम्।

२ (।) यद्यप्यत्र वत्सस्य परिमाणं नोक्तं तथापि कामधेनुविधानानुसारेण तद्धेमचतुर्थांशेन वत्सः कल्पनीयः।

३ (‡) अत्र मणिपिञ्छामिति हेमाद्रौ पाठः। मणनासाधनत्वाद्गणपिका इत्यर्थः। यद्वा वा अक्षमाला कण्ठभूषणं वेति केचित्। 'अलिञ्जरः स्यान्मणिकः' महाकुम्भः इति वा। मणिकं धान्यादिरक्षणे बृहदादिपात्रम्।

४ (S) अत्र चामरपञ्चवर्णमिति ग्रन्थान्तरे पाठः।

अत्राभरणं-ललाटतिलकादि, गणत्रिकाक्षमाला ।
अजाजी जीरकम् , कुस्तुम्बुरु-धान्यकमित्यर्थः १(०) ।
ततस्ततोमङ्गलवेदघोषैः, प्रदक्षिणीकृत्य सपुष्पहस्तः ।
आवाहयेत्तां गुडधेनुमन्त्रैः, द्विजाय दद्यादथ दर्भपाणिः ॥

**गुडधेनुमन्त्रास्ते यथा—**

ॐ या लक्ष्मीः सर्व्वभूतानां याचदेवेष्ववस्थिता ।
धेनुरूपेण सा देवी ममशान्ति व्यपोहतु (२†) ॥
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा याच विभावसोः ।
चन्द्रार्कशक्र शक्तिर्या धेनुरूपान्तु साश्रिये ॥
चतुर्म्मुखस्य या लक्ष्मी र्यालक्ष्मीर्धनद स्यच ।
लक्ष्मीर्या लोकपालानां सा धेनु र्व्वरदास्तु मे ॥
स्वधात्वं पितृ मुख्यानां स्वाहा यज्ञभुजान्तथा ।
सर्व्वपाप हरा धेनुः तस्माच्छान्ति प्रयच्छ मे ३(*) ॥

इति पुष्पाञ्जलिनावाह्य पठेत् ।

त्वं सर्व्वदेवगणमन्दिर सङ्गतासि, विश्वेश्वरि त्रिपथगोदधि पर्व्वतानाम् ।
त्वद्दानशस्त्र शकलीकृतपात कौघः, प्राप्तोऽस्मि निर्वृति मतीवपरां नमामि ॥
लोके यथेप्सित फलार्थमवाप दानात, धर्म्मं विस्मृत्य भवदुःखमुपैति मर्त्यः ४(+) ।
संसारदुःखशमनाय प्रभूतकामं, त्वां कामधेनुमिति देवगणा वदन्ति ॥

इतिद्वाभ्यां मन्त्राभ्यां सन्मन्त्य वेदिपश्चिमभागे प्राङ्मुखोपविष्ट उदङ्मुखेभ्यः गुरुभ्यः । ॐअद्येत्यादि देशकालौ सङ्कल्प्यामुक गोत्राया मुकशर्म्मणेऽमुकवेदाध्यायिने ब्राह्मणाय तुभ्यं गुरवे सम्प्रददे न ममेति ।

आमन्त्र्य कुलशील (रूप)गुणान्विताय, विप्राय यः कनकधेनु मिमां प्रदद्यात् ।
प्राप्नोति धामपुरन्दरदेवजुष्टम् , कन्यागणैः परिवृतम्पदमिन्दुमौलेः ॥

ततो वेदिस्थित देवतापूजनस्तवनविसर्ज्जनानि कुर्य्यात । दक्षिणादानन्तु प्रागुक्तम् ।

इति हिरण्य कामधेनुदानविधिः ॥

---

१ (०) 'जीरको जरणोऽजाजीकणा' इति कोषः ।
'कुस्तुम्बुरु धान्यकम्' .

(†) शान्तिं प्रयच्छत्विति क्वचिदादर्शपुस्तके पाठः ।

३ (०) इति हेमाद्रिः [illegible] ततः 'सङ्गतासि' इत्यत्र 'मन्दिरसङ्गभूत' इति हेमाद्रौ पाठः ।

४ (‡) 'फलार्थं विधायिनी त्वाम' इति हेमाद्रौ च पाठः ।

# (३५) अथ हिरण्याश्वमहादानम्।

—*—

125 मात्स्ये—

अथातः संप्रवक्ष्यामि हिरण्याश्वविधिम्परम्।
यस्य प्रसादाद्भुवन मनन्तफलमश्नुते ॥
पुण्यान्तिथिं समासाद्य कृत्वा-ब्राह्मणवाचनम्।
लोकेशावाहनङ्कुर्य्यात्तुला पुरुषदानवत् ॥
ऋत्विङ्मण्डलसम्भार भूषणाच्छादनादिकम्।
स्वल्पेऽप्येकाग्निवत् कुर्य्याद्धेमवाजिमखं बुधः ॥

अत्रादिशब्देन गोविन्दादिपूजा वृद्धिश्राद्धादिकं सर्व्वं गृह्यते।

स्थापयेद्वेदिमध्येतु कृष्णाजिनन्तिलोपरि।

कृष्णाजिनस्थतिलोपरि इत्यर्थः।

अत्र तिलाः द्रोणपरिमाणाः। दानान्तरे तथा दर्शनात्।

कौशेयवस्त्रसम्वीतं कारयेद्धेमवाजिनम्।
शक्तित स्त्रिपलादूर्द्ध्वं आसहस्र पलाद्बुधः ॥
पादु कोपानहच्छत्र चामरासनभाजनैः।
पूर्ण कुम्भाष्टकोपेतं माल्येक्षुफल संयुतम्।
शय्यां सोपस्करान्तद्वद्धेममार्त्तण्ड संयुताम् ॥

हेमवाजिनं कृत्वा कौशेयसम्वीत पादुकादिभिः सह कृष्णाजिन तिलोपरि स्थापयेदित्यर्थः। शय्यासोपस्करामिति—विविधास्तरणोपधानं कफलकुङ्कुम कर्पूरागरुचन्दन ताम्बूलदर्पणकङ्कतिका चामरव्यजनादि, एतद्ग्रस्थित पात्रासि मुद्रिकोपानद्युगल ताम्रघटिकावितानादयः। मार्त्तन्तसंयुतमिति, उपर्य्यारूढ सौवर्ण सूर्य्याश्वं कुर्य्यादित्यर्थः १(†)।

ततः सर्व्वौषधिस्नानैः स्नापितो वेदपुङ्गवैः।
इममुच्चारयेन्मन्त्रं गृहीत-कुसुमाञ्जलिः ॥

अथ सर्व्वौषधिवारि स्नातः शुक्लाम्बर धरो यजमान स्त्रिप्रदक्षिणी कृत्य वक्ष्यमाण-मन्त्रमुदीरयेत्। तद्यथा—

---

१ (†) स्वल्पत्वे हिरण्याश्वमहादानम्।

'नमस्ते सर्ववेदेश वेदाहरण लम्पट !
वाजिरूपेण मामस्मात् पाहि संसार-सागरात् ॥
त्वमेव सप्तधा भूत्वा छन्दोरूपेण भास्कर ।
यस्माद् भ्रामयते लोकानतः पाहि सनातनः ॥
एवं सुचार्य्य गुरवे तमश्वं विनिवेदयेत् ।
दत्त्वा पापक्षयाद्भानोर्लोकमभ्येति शाश्वतम् ॥
गोभिर्विभवतः सर्व्वान् ऋत्विजश्चाभिपूजयेत् ।
सर्व्वं शय्यादिकञ्च कृत्वा भुञ्जीत तैलमेवहि ।
पुराण श्रवणन्तद्वत् कारयेद्भोजनादनु ॥

अत्र तु दानादिकृत्यं प्राग्वदनु सन्धेयम् । दक्षिणा तु सुवर्णम् । एवं हि आचार्य्यायाश्वं प्रदाय ऋत्विग्भ्यो यथाशक्ति सुवर्णादि दद्यात् ।

'इमं हिरण्याश्व विधिंकरोति यः,
सम्पूज्यमानो दिवि देवतेन्द्रैः ।
विमुक्तपापः सपुरं मुरारेः,
प्राप्नोति सिद्धैरभि पूजितः सन् ॥
इति मात्स्योक्त हिरण्याश्वदानविधिः १(‡) ॥

—*—

## (३६) अथ हेमहस्तिरथाभिधानदानम् ।

—*—

### (126) मात्स्ये—

अथातः संप्रवक्ष्यामि हेमहस्तिरथं शुभम् ।
यस्य प्रदानाद्भवनं वैष्णवं याति मानवः ।

---

१ (†) एतद्धिरण्याश्वदानं [illegible] गोभिल-[illegible] [illegible] ।
२ (‡) '[illegible]' ।
'[illegible]' [illegible] ।
''[illegible] [illegible] ।
[illegible]' ॥

पुण्यान्तिथिममासाद्य तुलापुरुषदानकम् ॥
विप्रवाचनकं कुर्य्यात् लोकेशावाहनं बुधः ।
ऋत्विङ्मण्डल सम्भार भूषणाच्छादनादिकम् ॥
अत्राप्युपोषितस्तद्वद्ब्राह्मणैः सह भोजनम् ।
इहादिशब्देन गोविन्द पूजादि गृह्यते ।

उपोषित इति—उपवासाशक्तैः नक्तमपि वेदितव्यम् १(†) ।

कुर्य्यात्पुष्परथाकारं काञ्चनं मणिमण्डितम् ।
वलभीभिर्विचित्राभिश्चक्र‍ु श्चक्र समन्वितम् ॥
लोकपालाष्टकोपेतं शिवार्कब्रह्मसंयुतम् ।
मध्ये नारायणोपेतं लक्ष्मी-पुष्टि-समन्वितम् ॥

पुष्परथ इति पुष्पैर्विरचितचतुःशालाकारेणाच्छादितः क्रीडारथः । वलभ्योगोपानस्यः । ताश्च दिक् चतुष्टये विचित्रघटनाभिः कार्य्याः । तत्रैव दिगष्टकस्थिता लोकपालाः पूर्व्वोक्त लक्षणाः कार्याः । वलभ्युपरितनकुटीचक्रा(वक्र)च्छादनानीति केचित् । शिवार्कादि लक्षणं प्राक्परिभाषायामुक्तम् । नारायणादेः लक्षणं पञ्चरात्रे ।

नारायणो चतुर्व्वाहु शङ्खं चक्रं तथोत्तरे ।
दक्षिणेतु महापद्मे नीलजीमुत · सन्निभे ॥
वामे श्रीर्वल्लकीहस्ता पुष्टिः पद्मकरा परेति ।

मध्य शब्दस्योभयत्र सम्बन्धाच्छिवादि प्रतिमात्रयं नारायणादि प्रतिमात्रयञ्च मध्ये एव स्थापयेत् ।

कृष्णाजिने तिलाद्रोणं कृत्वा संस्थापयेद्रथम् ।
तथा द्वादश धान्यानि भाजनासन बन्धनैः ॥
दीपिकोपानहच्छत्र पादुका-दर्पणान्वितम् ।
ध्वजे तु गरुडं कुर्य्यात् कूरवाग्रे विनायकम् २(०)॥

---

(†) उपवासासमर्थविषये नक्तव्रतं प्रागुक्तम् ।
'दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे ।
तत् नक्तं विजानीयान्नक्तं निशि भोजनं' इति ।
अन्यत्र, कूर्मे—
नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम् ।
यत्पञ्चगव्यं यदि वाऽपि वायुः प्रशस्तमत्रोत्तरमुत्तरञ्चेति ।'

२(०) कृत्वाग्रे इति वा पाठः ।

नाना फलसमायुक्तं उपरिष्टा द्वितानकम्।
कौशेयं पञ्चवर्णञ्च अम्लानकुसुमान्वितम्॥
चतुर्भिः कलशैः सार्द्धं गोभिरष्टाभिरन्वितम्।
चतुर्भिर्हयमातङ्कैः मुक्तादाम विभूषितैः॥
स्वरूपतः करिण्याञ्च युक्तं कृत्वा निवेदयेत्।

भाजनं-भोजनपात्रम्। कांस्यं गरुड़ लक्षणं यथा—१ (०)

127 नारद ये—

ॐ ऐन्द्रस्याग्रतः पक्षी गुड़ाकेशः कृताञ्जलिः।
सव्यजानुगतो भूमौ मूर्द्धाग्र फणिमण्डितः॥
पक्षिजङ्घो नरग्रीव स्तुङ्गनासोनराङ्गकः।
द्विबाहुः पक्षयुक्तश्च कर्त्तव्यो विनतासुतः॥

विनायकलक्षणं ग्रहप्रकरणे। अम्लानकुसुमानि-पुष्पविशेषः। महासहेति-हेमाद्रिः १(+)। बाणपुष्पाणीति-दानरत्नाकरः। निवेदयेन्निवेदनार्थमुपकल्पयेत्।

कुर्य्यात् पञ्चपलादूर्द्ध आधारादपि शक्तितः।
ध्वजेतु गरुड़ं कुर्य्यात् इत्यादि, ध्वजोदण्डः॥

भारतः प्राक।

ततोमङ्गल शब्देन स्नापितोवेदपुङ्गवैः।
त्रिः प्रदक्षिणमावृत्य गृहीत-कुसुमाञ्जलिः॥
इम मुच्चारयेन्मन्त्रं ब्राह्मणेभ्योनिवेदयेत्।
नमोनमः शङ्कर पद्मजार्क, लोकेश विद्याधर वासुदेवैः।
त्वं सेव्यसे देवपुराणयज्ञ, तेजोमयास्यदमः पाहि यस्मात्॥
यत् तत् पदं गुह्यतमं मुरारे, रानन्दहेतुगुणरूपधरोह्यनन्तः।
योगैकमानसदृशोमुनयः समाधौ,
पश्यन्ति तत्त्वमसि नाथ रथेऽधिरूढः।
यस्मात्त्वमेव भवसागर-संश्रितानाम्,
आनन्दभाण्डमधुर-घृत पानपात्रम्॥

---

१ (०) कार्त्तस्वरनिर्मितकस्य मूर्त्ति मवर्णमिति।

२ (+) 'यदि वीणिका द्रुपकरतीति भावात्' महाबलीतिप्रसिद्ध शैव मवरति' इति हेमाद्रिः। 'वीणाकर्क पंचीकस'मितिप्रासिद्धाः।

तिलैः श्रीहितिभिरेवात्र महाव्याहृतिभिर्यजेत् ।
होमान्ते भगवद्विष्णुः पूज्यः स्वर्णमयः शुभः ॥
उपचारैः षोडशभिर्मन्त्रैः पौरुष सम्भवैः । १(*) ।
ततश्च धेनुर्दातव्या कथावक्त्रे प्रयत्नतः ॥
एवं कृते विधानेचेत् सर्वपाप निवारणे ।
फलदं स्यात् पुराणन्तु श्रीमद्भागवतं शुभम् ॥ इति ।

इति संक्षेपेण श्रीमद्भागवतदानम् २(†) ।

—•—

## (३८) अथ रामायणश्रवणविधानम् ३(‡) ।

रमायणे श्रुते दद्याद्रथं हेममयं सुधीः ।
चतुर्भिर्वाजिभिर्युक्तं तथा क्षौम पताकया ॥
यन्त्राचैव समायुक्तं किङ्किणीनाद नादितम् ।
एवम्भूतं रथं दत्वा धेनुं दद्यात् पयस्विनीम् ॥
ब्राह्मणान् भोजयेत् पश्चाच्छत मष्टोत्तरं सुधीः ।
एवं कृते विधाने च महाकाव्यं फलप्रदम् ॥
रामायणं भवेन्नूनं नात्र कार्य्या विचारणा ॥

—*—

## (३९) अथ वाशिष्ठ श्रवणम् ४(×) ।

वाशिष्ठ श्रवणे जाते कृतिना विधिपूर्वकम् ।
प्रदेयं शशिनोबिम्बं राजतं पलमानतः ॥
हवनं पायसेनैव साज्येनायुत सम्मितम् ।

---

१ (*) अत्र संक्षेपाद्भागवतदानमात्रं उच्यते ततः यथाविस्तरेण वक्ष्यते ।

२ (†) एतच्चतुर्विधं-वाल्मीकि-रामायणम्, वाशिष्ठ रामायणम्, अध्यात्मरामायणम्, अद्भुत-रामायणमिति ।

३ (‡) "यावत् स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावद्रामायणकथा लोकेषु प्रचरिष्यति ॥"

अन्यच्च— 'इतिहास पुराणानि रामस्य चरितानि' इत्यादि धर्मशास्त्रे ।
इत्र भेदस्य ताबद् चतुश्चत्वारिंशद्रूपैरुपलक्षणमाध्यात्मिकि ।

४ (×) अयं वाशिष्ठ रामायणेऽद्वैतविधिप्रतिपादको ग्रन्थः । वैराग्य-मुमुक्षु-उत्पत्ति-स्थिति-उपशम-निर्वाणानीति षट् प्रकरणानि सन्ति । सटीकमेतत् ग्रन्थसंख्या षट्सहस्राधिक षट् त्रिंशत्सहस्रम् ।
अध्यात्म श्रीमद्वाल्मिकिव्याख्यायुक्त श्रीमद्वाशिष्ठ महारामायण मिति नामान्तरम् ।

## (४०) अथ काशीखण्ड श्रवण विधानम् १(+)।

—*—

काशी खण्डे श्रुते दद्याद् गवां पञ्चक मादरात् ।
विधान पूर्व्वकं कार्य्यं गायत्र्या हवनम्मतम् ॥
अयुतं वा सहस्रं वा शतं चाष्टाधिकन्तथा ।
प्रधानं पायसं साज्यं प्रायश्चित्तं चतुर्व्विधम् ॥
कृतेतु हवने पश्चाद् गवां दानं विधीयते ।
ततश्च भोजयेद्विप्रान् तेषां पत्नीश्च भोजयेत् ॥
एवं कृते विधाने च फलप्राप्तिर्भवेन्नृणाम् ।

—*—

## (४१) ब्रह्मवैवर्त्त श्रवणम् २(×)।

—*—

ब्रह्माण्डे ब्रह्मवैवर्त्ते तथा ब्रह्मणि संश्रुते ।
गां भूमिं महिषीं दद्यात् क्रमाद् गोदानमेव च ॥

—*—

## (४२) अथ कालिका पुराण श्रवणम् ३(*)।

—*—

पुराणं कालिकायाश्च श्रुते दद्याद्दर्सि शुभम् ।
कांस्य पात्राणि देयानि घण्टादर्पण मञ्जुषाः ॥
गायत्र्या हवनं कार्य्यं सहस्रं तिल सर्पिषा ।
होमान्ते विधिवत् कुर्य्याच्छत-ब्राह्मणभोजनम् ॥

---

१ (+) इदं खण्ड पुराणान्तर्गत पुराणविशेषत्वेन कीर्त्तितम्। अत्र विश्वेश्वरो वाराणसी-महातीर्थवर्णनमस्ति।

२ (×) अष्टादशपुराणेषु दशमसंख्यक मिदं ब्रह्मवैवर्त्त पुराणम्। अस्य श्लोक संख्या अष्टादश सहस्रम्।

३ (*) एतदुपपुराणेषु [illegible] परि पठितम्। [illegible] अष्टादशोपपुराणेषु मध्ये [illegible]-संख्यकत्वं [illegible]। पुराणहर्त्ता भागवतोपासकमात्रे, पाद्मोत्तरखण्डे, ब्रह्मवैवर्त्ते श्रीकृष्ण जन्मखण्डे, विष्णुपुराणे तृतीयांशे चास्ति।

## (४३) अथ माघमाहात्म्यवर्णनम् १(*)।

—*—

शृणुयान्माघमाहात्म्यं माघे स्नाने कृते सति।
सवृषं शकटं दद्यात् कम्बलं कनकं घृतम्॥
त्रिंशच्छूर्पाणि वंशस्य सालङ्काराणि शक्तितः।
तावन्ति मिथुनान्येव ( निपुणान्येव ) भोजयेत् सादरं सुधीः॥
भुक्तेषु मिथुनेष्वेव दद्याच्छूर्पाणि भक्तिमान्।

### तत्र शूर्पदानमन्त्रः—

माधवः प्रतिगृह्णाति माधवो वै ददाति च।
माधवस्तारको लोके प्रीयतां माधवोऽच्युतः॥

इति मकरमाहात्म्यकथनम्।

—*—

## (४४) अथ नानापुराणविधिः २(+)।

—*—

येषां प्रोक्तं मया चात्र पुराणानां विधानकम्।
पृथक्त्वेनैव द्रष्टव्यं पृथग्दानसमन्वितम्॥

---

१ (*) इतमस्य पाद्मे उत्तरखण्डे चतुर्थाध्याये ब्यतस्वं चास्ति।
'तुला-मकर-मेषेषु प्रातःस्नानं विधीयते।
हविष्यं ब्रह्मचर्यञ्च महापातकनाशनम्'॥ इतिस्मृतौ।
'माघमासमिमं पुण्यं स्नास्येऽहं देव माधव'।
'मकरस्थे रवौ माघे गोविन्दाच्युतमाधव'।

२ (+) अष्टादशमहापुराणानि ब्राह्मादि-ब्रह्माण्डान्तानि परिगणितानि पद्मपुराणादिषु।
छान्दोग्ये सप्तमाध्यायारम्भे—"चतुर्थमितिहासपुराणम्", इति पुराणनामापि दृश्यते।
उपपुराणानि—देवी-साम्ब-आदित्यपुराणादीनि। उपोपपुराणानि—सौर-नान्दिकेश्वर-
पराशरोपपुराणादीनि। अन्यत् श्रीमन्मधुसूदने प्रस्थानभेदे द्रष्टव्यम्।
'वक्ष्यमाणपुराणमतीदं पुराणं तेन कीर्तितम्' इति भविष्ये।

मत्स्यादीनान्तु शेषाणां सर्व्वसाधारणो विधिः ।
पुराणश्रवणान्ते तु दद्याद्धेनुं सवत्सकाम् ॥
अलङ्कारादिसहितां साधुलक्षणलक्षिताम् ।
वेदार्थो दुर्गमो लोके मीमांसा हृदयं परम् ॥
व्यासेन कृपया नृणां पुराणं सुगमं कृतम् ।
प्रभुत्वं मित्रधर्म्मश्च कान्तासम्मतिरेव च ॥
वेदे पुराणे काव्ये च क्रमशः परिकीर्त्यते ।
पुराणे श्रूयमाणे च ग्रामे च सकलैर्नरैः ॥
न शृणोति कथं पापः पापविच्छित्तिकारकम् ।
तेनाज्ञातास्तु सर्वेऽन्ये न श्रुतं येन भारतम् ॥
न दत्तं ब्राह्मणे किञ्चिन्न स्नातं गोमतीजले ।
पौराणीं वृत्तिमाश्रित्य ये जीवन्ति द्विजोत्तमाः ॥
ते यान्ति ब्रह्मसायुज्यमनन्तं गतकल्मषाः ।
ते सूर्य्यमण्डलं भित्त्वा यान्ति ब्रह्म सनातनम् ॥
गङ्गातोयेन शुद्धेन पवित्रीकृतविग्रहाः १(*) ।
ये शृण्वन्ति कथां विष्णोस्तुल्यास्ते सनकादिभिः ॥
विप्राणां शौनकस्तीर्णोऽभवच्च गतकल्मषः ।
पारीक्षितिस्तु भूपानां हरिदत्तो विशां तथा ॥
पुराणश्रवणेनैव विधिपूर्व्वेण सत्वरम् ।
तस्मात् पुराणश्रवणं विधिपूर्व्वं हितं नृप ॥
श्रवणान्ते तु होतव्यं सहस्रं हविषाष्टकम् ।
दद्याच्च धेनुं विप्राय ब्राह्मणान् भोजयेत्ततः ॥

इति नानापुराणविधानम् ।

—*—

१ (*) श्लोकोऽयं पाठान्तरत्वेन सन्निविष्टः । मूले लिखितमस्ति । [illegible]
भाव: स्मृति-पुराणेतिहासेषु वर्णितमस्ति ।

## (४५) अथ वेदपारायणविधानम् १(*)।

—*—

आश्विने सर्व्वविघ्नानां शमनार्थमथापि वा।
कदाचित् समयोत्पन्न महाव्याधिशमाय च ॥
वेदपारायणं कुर्य्यात् कारयेदथवा बुधः।
मन्त्रब्राह्मणवादौ तु षड़ङ्गानि ततः पठेत् २(†) ॥
वाकोवाक्यं पुराणञ्च नाराशंसीर्हि गाथिकाः ३(‡)।
इतिहासास्तथा विद्या अधीयीत यथाक्रमम् ॥
ऋग्वेदादिचतुर्णाञ्च वेदानां पठनञ्च यत्।
पारायणमिति प्रोक्तं महाशान्तिकरं परम् ॥
पारायणे समाप्ते तु गायत्र्या हवनं स्मृतम्।
प्रतिवेदन्त्वयुतसंख्यं जपश्चेत्तद्दशांशतः ॥
तिलाज्येन द्विजानाञ्च तर्पणन्तु ततः स्मृतम्।
अत्र—ब्राह्मणतर्पणन्तु मुख्यम्।

—*—

128 **तथाहि भागवते** ४(०)।

नाहं तथान्मि यजमानहविर्विताने,
श्च्योतद् घृतप्लुतमदन् हुतभुङ्मुखेन।

---

१ (*) वेदपारायणं शुक्लयजुःसंहिता परिशिष्टे यादृशमस्ति तादृशमेव कर्त्तव्यम्। स्वस्तिवाचनादिपुरःसरं कलसस्थापनादिपर्य्यन्तं कर्म्म तदुक्तं कर्त्तव्यम्। अनन्तरं पारायणम्। अन्यत्र पारायणविधिरपि तत्रैवानुसन्धेयः।

२ (†) वेदाङ्गानि षट्, यथा—शिक्षा (१) कल्पः (२) व्याकरणम् (३) निरुक्तम् (४) छन्दः (५) ज्योतिषम् (६) मुण्डकोपनिषदुक्तानि।

३ (‡) वाकोवाक्यं तर्कशास्त्रम्। पुराणं, ब्राह्मादि-प्रसिद्धमष्टादशसंख्यकम्। नाराशंसी गाथिकाश्चेति वेदभागविशेषः।
इतिहासान् महाभारतादीन्, विद्या योग-मन्त्र-शास्त्रोक्ता।

,, ,, अथवा छान्दोग्योक्ता ; यथा वेदविद्या, भूतविद्या, क्षत्रविद्या, नक्षत्रविद्या, सर्पदेवजनविद्या इत्यादि—छान्दोग्ये ७।२।१। शैव तन्त्रोक्ता चतुःषष्टिकलाविद्या वा।

४ (०) भागवतम्। तद्द्वयं श्रीमद्भागवतं, देवी भागवतञ्च। भगवतो भगवत्या वा इदं भागवतं एतयोर्मध्ये कस्य प्राधान्यं महापुराणेषु वा परिगणनं तत्सर्वं श्रीमद्भागवतस्य श्रीधरी टीका प्रारम्भे श्रीमद्देवीभागवतस्य नीलकण्ठ टीका प्रारम्भे च विपुलं चर्चितमस्ति, तज्जिज्ञासुभिरनुसन्धेयं विस्तारभिया नैव तन्यते।

यद् ब्राह्मणस्य मुखत श्चरतोऽनुघासम्,
तुष्टस्य मय्यवहिते निजकर्म्मपाकैः ॥
वेदपारायणेभ्यश्च वस्त्रभूषण काञ्चनम् १(†) ।
गाश्च दत्वा यथाशक्ति अभिषेकस्ततः स्मृतः ॥
पूर्व्वस्थापित कुम्भस्य उदकेन यवाङ्कुरैः ।
अभिषिञ्चेत् पुराचार्य्यो यजमानं सबान्धवम् ॥
अनेन विधिना यस्तु वेद पारायणञ्चरेत् ।
नश्यन्ति सकला घोराः सिद्धयश्च भवन्ति हि ॥
इति श्रीविधान मालायां वेदपारायण विधिः ॥

—*—

## तथैतस्य प्रयोगः ।

नवरात्रौ, राज्ञ-आवश्यकम् २(‡) ।

व्याध्याद्यपगम-कामस्यान्यत्रापि ।

गङ्गादितीर्थे स्नात्वा शुचिः शुक्लवासाः पीठोपविष्टः आचान्तो देशकालौ संकीर्त्त्य ३(*) श्री परमेश्वर प्रीत्यर्थं अथवासमम पृथ्वीराज चक्राधिपत्यजनक-बहुविधधर्म्म-प्रचुरतम घनधान्य सकलजनपद रत्नमण्डितानवसाधितापत्य पुरुषायुः पर्य्यन्तदिव्याङ्गनासङ्ग मानेककामिनी मध्य-नित्य क्रीड़न पूर्व्वक सकलकामावाप्त्यनन्त कालिक मोक्षप्राप्ति कामनयाऽद्यारभ्य नवमीपर्य्यन्तं वेदपारायणं करिष्ये । ब्राह्मणद्वारा चेत्तदात्र तत्कामोऽद्यारभ्यनवमी पर्य्यन्तममुकवेदान्तर्गतममुकशाखीयममुकगोत्र ममुक-प्रवरं ब्राह्मणं समस्तमन्त्र ब्राह्मण पाठार्थं वृणे-इति—प्रत्येकं वृत्वा वस्त्रासनहस्तकर्णालङ्कारादिभिः पूजयित्वा कङ्कणबन्धनं कुर्य्यात् ४(†) । देवतायतने देवाभिमुखं सप्त-धान्योपपन्ने चालचाले कलसं प्रतिष्ठाप्याभीष्ट देवं प्रपूज्य तीर्थान्यावाह्य सम्प्रार्थ्य कलशाभि मुखोवेदं पारयीत । समाप्ते पारायणे ५(‡) गायत्रीमन्त्रेण तिलाज्य द्रव्येणायुतसंख्यया

---

१ (†) वेद पारायणञ्चेति पाठोऽप्यस्ति ।

२ (‡) नवरात्रिः शारदाश्विनस्य शुक्लप्रतिपदमारभ्य नवमीं यावत्कालः । देवीमाहात्म्ये, नन्दिकेश्वर-पुराण-देवीपुराण-देवीभागवतेषु प्रमाणितत्वास्ति ।

३ (*) संकल्प इति पाठोऽप्यस्ति । इत्थं नवरात्रौ पारायणविधिः ।

४ (†) 'कङ्कणं करभूषणम्' इति रमसः ।

५ (‡) शुक्लयजुर्वेद परिशिष्टे द्विविधो वेद पारायण विधिः । तयोरेकः प्राचारणः । अन्योऽनन्तर पारायण विधिः ।

सहस्रसंख्यया वा हुत्वा काञ्चन-गवादिकं दत्वा पूर्व्वप्रतिष्ठिते कलशे यानि धान्यानि परोहन्ति तैर्धान्याङ्कुरैः सपल्लवैः कलशोदकेनाभिषेकं सम्पाद्य शतं तदर्द्धं वा ब्राह्मणान् भोजयित्वा अनाथपङ्ग्वन्धवधिरादीन् दानादिभिः प्रतोष्य बन्धुभिः सह भुञ्जीत॥

इति नवरात्रौ पारायणविधिः।

—*—

## (४६) अथ श्रीकार्त्तवीर्य्यार्ज्जुनस्य दीपविधिः।

—*—

### 129 उड्डामरेश्वर तन्त्रे—१(*)।

गोमये नोपलिप्याथ शुद्धभूमौ समाहितः।
तन्मध्ये मण्डलं कार्य्यं त्रिकोणं बिन्दु संयुतम्॥
षट्कोणं तद्बहिः कार्य्यं मध्ये मूलं समालिखेत्।
तण्डुलैः कुङ्कुमाक्तैर्वा रक्तचन्दन-मिश्रितः।
तस्योपरि न्यसेद्दीपं घृतपूरित वर्त्तिकम्।
तं दीपं विधिनाऽऽपूज्य पश्चात् सङ्कल्पयेत्ततः।
कार्त्तवीर्य्यं महाबाहो भक्तानाम भयप्रद २(†)।
गृहाण दीपं मद्दत्तं कल्याणं कुरु सर्व्वदा॥
अनेन दीप दानेन श्री महाविष्णुः कार्त्तवीर्य्यः प्रीयताम्।
पश्चिमाभिमुखं दीपः कर्त्तव्यः शुभ कर्म्मणि।
अभिचारेतु त्रितयं दक्षिणोत्तर पश्चिमम्॥
नष्ट प्राप्त्यर्थं कुर्व्वीत पञ्च सप्त नवाऽथवा।
वश्यामि काङ्क्षी कुर्व्वीत शतदीपावलीस्ततः॥

---

१ (*) उड्डामरेश्वर-वीरड्डामर-भूतडामर-प्रभृति डामरतन्त्रस्य नामान्तरमिति। प्रकृत मूलन्तु 'कालीश्वरतन्त्र' मित्यनुमीयते।

२ (†) कार्त्तवीर्य्यार्ज्जुनः माहिष्मतीपुरी लब्धजन्मा नृपेन्द्रः एतस्य वृत्तं रामायणे महाभारते ब्रह्मवैवर्त्ते पुराणादावपि। किन्त्वयन्देवताविशेषः इति प्रतिभाति।

'तस्य कीर्त्तिर्नाम करिष्यन्ति मानवाः।
न तस्य हस्त (वित्त) नाशः स्यान्नष्टञ्च लभते पुनः'॥

मारणादौ सहस्रं स्यादशसाहस्रमेव च १(*) ।
लक्षावलीः प्रकुर्व्वीत गुर्व्वाज्ञां प्राप्य साधकः ॥
चतुर्व्वर्ग फल प्राप्त्यै कुर्व्वीत प्रतिवासरम् ।
अनेन दीपदानेन कार्त्तवीर्य्यः प्रसीदतु ॥
एवं दीपं सुरेशानि ! कुर्व्वीत गुरुशासनात् ।
महाभये समुत्पन्ने चिन्ताव्याकुलिते क्षणे ॥
लवणं स्वर्णसंयुक्तं देयं रात्रौ विचक्षणैः ।
पौर्णमासी दिने कुर्य्याद् नगरैक प्रदक्षिणाम् ॥
ग्रामे पुरे गोव्रजे च साधकः सर्व्वकालतः ।
एतत्सारतरं देवि ! नदेयं यस्य कस्यचित् ॥
गुरुभक्ताय शान्ताय साधकेभ्यः प्रकाशयेत् ।
नास्तिकाय नदातव्यं परशिष्याय नोवदेत ॥
इति कार्त्तवीर्य्यस्य दीपदान विधिः ॥

—*—

## देव्युवाच २(*) ।

देव देव महावाहो भक्तानुग्रहकारक ! ।
पृच्छामि त्वां सुरश्रेष्ठ ! लोकानां हितकाम्यया ॥
कार्त्तवीर्य्यस्य नृपतेर्वद दीपविधिं प्रभो ! ।
दीप भेदांश्च विविधान् वर्त्तिभेदांस्तथैव च ॥
मन्त्रभेदान् स्थान भेदान् कृपया वद मे प्रभो ! ।

—*—

## ईश्वरउवाच ।

शृणु देवि प्रवक्ष्यामि लोकानु ग्रहकाम्यया ।
गुह्यञ्च मम सर्व्वस्वं नीचाख्ये यद्गुरात्मनि ॥

---

१ (*) अत्र वशीकरणादीनि षट् कर्म्माणि वैरणार्थं प्रसिद्धानि । तानितु वशीकरण-विद्वेषण-स्तम्भन-उच्चाटन-मोहन-मारणानीति षट् । नैतानि निर्व्वाणप्रदानि, केवलैहिकानि हिंसाद्यवद्या-श्रीचरोत्पादकानि च ।

२ (*) दीपदान विधान मुख्याऽधुना तदिति कर्त्तव्यता पद्धतिरपि नोपलभ्यतेऽतो न पौनरुक्त्यम् ।

राज चौरादि पीड़ासु ग्रहरोगभयेषु च ।
नाना दुःखेषु देवेशि ! सुख प्राप्त्यै तथैव च ॥
दीपं कुर्व्वीत विधिवद् गुरुदर्शित-मार्गतः ।
सौवर्णे राजते ताम्रे कांस्ये लौहेऽथ मृन्मये ॥
गोधूम माषमुद्गानां चूर्णेन घटितेऽपिवा ।
सौवर्णे कार्य्यसिद्धिः स्याद्रौप्ये वश्यं जगद्भवेत् ॥
ताम्रं तयोरभावेऽपि कांस्ये विद्वेषणं भवेत् १(+) ।
मारणं लोहपात्रेषु उच्चाटो मृन्मये भवेत ॥
गोधूमचूर्णघटिते विवादे विजयोध्रुवम् ।
माषे शत्रुमुखस्थम्भो मौद्गे स्याच्छान्तिरुत्तमा ॥
अलाभे सर्व्व पात्राणां ताम्रे कुर्य्याद्विचक्षणः ।
सप्तपञ्चतथा तिस्र एका वा वर्त्तिका भवेत् ॥
गुरुकार्य्येऽधिकाः कार्य्याः स्वल्पे स्वल्पा मताः प्रिये !
सूत्रं श्वेतं तथापीतं माञ्जिष्ठञ्च कुसुम्भकम् ॥
दशपञ्चाधिकाश्चैव विंशत्रिंशत्तथैवच ।
चत्वारिंशत्तथा कार्य्याः पञ्चाशदपि वा भवेत् ॥
तत्तत् कार्य्यवशाद्देवि ! कुर्य्यात्तन्तून् समाहितः ।
गो घृतेन प्रकर्त्तव्यो दीपः सर्व्वार्थसिद्धये ॥
गोमयेनोपलिप्तायां भूमौ यन्त्रं समालिखेत ।
कपिला गोमयेनैव षट् कोणं रचयेत्ततः ॥
मारबीजं, कर्णिकायां षट्पत्रे बीजषट्ककम् २(*) ।
दिक्षु बीजचतुष्कञ्च शेषैः संवेष्टयेद्धि तत् ॥
तत्र प्रत्यङ्मुखोदीपः स्थाप्यः सर्व्वाङ्गसुन्दरि !
प्राणायामेन विधिवद् मूलेना ङ्गं समाचरेत् ३(×) ॥
यन्त्रराजं लिखित्वातु ताम्रपात्रेऽष्टगन्धकैः ।
स्थापयेत्पूर्व्वतस्तस्य कुर्य्यात् सङ्कल्पमादरात् ४(ऽ) ॥

---

१ (+) तयोः सौवर्ण रौप्ययोरविद्यमाने ताम्रं व्यवहार्य्यमिति ।
२ (*) मारबीजं 'क्लीं' इत्यर्थः । कर्णिकायामनङ्गबीजं इत्यर्थः ।
३ (×) मूलेन मूलमन्त्रेण, षडङ्ग-न्यासं कुर्य्यादित्यर्थः ।
४ (ऽ) अष्टगन्ध प्रयोगस्याभावे चन्दनादयस्तदा चालिन्(?)ः कार्य्यः ।

तारं पूर्व्वं समुद्धृत्य वक्तुं वृत्तं समुद्धरेत्।
संयोजयेत्तत् सोमार्द्धं नादेन च पुनः सति !
व्योमार्द्धेन्द्वग्निना देव्या युक्तं तदपि संलिखेत्॥
वषट् पदन्ततः कार्त्तवीर्य्यार्ज्जुनपदं तथा १(*)।
माहेश्मतीमथपदं सहस्र बाहु मुच्चरेत्।
सहस्रक्रतु दीक्षितो दत्तात्रेयप्रियस्तथा॥
ङे न्ते त्येतानि संप्रोच्य आत्रेयाय पठेत्ततः।
अनुसूयागर्भरत्न पदं ङेन्तं समुच्चरेत्॥
व्योमाग्निकामकर्णेन्दु नादयुक्तं पुनः प्रिये।
चक्रिणं पुनरुद्धृत्य वह्निनादेन संयुतम्॥
वामकर्णेन्दु संयुक्तमिमं दीपं पुनर्वदेत् २(†)।
गृहाणेति पदं पश्चाद् अमुं रत्नं रक्ष रक्ष च ३(‡)॥
दुष्टान्नाशय पातय घातयेति च द्वि र्वदेत्।
शत्रुं जहि जहीत्युक्त्वा मायां प्रणवमुच्चरेत्॥
स्वबीजं मारबीजञ्च कामाक्षीं विन्दुसंयुताम्।
वह्निजायां वदेत्पश्चाद् मन्त्रशास्त्र-विचक्षणः॥
अनेन दीपवर्य्येण पश्चिमाभि मुखेन च।
मां रक्षेति वदेद्देवि ! देवदत्तपदं पुनः॥
वरप्रदानाय पदं व्योमयुग्मं वदेत्ततः।
करणेन्दुसमायुक्तं नादयुक्तं पुनः प्रिये॥
व्योमाग्निमायासंयुक्तं नादयुक्तं पुनर्वदेत्।
तारमारं द्वितीयञ्च बीजं प्रोक्त्वा वदेत्ततः ४(S)॥

---

१ (*) इयं मन्त्रोद्धार प्रणाली दत्तात्रेयतन्त्र-मन्त्रमहोदधाद्यनुसन्धेया। मन्त्रमहार्णवस्य ललितासहस्रनामभाष्ये, सौन्दर्य्य-लहरी-व्याख्याने श्रीमल्लक्ष्मीधरकृते, परीरमा रहस्यटीकायां चान्वेषणीयम्। परं 'सङ्केत विद्यागुरुवक्त्रगम्या' इति नागेशवचनात् प्राज्ञगुरुमुखाज्ज्ञेयम्।

२ (†) इदं दीपमिति क्वचित् पाठः।

३ (‡) अमुकं रक्ष रक्ष इति च पाठः साधीयान्।

" मायाम् ह्रीम् इति। प्रणवं ॐ इति।

४ (S) एतान्येव हि मन्त्रबीजानि तदुद्धारविधिश्च बीजाभिधानमन्त्रोद्धार-मन्त्राभिधानतो गुरुमुखाच्च ज्ञेयानि। यतः—'स गुरुमेवाभिगच्छेत्'। 'आचार्य्यसंमतिर्वक्ता' इत्यादयः श्रुतयः प्रोचुः। तारमारं प्रणवम्, मारं क्लीम् इति।

" एवं दत्तिवासुदेवमुनिकृत मन्त्रोद्धारकोषे ऽप्यस्ति।

वह्निजायां वदेच्चैव जलं भुवि विनिक्षिपेत् ।
तपवर्गौ सनादौच वेदादि वह्नि वल्लभा ॥
पश्चिमाभि मुखोभूत्वा कृत्वाच करसम्पुटम् ।
सकृज्जप्त्वा पुनर्मन्त्री जपेन्मन्त्रं समाहितः १(*) ॥
तारं नारायणं सेन्दुं व्योमाग्निनादसंयुतम् ।
मायायुक्तं समुद्धृत्य प्रथमं माययायुतम् ॥
उद्धरेच्च द्वितीयन्तु बीजं स्याद्वह्निवल्लभा ।
चक्रं ( क्रि ) वह्निं समायुक्तं तारनादयुतं प्रिये ॥
तारमुद्धृत्य प्रजपेद्दीपाग्रे वै सहस्रकम् ।
अनेन विधिना देवि कार्त्तवीर्य्यस्य गोपतेः २(†) ॥
दीपो देयः प्रयत्नेन सर्व्वं कार्य्यमभीप्सता ।
गुरोराज्ञां पुरस्कृत्य कुर्य्याद्देवि प्रयत्नतः ॥
अन्यथाहि कथं लोके विपरीत फलं भवेत् ।
विधानं दीपदानस्य कृतघ्ने पिशुनायच ॥
ब्रह्म कर्म्म विहीनाय न वक्तव्यं कदाचन ।
सुभक्ताय सच्छिष्याय साधकाय विशेषतः ॥
वक्तव्यं देवि ! विधिना मम प्रीतिकरं शिवम् ।
किं बहुक्तेन भो देवि ! कल्पोऽयमखिलार्थदः ॥
अथाभिधीयते मानमाज्यस्य वरवर्णिनि ! ३(*) ।
साधकानां हितार्थाय सर्व्वार्थस्य च सिद्धये ॥
पलानां पञ्चविंशत्या दीपोदेयोऽर्थसिद्धये ।
पञ्चाशताचोडुशान्त्यै शत्रुवश्याय चेष्यते ॥
पञ्चभिः सप्तभिर्देवि शत्रूणां स्यात् पराजयः ।
शतेन रोगनाशः स्यात् सहस्रेणाखिलाः क्रियाः ॥
सिद्ध्यन्ति साधकानां हि प्रयोगा येऽपि दुस्कराः ।
नित्यं दीपेन मानं हि कार्य्यं सोऽपि स्वशक्तितः ॥

---

१ (*) 'जप्त्वास्त्र' इति वा मूले पुस्तके पाठोऽस्ति पर पाठोऽयं क्लिष्टार्थव्यञ्जकः।

२ (†) गोपतिः, गोः पृथिव्याः पतिः कार्त्तवीर्य्याख्यो धरेशः।

३ (*) अत्र दीपदाने दीपस्य घृतप्रमाणं सूच्यते, कार्य्यविशेषे दीपस्य घृतस्य एतत्प्रमाणमिति

यथा कथञ्चिद्देवेशि नित्यं दीपं प्रकल्पयेत ।
कार्त्तवीर्य्याय देवेशि सर्व्वकल्याण सिद्धये ॥
गुरु कार्य्येऽधिकं मानं कर्त्तव्यं देवि ! सर्व्वदा ।
लघुद्रव्यैः प्रकर्त्तव्यः स्वल्पे कार्य्ये वरानने ! ॥
विना मानं न कुर्व्वीत कार्त्तवीर्य्यस्य गोपतेः ।
प्रदीपं देवि कार्य्यार्थं कुर्व्वन् सिद्धिमवाप्नुयात् ॥
इति उड्डामरेश्वर तन्त्रसंवादे कार्त्तवीर्य्यदीपदान विधिः ॥

—*—

## (४७) अथ कार्त्तवीर्य्यस्य कवच विधानम् ।

—*—

### श्रीदेव्युवाच ।

देवादिदेव सर्व्वज्ञ ! सर्व्वलोकहिते रतः ।
केन रक्षा भवेन्नृणां भीतानां विविधापदि ॥
राजचोरादिपीड़ासु शस्त्राग्निविषपातने ।
महाभये महानाशे महानाबि गतेऽर्णवे ॥
महामृत्युभये घोरे महाकलहपातने ।
केनोपायेन शान्तिः स्यात् साधकानां महेश्वर ! ॥
अनष्टद्रव्यरक्षा च नष्टस्य पुनरागमः ।
सर्व्वाकर्षणसंज्ञोऽयं सर्व्वसम्बलनन्तथा ॥
भवत्यभीष्टं जन्तूणां केन तद् वद मे शिव ! ।

—*—

### ईश्वर उवाच—

शृणु गुह्यतमं देवि ! गोपनीयं प्रयत्नतः १(×) ।
अवाच्यमपि वक्ष्यामि तव लोकहिताय वै ॥
कवचं कार्त्तवीर्य्यस्य साङ्गावरणकं क्रमात् ।
समूर्त्ति मुक्ति शक्तिमन्त्रैश्च सजपध्यानमेव च २(*) ॥

१ (×) अत्र गुह्यतमत्वं गोपनीयत्व मस्यानेऽनधिकारिणि उपदेशे अनिष्टापातादुभय मुक्तम् । तथाहि कवयः 'अस्थाने पततामतीव महतामेताहृशी दुर्गति' रित्याहुः ।
२ (*) ध्यान पूर्व्वकमिति क्वचित् पाठः ।

सहस्रादित्यसंकाशे नानारत्नसमुज्ज्वले।
भास्वद्ध्वजपताकाढ्ये [ह्ये] तुरगायुतभूषिते ॥
महासम्वर्त्तकामोद भीमरावनिवारिणि।
समुद्धृतमहाच्छत्रवितानितवियत्पथे ॥
महारथवरे दीप्ते नानायुधविराजिते।
सुस्थिरं विपुलोदार-सहस्रभुजमण्डितम् ॥
वामैरुद्दण्ड-कोदण्डान् दधानमपरैः शरान्।
किरीटहारमुकुट केयूरवलयाङ्गदैः।
तत्पार्श्वदेश्वराः स्व स्व वाहनायुधभूषणाः।
सर्व्वदिक्षु स्थिताः पान्तु मामिन्द्राद्या महाबलाः ॥
एतास्तस्य समाख्याताः सर्व्वावरणदेवताः १(+)।
सर्व्वतो मां सदा पान्तु सर्व्वशक्तिसमन्विताः ॥
हृदये चोदरे नाभौ जठरे गुह्यमण्डले।
ऊरुयुग्जानुपादेषु मूर्ध्नि भ्रूयुगले पुनः ॥
कर्णाक्षिनासिकाजिह्वा कण्ठबाहुयुगेषु च।
दशवीजात्मका मन्त्रा यशःसमृद्धिदायकाः ॥
तेजोरूपाः स्थिताः पान्तु वाञ्छासुर वरद्रुमाः।
दश चान्ये महावर्णा मन्त्ररूपा महोज्ज्वलाः २(*) ॥
व्यापकत्वेन पान्त्वस्मान् आपादतलमस्तकम्।
कार्त्तवीर्य्यः शिरः पातु ललाटं हैहयेश्वरः ॥
सुमुखो मे मुखं पातु कर्णौ व्याप्तं जगत्त्रयम्।
सुकुमारो हनू पातु भ्रयुगं मे जनार्द्दनः ॥
नयने पुण्डरीकाक्षो नासिकां मे गुणाकरः।
अधरोष्ठौ सदा पातु ब्रह्मण्यो द्विजान् कविः ॥
सर्व्वशास्त्रकलाधारो जिह्वां चिबुकमव्ययः।
दत्तात्रेयप्रियः कण्ठं स्कन्धं राजकुलेश्वरः ॥
भुजौ दशास्यदर्पघ्नो हृदयं मे महाबलः।
करौ सर्व्वार्थदः पातु कराग्रे तु जगत्प्रियः ॥

---

१ (+) अष्टावरणदेवताः परिवाराः इति बोध्यम्।

२ (*) मन्त्रोक्ताः कार्त्तवीर्य्यस्य दशसंख्यका वर्णा इत्यर्थः।

रेवाम्बुलीलासन्तप्तो जठरं मेऽभिरक्षतु ।
महावीरस्तु मे नाभिं पार्श्वौ मे सर्व्वदुष्टहा ॥
सहस्रभुजभृत् पृष्ठं सप्तद्वीपाधिपः कटिम् ।
ऊरू माहेष्मती नाथो जानुनी वल्लभो भुवः ॥
जङ्घे वीराधिपः पातु पातु पादौ मनोजवः ।
पातु सर्व्वायुधधरः सर्व्वाङ्गं सर्व्वसन्धिषु १(*) ॥
सर्व्वदुष्टान्तकः पातु धात्वष्टक-कलेवरम् ।
प्राणादिदश जीवेशान् सर्व्वशिष्टेष्टदोऽवतु ॥
वशीकृतेन्द्रियग्रामः पातु सर्व्वेन्द्रियाणि तु ।
अनुक्तमपि यत्स्थानं शरीरेऽन्तर्वहिश्च यत् ॥
तत्सर्व्वं पातु मे सर्व्व-लोकनाथेश्वरेश्वरः ।
वज्रसारतरश्चेदं शरीरं कवचावृतम् ॥
वाधाशत विनिर्मुक्तः अस्तु मे भयवर्ज्जितः ।
बध्वेत्थं कवचं दिव्यमभेद्यं हैहयेशितुः २(†) ।
विचरामि दिवारात्रौ निर्भयेनान्तरात्मना ।
राजमार्गे महादुर्गे मार्गे चौरादिसंकुले ॥
विषमे विपिने घोरे दावाग्नौ गिरिकन्दरे ॥
संग्रामे शस्त्रसम्पाते सिंहव्याघ्र-निषेविते ।
गह्वरे सर्पसङ्कीर्णे सन्ध्याकाले नृपालये ॥
विवादे विपुलावर्त्ते समुद्रेच नदीतटे ।
परिपन्थि-जनाकीर्णे देशे दस्युगणावृते ॥
सर्व्वस्वहरणे प्राप्ते प्राप्ते प्राणस्य संशये ।
नानारोग-ज्वरावेशे पिशाच प्रेतपातने ॥
मारीदुःख प्रपीड़ासु क्लिष्टे विश्वासघातके ३(*) ।
शारीरेच महादुःखे मानसेच महाज्वरे ॥

---

१ (*) इतः कवच माहात्म्यं प्रख्यापितम् । तत्पूर्वं सर्व्वदुष्टविनाशार्थं त्वारभ्य—वाधाशत विनिर्मुक्तं इत्यन्तं कवचमिति यन्त्रकदम्बकमीति ।

२ (†) हैहयेशितु.'—'कार्त्तवीर्य्यार्ज्जुनोनाम राजाबाहु सहस्रवान्' मतान्तरे 'हैहय' इति नामापि दृश्यते तत् इति पुराणं । प्रागुक्त मन्वत् ।

३ (*) 'मारीदुःख प्रपीड़ासु' इति पाठान्तरमस्ति ।

आधिव्याधि भये विघ्ने—ज्वालौपद्रवकेऽपिच ।
नभवेत्तु भयं किञ्चित् कवचेनावृतस्य मे ॥
आगन्तुकामानखिलानस्मद्वसु विलोपकान् १(†) ।
निवारयतु दोर्द्दण्ड—सहस्रेण महारथः ॥
स्वकरोद्धृत-साहस्र—पाशवद्धान् सुदुर्ज्जनान् ।
संरुद्ध गति सामर्थ्यात् करोतु कृतवीर्य्यजः ॥
शृणिसाहस्र निर्भिन्नान् सहस्रशरखण्डितान् ।
राजचूड़ामणिः क्षिप्रं करोत्वस्मद्विरोधकान् ॥
खड्ग साहस्रदलितान् सहस्रमुषलान्वितान् ।
चौरादि दुष्ट सत्वौघान् करोतु कमलेक्षणः ॥
स्वशङ्खनाद सन्त्रस्तान् सहस्रार-विदारितान् ।
करोतु सर्व्व दुष्टौघान् सहस्रार-सहस्रभृत् ॥
कृतवीर्य्य सुतोराजा सहस्रभुजमण्डितः ।
अवतारो हरेः साक्षात् पालयेत् सकलं मम ॥
कार्त्तवीर्य्यार्ज्जुनोनाम राजा बाहु-सहस्रवान् ।
तस्य संस्मरणादेव हृतं नष्टञ्च लभ्यते ॥
यो भवेल्लोकरक्षार्थं मंशाच्चक्रं हरेर्भुवि ।
तं नमामि महावीर्य्य-मर्ज्जुनं कृतवीर्य्यजम् ॥
कार्त्तवीर्य्य महावाहो-सर्व्वं दुष्टारि नाशन ।
सर्व्वत्र सर्व्वदा तिष्ठ दुष्टान् नाशय पाहि माम् २(‡) ॥
उत्तिष्ठ दुष्टदमन ! सप्त द्वीपैक पालक ! ।
त्वमेव शरणं प्राप्तः सर्व्वतो रक्ष रक्षमाम् ॥
दुष्टघ्न ! किं त्वं प्राप्नोषि किन्तिष्ठसि चिरादपि ।
पाहिनः सर्व्वदा सर्व्व-भयेभ्यः स्वसुतानिव ॥
ये चोरा वसुहर्त्तारो विद्विषो येच हिंसकाः ।
अन्तराय करा घोराः छद्मका ये दुरासदाः ॥

---

१ (†) 'वसु विलुम्पकाम्' इति च पुस्तकान्तरधृतः पाठः ।
(‡) इत्यादयन्तं सर्व्वं कवच धारणादि फलं कथितं ।

दुर्हृदो दुष्टभूपालाः दुष्टा नित्यञ्च पापकाः ।
येच कार्य्य-विलुप्तारो ये खलाः परिपन्थिनः ॥

सर्व्वस्वहारिणोयेच ये च माया विनोऽपरे ।
महाक्लेशकरा म्लेच्छा दस्यवोवृपलाश्च ये ॥

ये महागर दातारो बञ्चका शस्त्रपाणयः ।
ये पापदुष्ट कर्म्माणो दुःस्वदा दुष्टबुद्धयः ॥

व्यसनाः कुपथा सक्ता येच नानाभयप्रदाः ।
छिद्रान्वेपरता नित्यं येऽस्मान् बाधितुमुद्यताः ॥

तं सर्व्वे कार्त्तवीर्य्यस्य महाशङ्ख वगाहताः १(*) ।
महसा विलयं यान्तु दुरादेव विमोहिताः ॥

ये दान वा महादैत्या ये यक्षा येच राक्षसाः ।
पिशाचा ये महा सत्त्वा ये भूता ब्रह्म–राक्षसाः ॥

अपस्मार ग्रहा येच ये ग्रहा पिशिताशनाः ।
महा लोहित भोक्तारो वेताला येच गुह्यकाः ॥

गन्धर्व्वाप्सरसः सिद्धा ये च देवादि-योनयः ।
डाकिन्यो कौणपाः प्रेताः क्षेत्रपालाः विनायकाः ॥

महाशना बलिभुजो महाकुणपभोजनाः ।
महाव्याघ्र-महामेघ-महातुरग रूपकाः (गाः) ॥

महागज-महासिंह महामहिप-सन्निभाः ।
ऋक्ष वाराहशकुन-वानरोलूक-मूर्त्तयः ॥

महो-ष्ट्रखर-मार्ज्जाराः सप्रजा वृष वृश्चिकाः ।
नानारूप-महासत्त्वा नानाक्लेश-सहस्रदाः ॥

नानारोग-कराःरूद्रा महावीर्य्या महाबलाः ।
वातिकाः पैत्तिका घोराः श्लैष्मिकाः सान्निपातिकाः ॥

माहेश्वरा वैष्णवाश्च वैरश्चाश्च महाज्वराः ।
स्कान्दा वैनायकाः क्रूरा येच प्रमथ सम्भवाः ॥

---

१ (*) रणाहताः । इति पाठान्तरम् ।

महाशत्रुग्रहा रौद्रा महामारी मसूरिकाः १(*) ।
ऐकाहिका द्व्याहिकाश्च त्र्याहिकाश्च महाज्वराः ॥
चातुर्थिकाः पाक्षिकाश्च मासा षान्मासिकाश्च ये ।
साम्वत्सरा दुर्निवार्य्या ज्वराः परमदारुणाः ॥
स्वाप्निकाश्च महोत्पाता येच दुःस्वप्नका ग्रहाः २(†) ।
कूष्माण्डा जम्भकभीमा घोणसा निधिवञ्चकाः ॥
भ्रामकाः प्राण हन्तारो येच बाल ग्रहादयः ।
मनो बुद्धीन्द्रियहराः स्फोटकाश्च महाग्रहाः ॥
महाशना बलिभुजो महाकुणप भोजनाः ।
दिवाचरा रात्रिश्चरा येच सन्ध्यासु दारुणाः ॥
प्रमत्ताः सुप्रमत्तावा ये मां बाधितु मुद्यताः ।
ते सर्व्वे हैहयेन्द्रस्य धनुर्मुक्तशरार्हिताः ॥
सहस्रधा प्रणश्यन्तु मम्न सत्वबलोद्यमाः ।
ये सर्पा ये महारोगा महागिरि विलेशयाः ॥
कालव्पाला महादंष्ट्राः महाजगर संज्ञकाः ।
अनन्तं कुलिकाद्याश्च दंष्ट्रा विषमहाभयाः ॥
अनेकशत वर्षाश्च खण्ड पुच्छाश्च दारुणाः ।
मायाविष जलौकाश्च वृश्चिका रक्तपुच्छकाः ॥
आशीविषाः कालकूटा महाहाला-हलाह्वयाः ।
जलसर्पा जलव्याला जलग्रहाश्च कच्छपाः ३(‡) ॥
मत्स्यकाविघ्नपुत्राश्च येचान्ये जलवासिनः ।
जलजाः स्थलजाश्चैव नानाभेदशतोद्भवाः ॥

१ (*) महामारी—युगपद् बहुलोकक्षयकरी पीड़ा ।

मसूरिका — "जनयन्ति शरीरेऽस्मिन् दुष्टरक्तेन संयुताः ।
मसूराकृति संस्थानाः पीडकास्ता मसूरिकाः ॥"
वैद्यके—भावप्रकाशे ।

" अस्यास्तत्रैव चिकित्साप्रकरणेऽस्ति । एवं माधवकरीये निदानग्रन्थेऽपि ।

२ (†) दुर्निमित्ताद्भुत—विविधोत्पातजनकादुष्टग्रहाः दुःस्वप्नजनकाश्च । इत्यमीषां प्रसङ्गा-कथ चरके, अद्भुतसागरे, पुराणे, ज्योतिषशास्त्रेचास्ति । दुर्निमित्तमुत्पातं त्रिविधं-दिव्यमान्तरिक्षं भौममिति ।

३ (‡) एते जलजसर्पा-जलव्याला अपि उत्पातजनकाः । एतदुत्पातं भौममेव ।

येच षड् बिन्दवोलूता भ्रामराः शूक कच्छपाः ।
स्थावरा जङ्गमाश्चैव कृत्रिमाश्च महाविषाः ॥
गुप्तरूपा गुप्तविषा मूषिका गृहगोधिकाः ।
स्मरा विषाश्च ये घोरा महोपविषसंज्ञकाः ॥
येऽस्मान् बाधितु मिच्छन्ति शरीर प्राणनाशनाः ।
ते सर्व्वे कार्त्तवीर्य्यस्य खड्गसाहस्र दारिताः ॥
दूरादेव प्रणश्यन्तु प्रणष्टेन्द्रिय साहसाः ।
मनुष्या पशवो वृक्षा वानरा वन गोचराः ॥
सिंहव्याघ्रवराहाश्च महिषा ये महामृगाः ।
गजास्तुरङ्गागवया रासभाः शरभावृकाः ॥
शूनकाः द्विपिनः शुभ्रा मार्ज्जारा विल्लोमशाः ।
शृगाला मशकाः श्येना गरुत्मन्तो विहङ्गमाः ॥
भेरुण्डा वायसा गृध्रा हंसाद्याः पक्षिजातयः ।
उद्भिजाश्चाण्डजाश्चैव स्वेदजाश्च जरायुजाः ॥
नानाभिन्नकुलेजाता नानाभावा पृथग् विधाः ।
ते सर्व्वे कार्त्तवीर्य्यस्य गदासाहस्र चूर्णिताः ॥
दूरादेव विनश्यन्तु विनष्टगत पौरुषाः ।
येचाक्षेप प्रदातारो द्वेष्टारो ये विदूषकाः १(*) ॥
विश्वासघातका दुष्टा ये च स्वामिद्रुहानराः २(†) ।
येचापि तापिनोरिष्टा ये पापा गोप्यहारिणः ॥
देहोपघातगरल-शस्त्र पातादि दुःखदाः ।
क्षेत्र वित्तादिहरण बन्धनादि भयप्रदाः ॥
ईतयो विविधाकाराः ये चान्ये दुष्टजातयः ३(*)।
पीड़ाकरा ये सततं च्छिद्रमर्हन्ति बाधितुम् ॥

---

१ (*) 'विदूषका' इति पाठान्तरं ।

२ (†) 'स्वामिद्रुहाः' —राजद्रोहकारिण इत्यर्थः ।

३ (*) ईतयोयथा—"अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः ।
प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः ॥" स्मृतिः ।
"निवारितास्तेन महीतलेऽखिले
निरीतिभावं गमितेऽतिवृष्टयः" इति ।

ते सर्व्वे कार्त्तवीर्य्यस्य चक्रसाहस्र चूर्णिताः ।
दूरादेव विनश्यन्तु लयं यान्तु सहस्रधा ॥

ये मेघा या महावर्षा ये वाता याश्च विद्युतः ।
ये महाशनयो दीप्ता ये निर्घाताः सुदारुणाः ॥

उल्कापाताश्च ये घोरा ये महेन्द्र चापादयः १(†) ।
सूर्य्येन्दु-कुज सौम्याश्च गुरुकाव्य शनैश्चराः ॥

राहुश्च केतवोघोरा नक्षत्र-राशयस्तथा ।
तिथयः संक्रमा मासा हायना युगनायकाः ॥

मन्वन्तराधिपाः सिद्धा ऋषयोयोगसिद्धयः ।
निधयोऋग्यजुः सामाऽथर्व्वणाद्याः समब्धयः २(‡) ॥

क्रतवोलोकपालाश्च पितरोदेव संहतिः ।
विद्याश्चैव चतुः षष्ठि-भेदोत्थ्या भुवनत्रये ॥

एते वै कीर्त्तिताः सर्व्वे येचान्ये नानुकीर्त्तिताः ।
ते सन्तु नः सदा सौम्याः सर्व्वकालं सुखावहाः ॥

आज्ञाया कार्त्तवीर्य्यस्य योगीन्द्रस्यामितद्युतेः ।
कार्त्तवीर्य्यार्जुनो यथा राजेन्द्रोहैहयेश्वरः ॥

दत्तात्रेयप्रियतमः सहस्रभुज-मण्डितः ।
चापी खड्गी रथी वाणी तूर्णी वर्म्मी महाबलः ॥
सुनासः सुमुखः शान्तश्चक्रवर्त्ती गुणाकरः ।
दशास्यदर्पहारी वा लीलातृप्तः सुदुर्ज्जयः ॥
दुःसहा चोर-दमनो राजराजेश्वरः प्रभुः ।
सर्व्वज्ञः सर्व्वदः श्रीमान् सर्व्वशिष्टेष्टदुःखहृत् ॥
राजचूडामणि योगी सप्तद्वीपाधिनायकः ।
विजयी विश्रुतो वाग्मी महागतिरलोलुपः ॥
यज्वा विप्रप्रियोविद्वान् ब्रह्मज्ञेयः सनातनः ।
माहेष्मतीपतिर्योद्धा महाकीर्त्तिर्महाभुजः ॥

---

१.(†) 'महेन्द्र धनुरादय'इति पुस्तकान्तरे पाठः ।
२ (‡) चतुर्वर्ग इति पाठान्तरम् ।

सुकुमारो महावीरो मारीघ्नो मदिरेक्षणः ।
शत्रुघ्नः शाश्वतः शूरः शङ्खभृद् योगिवल्लभः ॥
सर्व्वशास्त्रकलाधारो विरजो लोकवन्दितः १(*) ।
महाभागवतोधामा महाभय-विनाशनः ॥
असाध्य विग्रहोदिव्यो भावव्यक्तो जगत्रयः ।
वीरो विमल सत्वाढ्यो महाबल-पराक्रमः ॥
विजयः श्रीमयोमान्योजितारिर्मन्त्रनायकः ।
चक्रदः कामदः कान्ता-कालघ्नः कमलेक्षणः ॥
भद्रवाद प्रियो वैद्यो विबुधोवरदोवशी ।
जितेन्द्रियोजितारातिः स्वच्छन्दोऽनन्त विक्रमः ॥
चक्रभृत्तार-चक्रघ्नः संग्राम-विधिपूजितः ।
महाधनो निधिपति र्महायोगी गुरुप्रियः ॥
योगाढ्यः सर्व्वरोगघ्नो राजिताखिलभूतलः २(०) ।
दिव्यास्त्रोऽप्रमेयात्मा सर्व्वगोप्ता महोज्ज्वलः ॥
सर्व्वायुधरोऽभीष्ट-प्रदः परपुरञ्जयः ।
योग सिद्धमहाकायो महावृन्द शताधिपः ॥
सर्व्वज्ञाननिधिः सर्व्वसिद्धि-दानकृतोद्यमः ।
इत्यष्टशतनामोक्त्या मूर्त्तयोदशदिक्पतेः ॥
सम्यग् दशदिशो व्याप्य पालयन्तु च मां सदा ।
स्वस्थाः सर्व्वेन्द्रियाः सन्तः शान्तिरस्तु सदा मम ॥
शेषा या मूर्त्तयोऽष्टौ च दिक् क्रमे नैव भास्वराः ।
अग्निनैऋृत्युदगीश—कोणगाः पान्तु मांसदा ॥
ममसौख्यमसम्बाध मरोग मपराजयः ।
दुःखहानिरविघ्नश्च प्रजावृद्धि सुखोदयः ॥
वाञ्छाप्तिरति कल्याण मवैषम्यमनामयम् ।
अनालस्यमभीष्टञ्च मृत्युहानिर्बलोन्नतिः ॥

१ (*) 'सर्व्वशास्त्रकलाधारी' इति—चतुःषष्टि कलाविद्यानिपुणः, ताश्चतुः षष्टि कला [illegible] [illegible] टीकायां प्रेमतत्त्वे च वर्णिताः सन्ति ।

२ (०) [illegible]—[illegible] । [illegible] [illegible] । [illegible]—[illegible] ।

भयहानिर्यशः कीर्त्तिर्व्विद्यावृद्धिर्महाश्रियः १(×)।
अनष्टद्रव्यताचैव नष्टस्य पुनरागमः ॥
दीर्घायुष्यं मनोलाभः सौकुमार्य्य मभीप्सितम्।
अप्रधृष्यतमत्वञ्च महा सामर्थ्यं मेवच २(०) ॥
सन्तु मे कार्त्तवीर्य्यस्य हैहयेन्द्रस्य कीर्त्तनात्।
य इदं कार्त्तवीर्य्यस्य कवचं पुण्यवर्द्धनम् ३(†) ॥
सर्व्वपापहरं पुण्यं सर्व्वोपद्रव नाशनम्।
सर्व्व शान्तिकरं गुह्यं समस्त-भयनाशनम् ॥
विशेषार्थपदं नृणां सर्व्वसम्पत् प्रदं शिवम्।
शृणुयाद्वा पठेद्वापि सर्व्वान् कामानवाप्नुयात् ॥
मुच्यते सर्व्व-दुःखैस्तु सर्व्वत्र विजयी भवेत्।
मारी चौरादि पीड़ाद्यै र्न कदाचित् प्रबाध्यते ॥
पठतः प्रातरुत्थाय दुःस्वप्नादि विनश्यति।
लभते वाञ्छितानर्थान् पूज्यते त्रिदशैरपि ॥
शय्यातलं गतो रात्रौ यइदं कवचं पठेत्।
नतस्य तस्करारातिं दुःस्वप्नादि कृतं भयम् ॥
चौरैर्यदाहृतं पश्येत् पश्वादि धनमात्मनः।
सप्तवारं तदा जप्त्वा निशि पश्चिमदिङ्मुखः ॥
सप्तरात्रेण लभते नष्टद्रव्यं न संशयः।
सप्तविंशतिधा जप्त्वा प्राचीदिग्वदनोयदि ॥
तदा देवासुरनिभं परचक्रं निवारयेत् ४(‡)।
विवादे कलहे घोरे यइदं पञ्चधा पठेत् ॥

---

१ (×) अत्र यशः कीर्त्तिरिति नेकार्थबोधकः। [illegible] कीर्त्तिः, धर्मः, ज्ञानं ऐश्वर्य्यं चेति। यशः लोकेषु प्रशंसा।

२ (०) 'अप्रधृष्यतमत्वं' [illegible] पाठः।

३ (†) '[illegible]' [illegible] कीर्त्यते। '[illegible]' [illegible] [illegible] तत् कवचं जपनीयम्।

४ (‡) 'परचक्रं'—परातिक्रान्त-चक्रम्। [illegible] [illegible] परचक्रविषये [illegible]। 'चक्रं राष्ट्रे ऽपि'। '[illegible] राष्ट्रे [illegible]' [illegible]।

विजयो जायते तस्य न कदाचित् पराजयः।
सम्यग् द्वादशधा रात्रौ योजपेद्बन्धमुक्तये ॥
त्रिदिनान्निगड़ ग्रस्तो मुच्यते न विचारणा।
अनेनैव विधानेन सर्वसाधन-कर्म्मणि ॥
असाध्य मपि सन्नाहात् साधयेन्मन्त्रवित्तमः।
यात्राकाले पठित्वेदं मार्गं गच्छति यः पुमान् ॥
नतस्य चोरव्याघ्राद्यैर्भयंस्यात् परि पन्थिभिः।
नित्यं गृहगतैर्जप्त्वा कल्याणैः परिपूजयेत् ॥
नभयं जायते तस्य दुष्ट सत्वादिभिः क्वचित्।
सर्व्वरोग प्रपीड़ासु त्रेधा वा पञ्चधा पठेत् ॥
स रोगात् मृत्यु-वेतालभूत प्रेतैर्विमुच्यते।
जपन्नासेचनं कुर्य्याज्जलेनाञ्जलिना तनौ ॥
न चासौ वश-कृत्वादि-रोग-स्फोटैः प्रबाध्यते।
त्रिसन्ध्यं यः पठेदेतत् षड़्मासं विजितेन्द्रियः ॥
कालमृत्युमपि प्राप्तं जीवत्यास्यत्र संशयः।
पठतःकवचं चेदं विषं नाक्रमते तनौ ॥
नजरान्ध त्व मूर्खत्व नोपसर्गभयं क्वचित्।
विंशत्यर्णोक्तविधिना ध्यात्वा देवं तदात्मकम् १(†) ॥
मन्त्री गुरु प्रसादात्तं मन्त्रराजं जपेत्तु यः।
कवचे नावृतोभूयो मन्त्रं ध्यानं समाचरेत् ॥
आदौ सम्बोधनं कुर्य्यात् तन्नाम ध्यानपूर्व्वकम्।
चतुरश्चक्रमन्त्राणान् उद्धरेद्बीज पूर्व्वकान् ॥
स यथोक्तं लभेत् सद्यः फलं वज्रतनुर्भवेत।
यथा यथेदं कवचं कस्यचिन्न प्रकाशयेत् ॥
गोपनीयं प्रयत्नेन शिवस्य वचनं यथा।
सद्भक्ताय सुशिष्याय दद्यात् सर्व्वस्वदायिने ॥

---

१ (†) 'विंशत्यर्णः'—विंशतिसंख्यक मन्त्राक्षरघटित-मन्त्रः। तच्च 'इत्यादिषु [illegible] पूर्व्वम्।

साधकानां हितार्थाय यदुक्तं चन्द्रमौलिना ।
कार्त्तवीर्य्यस्य कवचं यदुक्तं वै मया तव ॥
येन सं रक्षितो देवि स काले नापि जीर्य्यते ।

इति श्रीउड्डामरेश्वरतन्त्रे कार्त्तवीर्य्यस्य
कवचं समाप्तम् १(†) ॥

—*—

## (४८) अथ कार्त्तवीर्य्यस्य स्तोत्रम् ।

—*—

कार्त्तवीर्य्यः खलद्वेषी कृतवीर्य्य-सुतोबली ।
सहस्रबाहुः शत्रुघ्नो रक्तवासा धनुर्द्धरः ॥
रक्तगन्धो रक्तमाल्यो राजा स्मर्त्तुरभीष्टदः ।
द्वादशैतानि नामानि कार्त्तवीर्य्यस्य यः पठेत् ।
सम्पदस्तस्य जायन्ते जनास्तस्य वशम्वदाः ।
अनयदाशुदुरस्थं क्षेमलाभ युतं प्रियम् ।
कार्त्तवीर्य्यं महाबाहो ! सर्व्वशत्रुनिवर्हण ! ।
सर्व्वत्र सर्व्वदा तिष्ठ चौरान्नाशय पाहि मां ।
सहस्रबाहुं सशरं सचापं रक्ताम्बरं रक्त किरीट कुण्डलम् ।
चौरादि दुष्टभयनाशन मिष्टदन्तम् ध्यायेन्महाहैहय कार्त्तवीर्य्यम् ॥
कार्त्तवीर्य्य स्तोत्रं सम्पूर्णम् २(‡) ।
इति कार्त्तवीर्य्यस्य स्तोत्रादिप्रकरणम् ॥

—*—

१ (†) क्वचित् कवचे क्वापि क्वापि पुनरुक्तिर्दृश्यते ।
" "ज्योतिषे व्याकरणे च छन्दसि भिषजां गुरौ ॥
[illegible] विचारयेत् ॥"
इत्यनेन सा विचारणा नैव कार्या ।

२ (‡) 'कार्त्तवीर्यार्जुनोनाम राजा बाहुसहस्रभृत् ।
येन सागरपर्यन्तं धनुषा निर्जिता मही ॥
यस्तस्य कीर्तयेन्नाम कल्यमुत्थाय मानवः ।
न तस्य वित्तनाशः स्यान्नष्टञ्च लभते ध्रुवम्' ॥ इति पुराणे, नामनिर्वचनम् ।

## (४९) अथ तरुपुत्र विधिः १(*)।

—*—

130 **मात्स्ये**—२(†)

दशकूपसमा वापी दशवापी समोह्रदः।
दशह्रद समः पुत्रो दशपुत्रसमः द्रुमः॥

131 **पाद्मेऽपि**—

वरं भूमिरुहाः पञ्च नतुकोष्ठ रुहा दश।
पत्रैः पुष्पैः फलैर्म्मूलैः प्रणिनः प्राणयन्त्यमी॥

132 **नन्दिपुराणे**—३(‡)

तरुपुत्रन्तु यः कुर्य्याद्विधिवद्वह्निसन्निधौ।
स महापातकैर्युक्तं समुद्धृत्य कुलत्रयम्॥
नरकेभ्यो नरो याति प्रजापति पुरं (पदं) शुभम्।

133 **स्कान्देऽपि**—

इत्येवं रुद्रमहिषी भूमिरुह सुत स्तव (म्)।
श्रुत्वा पतिं त्रिलोकेश मिदमाह पतिव्रता॥
भगवन् केन विधिना विधीनां सार सागरः।
पुत्र प्रतिकृतिर्वृक्षः क्रियते चन्द्र भूषणा॥
सलीलमिति सा सर्व्वं पृच्छन्ती विधिमुत्तमम्।
महादेवो महादेवी—मिदं वचनमब्रवीत्॥
देवि! नाशेन्द्र नासोरु नागेन्द्रगति गामिनि।
शृणुष्व येन विधिना गृह्यतेऽवनिजः सुतः ४(+)॥
स्वपुत्रार्थं भूमिरुहं ग्रहीष्यामीति पार्व्वति!।
सोपवासा भवेन्नारी शुचिवस्त्रा शुचिव्रता॥

---

१ (*) अथ तरुपुत्र विधिः—अनपत्यानां पुत्र प्रतिनिधिरूपेणानुष्ठेयं कार्य्यमिति। पुत्राभावस्य भाविसम्भवानि पुत्राभावी भवतादिति।

२ (†) इदं मत्स्यपुराणम् पौढमसंख्यकं नारदपुराणैऽप्याशुक्रमलिखितोऽस्ति।

३ (‡) इदन्नन्दिपुराणम्, रघुनन्दन कृत स्मृतौ प्रस्ताव मिदं चालोचितोऽस्ति।

४ (+) अवनिजः वनीसुतः।

ततश्चैव सहस्रांशा वस्तंभूक्तं गत एवा ।
उदिते विमले चापि तथेन्द्वा—विन्दु सन्निभे ॥
विप्रानामन्त्रयेद्रात्रौ पावनान् वेदवेदिनः ।
विप्रान् निमन्त्रयित्वा तु शुचिवस्त्रा शुचिव्रता ॥
शयीत सनमस्कारा सदर्भां भूमिमाश्रिता ।
गमयित्वाथ रात्रिं सा सवितर्य्युदितेऽपि च ॥
भक्ष्य भोज्ये समादाय व्रजेद् यत्र भवेत्तरुः ।
ततस्तं स्नापयित्वातु सातपत्रं सभूषणम् ॥
तं तरुं तरुणीकृत्य ततश्छायानुमापि(यः) नः १(†) ।
यथोपपन्नानासन्नान् भोजयित्वा द्विजांस्ततः ॥
पुण्याहं कारयित्वानु ऋत्विजा ऽथवात्मना ।
तृप्तानां ब्राह्मणानाञ्च तत्त्वेना कृतमात्मनः २(‡) ॥
निवेद्य कृतमुद्दिश्य सद्भावेन परेण हि ।
अपुत्रोभगवन्तोऽहं पुत्र प्रकृतिकं तरुम् ॥
ग्रहिष्यामि ममानुज्ञां कर्त्तुमर्हत सत्तमाः ।
ततस्तैरभ्यनुज्ञातं तन्तरुं तरुणाकृतिम् ॥
भूमिदेविसमक्षं गृह्णीयात्तनयं प्रिये ।
भूमिदेवसमक्षन्तु विधेयं ब्राह्मणाग्रतः ॥
अनेनविधिना यस्तु गृह्णाति तरुपुत्रकः ३(×) ।
पितॄणां निरयस्थानां मधुधाराः स वर्षति ॥
गृहीतो विधिना येन शुभे भूमिरुहात्मजः ।
शुभः सुखाय भवति विपरीते तु दुःखदः ॥
पुत्रेभ्यः शतसंख्येभ्यः पीनश्रोणिपयोधरे ।
एकोभूमिरुहः श्रेष्ठः पुत्रत्वे कल्पितः सुतः ॥

---

१(†) तोरणो क्षत्वेति क्वचित् पाठः ।

२(‡) आत्मनः स्वाकृतं अभिप्रायं पुत्राभावादिरूपं मनुष्ठितं कार्यमुद्दिश्य तृप्तानां ब्राह्मणानां सविधे तत्त्वेन यथायथं निवेदनीयमित्यर्थः ।

* पुण्याह वाचनन्तु—विधानपद्धत्यनुसारेण कारयितव्यम् । पुण्याहवाचनादिकं प्रागुक्तम् ।

३(×) स्वीकरोत पुत्रकः इतिपाठान्तरः पाठः ।

इत्येवं यन्मया शि ष्ट मि ष्ट दु ष्ट भ वा रि णा । १(+)
यथा भूमिरुहः पुत्रो विशिष्टः कोष्ठजैः सुतैः ॥
ततः शोकापहं देवि तम शोकविभाविना २(ऽ) ।
अलञ्चकार सन्तुष्टया ह्यलङ्कारैः पृथग्विधैः ३(०) ॥
आतपत्रञ्च तस्याग्रे मुक्तादाम-विभूषितम् ।
उच्छ्रयामास गिरिजा मयूराम्बुरुहैः सह ॥
नानावर्णैर्भूषयित्वा चन्दनेन सुगन्धिना ४(* ।
अमूल्यान् प्रददौ देवि ! अलङ्कारानितस्ततः ॥
जाम्बुनदमयैश्चापि पट्टै रत्नविराजितः ।
सर्व्वं तं भूषयामास तमशोकरुहं प्रियम् ॥
तस्य शाखा प्रशाखासु मुक्तादामानि पार्व्वति ।
आवबन्ध सदै भाति यथाऽऋक्षैः क्षपाकरः ५(*) ॥
तथा वासोयुगेनापि त मशोकं सुहारिणी ।
वासया मास लोकानां जननी पुत्र लालसा ॥
ततः समरुणावारु गुग्गुलं घृतमेव च ६(†) ॥
समवायुयुतं धूपं चारयन् धूपवर्षितः ॥
ततः शङ्खनिनादेन देवतूर्य्यरवेण वा ।
नन्दिना च समानीता ब्राह्मणाः ब्रह्मणः समाः ॥
वाचयामास पुण्याहं दत्वा गाः स्वर्ग(र्ण)मेव च ।
ततः पुण्याहघोषेण आशीर्व्वादश्च चोभयोः ॥
अनुमान्य पतिं देवि ! ऋषींश्च प्रीणयन्मुदा ।
इति तरुपुत्र करणविधिः ७(‡) ।

—*—

१ (+) 'पुष्ट मिष्ट इष्टान्न धारिणि' इति पुस्तकान्तरे पाठः ।
२ (ऽ) ततः...देवी तम शोकविभाविनी इति हेमाद्री पाठः ।
३ (०) अलञ्चकार संहृष्टा इति हेमाद्रिधृत: पाठः ।
४ (*) स तैर्भाति इति हेमाद्री ।
५ (†) नमैवचा चाव्दति हेमाद्रिधृत: पाठः ।
६ (‡) विषयोऽयिम् 'तरुपुत्रदानविधिः' इति हेमाद्री ।'—तरुपत्रकरणविधिः' इत्य पपाठः ।
विषयोऽयिम् नन्दिपुराण ब्रह्मवैवर्तपुराण स्कन्दपुराणेषु बहुधावर्णितमस्ति ।
७ (०) भूषयित्वा इत्यत्र 'वासयाम' इत्यपपाठः क्वचित् पुस्तके ।

# (५०) अथ वापीकूपतड़ागादीनां सांख्यायनोक्तोत्सर्गविधिः१(०)।

—*—

## 134 तथा च सांख्यायनीयं सूत्रम्—

अथ पुष्करिणी-कूप-तड़ागानां शुद्धपक्षे पुण्ये वा तिथौ पयसा यवमयं चरुं श्रपयित्वा 'त्वन्नोऽग्नि' (२) इति द्वाभ्यां 'अवते हेल ईमहे वरुणे' (३) 'मां धियं शिक्षमाणस्य' (४) गृह्य उपगृह्यो मयोभू राखारो निखारो निःसरो निःकामाः सपत्नदूषण इति वारुण्यादि प्रभृति प्रदक्षिणं जुहुयाद् मध्ये पयसा जुहोति (५) 'विश्वतश्चक्षु' (६) 'रिदं विष्णु'रिति 'यत् किञ्चेदमिति' मज्जयित्वा धेनुर्दक्षिणा वस्त्रयुग्मं वा ततो ब्राह्मणभोजनम्।

## अथास्य प्रयोगः।

गणेशार्च्चन-स्वस्तिवाचन-मातृकापूजाभ्युदयिकाचार्य्यवरणादीनि यथाक्रमं कृत्वा वारुणयागं कुर्य्यात्। तद् यथा—शुभतिथौ जलाशयात् प्रागुदग् वा स्थण्डिलं विधाय तत्राग्निं प्रतिष्ठाप्य ग्रहान् स्थापयित्वा चरुं तन्त्रेण जलपयसोरुभयोः प्रणयन पूर्व्वकं यवमयं वारुणचरुग्रहण प्रोक्षणादिधर्म्मः पयसाश्रप्याज्य भागान्तं कर्म्म कृत्वा ग्रहेभ्यो हुत्वा (७) 'त्वन्नोऽग्ने वरुणस्ये'त्येतत् पृथगद्वयेन पृथक् स्वाहाकारान्तेनावदानधर्म्मेण द्वे

(१) विष्णुधर्मोत्तरे,—यमलोकं प्रपश्यन्ति न जलाशयकारिणः।
अतः कुर्य्यात् प्रयत्नेन मरुदेशे नृप कूपकम्॥
ब्रह्मायता चतुरस्रा वाप्यः साधारणा मताः।
शेषाः काम्याधिकारेण कूपीप्रभृतः शुभावहः॥
यमः— 'तडागे यस्य पानीयं सततं खलु तिष्ठति।
स्वर्गलोकगतिस्तस्य नात्र कार्य्या विचारणा'॥
तत्र पञ्चविधानानन्तरं वापीप्रभृतीनामुत्सर्गविधिकथनं। स च सर्व्व-भूतानाम् हितार्थं कर्त्तव्यः। तथा च श्रुतिः 'उदद्यात् सर्व्वभूतेभ्यो जलपूर्णं जलाशय'मिति। एतत्सर्व्वं पौर्त्तिकं कार्य्यम्। तथाचोक्तं 'वापी कूपतडागादि देवतायतनानि च। अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते' इति।

(२) शुक्लयजुर्व्वेदे—२१—१।
,, ,, ११—४।

(३) ऋग्वेदे १—२४—१४।

(४) शुक्लयजुर्व्वेदे १०—१९।

(५) ,, ,, ५—१५।

(६) ,, ,, २१—३।

(७) इति वरुणदैवतो होमः।

आहुती यवमयेन च रुणा हुत्वा 'इदं वरुणाये'ति (१) त्यजेत्। 'अवते हेल' (२) इत्येका 'इमं मे वरुण' (३) इत्येका 'उदुत्तमं वरण' (४) इत्यपरा 'इमां धिया शिक्षमाणस्य' इत्येका इत्येवं चरुणा षड़ाहुतीः हुत्वा केचित् 'त्वन्नोऽग्ने' (५) इत्यादिषड्भिः 'समुद्रज्येष्ठा' (६) इति चतसृभिः 'तत्त्वायामीति' (७) अनया आज्याहुतीराहुः (८)। *अथाग्नेः पश्चिमदिग्भागमारभ्य प्रदक्षिणमष्टदिक्षु अष्टाज्याहुतीः स्रुवेण जुहोति।* गृह्याय स्वाहेति पश्चिमे। उपगृह्याय स्वाहेति वायव्ये। मयोभवाय स्वाहेति वायव्ये। मयोभुवाय स्वाहेत्युदग्दिशि। आखाराय स्वाहेति ऐशान्याम्। निःखाराय स्वाहेति पूर्व्वे। निःसराय स्वाहेति आग्नेये। निःकामाय स्वाहेति दक्षिणे। सपत्नदूषणाय स्वाहेति नैर्ऋत्याम्। मध्ये तु प्रणीतास्ववशिष्ट पयसा द्वे आहुती जुहोति। 'विश्वतश्चक्षुरित्येका, 'इदं विष्णु'रित्येका। ततः पायसेन स्विष्टकृद्वाहुतीर्वलिदानादि होमशेषं समापयेन। अथ धेनुं जलाशये तारयति। स्त्रयन्तत्पुच्छलग्नश्चरति। पश्चिमत ईशानीं यावत्। केचिद्धेनुतारणं नेच्छन्ति।

## तत्र धेनुतारणमन्त्रः—

इदं सलिलं पवित्रं कुरुष्व शुद्धाः पूता अमृताः सन्तु नित्यम्, तारयति सर्व्वतीर्थाभिषिक्तम् (९)। लोकाल्लोकान्तरं तीर्य्यते इति तटम्। तत् प्राप्य जपति 'यत्किञ्चिद्दुरित' मित्यृचम् (१०)। तारणाभावेऽपि जपः स्यादेव। अत्र 'आपोऽस्मा (११)

(१) ऋग्वेदे १—२४—१४।
" सांख्यायन सूत्र ६—१०—११।
(२) ऋग्वेदे ८—२४—३।
(३) शुक्लयजुर्व्वेदे २१—१।
(४) " " १२—२२।
(५) " " २१—३।
(६) " " २१—२—१८—४९।
(७) ऋग्वेदे ७—४९—१—४।
(८) गृह्याय स्वाहेति आज्याहुति प्रकार उक्तः।
(९) इदं सलिलं पवित्रं कुरुष्व, शुद्धः पूतोऽमृतः सन्तु नित्यम्। मां तारयन्ती कुरु तीर्थाभिषेकम् लोकाल्लोकान्तरत्वे तार्य्यतेति हैमाद्री दानखण्डे ११ अध्याये। (लोकाल्लोकान्तरं तरते तार्य्यतेति) मन्त्रोऽयं न सम्यक् शुद्धः मुद्रित पुस्तके दृश्यते।
(१०) तैत्तिरीयारण्यके १०—६४।
(११) मानव श्रौतसूत्रे १—८—४—४०।
" शुक्लयजुर्व्वेदे ४—२।

नित्यचा तर्पणं केचिदाहुः । गाश्चैशान्यां मुञ्चति । 'सूयवसाद् भवती'ति (१) । यदा गौर्हिंकरोति तदा 'हिं कृण्वती वे'ति (२) जपेत् । तामेव गामलङ्कृत्य सवत्सां ब्राह्मणाय दद्यात् । अतारणपक्षेऽपि धेनुर्दक्षिणा । वस्त्रयुग्मञ्च ततो ब्राह्मणभोजनम् ।

—*—

## (५१) अथ जलाशयोत्सर्गः ३(×) ।

—*—

जलाशयमलङ्कृत्य तत्र वरुणं साङ्गं पूजयित्वा हंसकारण्डवादिजलचराणामभावे पिष्टादिमयान् परिकल्प्य जले क्षिप्त्वा । अद्येत्यादि सर्व्वपापक्षयपूर्व्वक-रुद्रालयगमनानेक-कल्पावच्छिन्न-स्वर्गलोकहंसपरार्द्ध द्वयावच्छिन्नमहस्तपःप्रभृतिलोकभोग-सहित-परम-विष्णुपदप्राप्तिकामो मुञ्चजलाशयं वरुणदैवताकं स्नानपानावगाहनार्थं सर्व्वभूतेभ्य उत्सृजे न ममेति साक्षतजलं त्यजन् पठेत् ।

सर्व्वभूतेभ्य उत्सृष्टं ममैतज्जलमूर्ज्जितम् ।
रमन्तु सर्व्वभूतानि स्नानपानावगाहनैः (क) ॥
सामान्यं सर्व्वभूतेभ्यो मया दत्तमिदं जलम् ।
रमन्तु सर्व्वभूतानि स्नान-पानावगाहनैः ॥ इति

उत्सर्गं कृत्वा देवान् विसृज्य ग्रहप्रतिमामाचार्य्याय दत्त्वा ब्राह्मणान् भोजयित्वा दक्षिणान्दत्वा तदाशिषं गृहीत्वा स्वयं भुञ्जीतेति ।

इति सांख्यायनोक्तजलाशयोत्सर्गः ॥

—*—

## (५२) अथ कात्यायनोक्तः सप्रतन्यते ।

—*—

135 तथा च सूत्रम् ।

अथातो वापी कूप-तड़ाग-सभाराम देवतायतन-पुष्करिण्यादि प्रतिष्ठां व्याख्यास्यामः । उदगयन आपूर्य्यमाणपक्षे पुण्याहे तिथि-करण-नक्षत्रादि-गुणान्विते वारुणं यवमयञ्चरुञ्च

१ (+) ऋग्वेदे १—१६—४—४० ।

२ (×) ऋग्वेदे १—६४—२७ ।

३ (५) मात्स्ये,— अथातः सम्प्रवक्ष्यामि तडागादिषु यो विधिः ।

वह्निपुराणेच,— गर्भेदिने सुलग्ने सुहृर्त्ते तु भवेद् यदा ।
वापी कूपतडागानां तथैव कार्य्यं विधिः स्मृतः ॥
सम्पूर्णेतु कृतिकर्म्मः सम्पूर्णाः स्युर्मनोरथाः ॥
अन्यद् रघुनन्दनीय जलाशयोत् सर्गतत्त्वे ऽस्ति ।

श्रपयित्वाज्यभागमिष्ट्वा आज्याहुतीर्जुहोति 'त्वन्नोऽग्ने' (१) 'सत्वन्नोऽग्ने' (२) 'इमं मे वरुण' (३) 'तत्त्वायामि' (४) 'ये ते शतम्' (५) 'आयाश्चाग्ने'(६) 'उदुत्तमम्' (७) 'उरुं हि' 'राजा' (८) 'वरुणस्योत्तम्भनम्' (६) 'अग्नेरणीकम्'(१०) इति दशभिर्ऋग्भिर्हुत्वा स्थालीपाकं जुहोति 'अग्नये स्वाहा' 'सोमाय स्वाहा' वरुणाय स्वाहा,(११)उग्राय स्वाहा, यज्ञाय स्वाहा, भीमाय स्वाहा, शतक्रतवे स्वाहा, व्युष्ट्यै स्वाहा, स्वर्गाय स्वाहेति प्राशनान्ते जलचरान् क्षिप्त्वाऽलङ्कृतां गां तारयित्वा आचार्य्याय वरुणन्दत्वा कर्णवेष्टके वासोयुग्मे धेनुर्दक्षिणा च। ततो ब्राह्मणभोजनम् (१२)।

## अथ प्रयोगः।

सु मुहूर्त्ते वाप्यादि समाप्य सम्भारानुपकल्प्य यथाकामं सङ्कल्प्य गणेशं सम्पूज्य स्वस्ति वाच्य मातृकापूजनाभ्युदयिके कृत्वाचार्य्यं वृत्वा वाप्यादि नैर्ऋत्य भागे वास्तुमण्डलं विरच्य बलिन्दत्वा अग्निं प्रतिष्ठाप्य वेदां ग्रहानावाह्य सक्षीर प्रणयनपूर्व्वकं यवमयंचरुं श्रपयित्वा आज्यभागानिष्ट्वा 'त्वन्नोऽग्ने' (१३) इत्यादिसूत्रोक्त होमं विधाय

(१) शुक्लयजुर्व्वेद २१—३।
(२) " " २१—४।
(३) " " २१—१।
(४) " " २१—२—१८—४९।
(५) मैत्रायणी संहिता १—४—३।—काठकसंहिता ५—४।
(६) कात्यायनश्रौतसूत्रे २५—१—११। वाजसनेय संहिता ८—२३।
(७) " " १२—१२।
(८) ऋग्वेद १२—४—८।
(९) " " ४—३६।
(१०) " " ८—१४।
(११) शुक्लयजुर्व्वेद २१—३।
(१२) 'ततः सहस्रं विप्राणां अथवाष्ट शतन्तथा।
भोजयेच्च यथाशक्त्या पञ्चाशदथ विंशतिम्॥
एवमेव पुराणेषु तडागे विधिरुच्यते।
कूपवापीषु सर्व्वासु तथा पुष्करिणीषु च॥
एषएवविधिर्दृष्टः प्रतिष्ठासु तथैवच'।
इति मात्स्ये। पञ्चमं हेमाद्री दानखण्डेचापि।
(१३) शुक्लयजुर्व्वेद २१—३।

स्विष्टकृदादिहोमशेषं समाप्य धेनुन्तारयित्वा जलचरान् क्षिप्त्वा जलाशयमुत्सृज्य तां गां ब्राह्मणाय दद्यात् १(†)। वरुणमन्त्रादिस्तु २(‡) पूर्व्वप्रयोगस्थ एव ज्ञेयः ३(§)।

इति कात्यायनोक्तजलाशयोत्सर्गः॥

—*—

## (५३) अथ वाप्यादौ जलोपघाते शुद्धिविधानम्।

—*—

136 **हेमाद्रौ ४[*] बृहस्पतिः—**

सुमिष्टमुदकं मध्ये यत्र गौर्वितृषी भवेत्।
अव्याप्तश्चेदमेध्येन तद्वदेव शिलागतम्॥

137 **उशनाः—**

अन्धुःकूपतड़ागानि सरांसि सरितस्तथा ५(†)।
स्वनृतादीनि दोषाणि मनुः स्वायम्भुवोऽब्रवीत्॥
अविगन्धा रसोपेता निर्म्मलाः पृथिवीगताः।
अब्राह्मणाश्चैव गोपानादापः शुद्धिकराः स्मृताः॥
उद्धृताश्च प्रशस्ताः स्युः शुद्धैः पात्रैर्यथाविधि।
एकरात्रोषितास्तास्तु त्यजेदापः समुद्धृताः॥

---

१ (†) 'कनकालङ्कृतां कृत्वा जले गामवतारयेत्।
सामगाय च सा देया ब्राह्मणाय विजानता'॥ इति पाद्मे सृष्टिखण्डे। मत्स्ये
जलाशयोत्सर्गतत्त्वेऽपि।

२ (‡) शुक्ल यजुर्व्वेदे २१—६६।

३ (§) मत्स्याग्नि पुराणे वापीतडागादि कर्म तडाग प्रतिष्ठानामाध्यायेऽपि।

४ (*) सूरिवर हेमाद्रि प्रणीत चतुर्व्वर्ग चिन्तामणौ दानखण्डे षष्ठोदशाध्याये।

" यो वापीमथवा कूपं देशे तोयविवर्ज्जिते।
खानयेत् स नरो याति स्वर्गं च शतं समाः॥
देवैरेकत्वमतुलं तत्रासावर्ज्जितः सदा। इति नन्दिपुराणे।

५ (†) आपस्तम्बसंहितायाम् ७—८—९—१०—११०—१२।

" संवर्त्त संहितायाम् १८५—१८। पराशरसंहितायाञ्च ७—५।

**इदन्तु—गाङ्गव्यतिरिक्तविषयम् ।**

त्यजेत् पर्य्युषितं पुष्पन्त्यजेत् पर्य्युषितं जलम् ।
गङ्गातोयञ्च तुलसी पवित्रं सर्व्वदा स्मृतम् १(†) ॥

**इति विशेषोक्तेः । तथा—**

अक्षोभ्यानि तड़ागानि नदीवापी सरांसि च ।
चण्डालाद्यशुचिस्पर्शे तीर्थतः परिवर्ज्जयेत् ॥
चण्डालाद्यवतरणमार्गमित्यर्थः ।

138 **हारीतः—**

वापीकूपतड़ागेषु मानुषं शीर्य्यते यदि ।
अस्थिचर्म्मविनिर्मुक्ते दूषितेच खरादिभिः ॥
उद्धृत्य तज्जलं सर्व्वं शोधनं परिकल्पयेत् ।
अस्थिचर्म्मविनिर्मुक्तैश्चिरकालत्रासेन विशीर्णैरित्यर्थः ।

139 **बृहस्पतिः—**

मृतपञ्चनखात् कूपादत्यन्तोपहतात्तथा ।
आपः समुद्धरेत् सर्व्वाः शेषं वस्त्रेण शोधयेत् ॥
वह्निप्रज्वालनं कृत्वा कूपे पक्केष्टका चिते ।
पञ्चगव्यं न्यसेत् पश्चान्नवतोयसमुद्भवे २(‡) ॥
अचिरकालोपघाते स्वल्पोपघाते च ।

140 **हारीतः—**

घटानां शतमुद्धृत्य पञ्चगव्यं क्षिपेत्ततः ।
श्वपाकचण्डालादिभिर्दूषितेषु विशोधनम् ॥

१ (†) पराशरसंहितायाम् ११—३८—३९ ।
" 'वर्ज्ज्या पर्य्युषितं तोयं वर्ज्ज्यापर्य्युषितं जलम् ।
नवर्ज्ज्या जाह्नवीतोयं नवर्ज्ज्या तुलसी दलम्' ॥ इति शाक्तानन्द तरङ्गिणी २—२—१ ।
२ (‡) गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
पञ्चगव्य मिदं प्रोक्तं सदा (सर्व्व) पातकनाशनम् ॥ इति स्मृतौ स्कान्दे च ।
" गोमूत्रस्त्रिगुणंमूत्रं पयःस्याच्चतुर्गुणम् ।
घृत तद्द्विगुणं प्रोक्तं पञ्चगव्ये तथा दधि ॥
" पञ्चगव्येन पूतन्तु वाजिमेधफलं लभेत् ।
गव्यंतत् परमं मेध्यं गव्यादन्यन्नविद्यते ॥ वराहपुराणे, गारुडे प्रायश्चित्त प्रकरणेच ।

141 **आपस्तम्बः**—

उपानच्छ्लेष्मविण्मूत्रं क्षीरजो मद्यमेव वा।
एभिर्विदूषिते कूपे कुम्भानां षष्टिमुद्धरेत्॥

142 **विष्णुः**—

जलाशयेष्वप्यल्पेषु स्थावरेषु महीतले।
कूपवत् कथिता शुद्धिर्महत्सु तु न दूषणम्॥

**तत्रैव**—

अजा गावो महिष्यश्च ब्राह्मणीच प्रसूतिका।
दशरात्रेण शुद्ध्यन्ति भूमिष्ठञ्च नवोदकम्॥

143 **योगीश्वरः**—

शुचि गोस्तृप्तिकृत्तोयं प्रकृतिस्थं महीगतम्।
प्रकृतिस्थं रूपरस गन्धान्तरमनापन्नम्॥

144 **पराशरः**—

अस्थिचर्म्मावपतितं खरवानरशूकरैः।
उद्धरेदुदकं सर्व्वं शोधनं परिमार्ज्जनम्॥
इदं चिरकालविषयमित्युक्तमेव।

**यतः**—

वापीकूपतड़ागेषु दूषितेषु कथञ्चन।
उद्धृत्य शतकुम्भांस्तु पञ्चगव्येन शुद्ध्यति॥
पादुकोपानड् विण्मूत्रं कूपे यदि निमज्जति।
षष्टि कुम्भान् समुद्धृत्य पञ्चगव्येन शुद्ध्यति॥

145 **मात्स्ये**—

दूषितञ्च मलैः क्लिन्नं यच्च विष्ठानुलेपितम्।
अद्भिः शुध्यति तत् सर्व्वं अपां शुद्धिः कथम्भवेत्॥
गवां मूत्रपुरीषेण सोम-सूर्य्याग्निरश्मिभिः।
मारुतस्य च वेगेन त्वापः शुद्धिमवाप्नुयुः॥ इति।

146 **स्मृत्यर्थसारे—**

वापीकूपादावल्पजले तदुपघाते जलं निःसार्य्य मृत्तिकां परिरक्ष्योद्धृत्य पञ्चगव्यप्रोक्षणाच्छुद्धिः। पाषाणैरिष्टकादिभिर्वा बद्धे त्वक्षणस्थाने दहनम्। दारुबद्धे प्रक्षालनमेव। बहुजले तु तस्मिन् षष्टिकुम्भोद्धारः।

मूषकादिक्षुद्रप्राणिपाते त्रिंशत्कुम्भोद्धारो-गोमूत्रादि प्रक्षेपश्च। जले जलप्राणिशवोपघाते न दोषः। वापीकूपादिजले नरशवस्थितेऽल्पोपघाते घटशतेन शुद्ध्यति १(*) पञ्चगव्यप्रक्षेपाच्छुद्धिः। पशुशवघातेऽप्येषैव शुद्धिः।

तत्र जले नरमरणे जलस्य त्रिरात्रमशौचम्। अशौचान्ते पूर्वोक्त शुद्धिः कार्य्या। वापीकूपजले उपानच्छ्लेष्म-विण्मूत्र-रक्त-वसा-मज्जास्थि-मांस दूषिते षष्टि कुम्भानुद्धृत्य पञ्चगव्यप्रदानाच्छुद्धिः। कूपादिषु दूषितेषु दिवासूर्य्यरश्मि-वायुस्पर्शाच्छुद्धिः। रात्रौ वायुचन्द्रनक्षत्ररश्मिस्पर्शाच्छुद्धिः। सन्ध्यायां वायुस्पर्शाच्छुद्धिः। नद्यादौ अन्त्यजादिभिर्दूषिते तत् स्वीकृत्य जलस्थानादन्यत्र जलं शुद्धमेवेति। एवं स्वबुद्ध्यान्यत्र शुद्धिर्विवेचनीया।

इति श्रीमदनन्तभट्टविरचिते विधानपारिजाते
जलोपघाते शुद्धिविधानम् ॥

—*—

## (५४) अथ प्रसङ्गादुपहतजलपाने प्रायश्चित्तमभिधीयते २(०)।

—*—

147 **तत्र विष्णुः—**

मृतपञ्चनखात् कूपादत्यन्तोपहतं जलम्।
प्रपीत्वा ब्राह्मणस्त्र्यहं मुपवसेद् द्व्यहं राजन्यः ॥

एकाहं वैश्यः शूद्रो नक्तं. सर्व्वे चान्ते पञ्चगव्यं पिबेयुरिति। इदमकामविषयम्। कामकृते तु—

148 **हारीतः—**

छिन्ने भिन्ने शवे तोयं यत्रस्थं यदि तत् पिबेत्।
शुद्धैव चान्द्रायणं कुर्य्यात् तप्तकृच्छ्रमथापि वा ॥

---

१ (*) 'शतमुद्धृत्य शुद्ध्यति' इत्यत्र पाठान्तरं दृश्यते।

यदि कश्चित्ततः स्नायात् प्रमादेन द्विजोत्तमः ।
अपंक्तिपवणस्नायी अहोरात्रेण शुद्ध्यति ॥ इति ।

## चण्डालकूपजलपाने तु—

### 149 आपस्तम्बः---

चाण्डालकूपभाण्डस्थं न र कामाज्जलं पिवेत् ।
प्रायश्चित्तं कथन्तत्र वर्णे :वर्णे विनिर्द्दिशेत ॥
चरेत् सान्तपनं विप्रः प्राजापत्यन्तु भूमिपः ।
तदर्द्धन्तु चरेद्वैश्यः शूद्रे पादं विनिर्द्दिशेत ॥

### तथा—

म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा ।
जानुदघ्नं शुचिर्ज्ञेय मधस्थादशुचि स्मृतम् ॥
तत्तोयं यः पिबेद् विप्रः कामतोऽकामतोऽपि वा ।
अकामा भक्तभोजी स्यादहोरात्रन्तु कामतः ॥
अन्त्यजैः खानिताः कूपास्तड़ागादि स्तथैव च ।
तेषु स्नात्वा च पीत्वा च पञ्चगव्येन शुद्ध्यति । इति ॥
इदमनापद्विषयम् । आपदि तु –
अन्त्यैरपि कृते कूपे तेषां वाप्यादिके तथा १(+) ।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते ॥ इत्यादि २(‡) ।

---

१ (+) अन्त्यै रन्त्यजैरित्यर्थः ।
२ (‡) अवटकूप—वाप्यादिकरणे शास्त्रोक्त फलं यथा,—
स्कान्दे—अवटं यो नरः कुर्य्यादपां पूर्णं सुशोभनम् ।
दद्यात् सशालग्रामञ्च [illegible] यथा विधि ॥
अष्टाभिः सुविचित्राभिः पताकाभिरलङ्कृतम् ।
पितॄन् सन्तर्पयन् दत्वा चैव नरोत्तम ॥
यात्यसौ नरः सुगीतेन वरुणस्य सलोकताम् ।
नन्दि-पुराणे—
यो वापीमथवा कूपं देशे तोयविवर्जिते ।
खानयेत् स गच्छति स्वर्गं प्रेत्य शतं समाः ॥ एतत् प्रागपि उक्तम् ।
आदित्य पुराणे,—
सेतुबन्धरता ये च तीर्थ शौचरताश्च ये ।
तडागकूपकर्त्तारो मुच्यन्ते ते तृषाभयात् ।
कूपारामतडागेषु देवतायतनेषु च ।
पुनः संस्कारकर्त्ता च लभते मौलिकं फलम् ॥

अथ वाप्यादौ धर्म्मार्थे कृते तत्र गवि पाते—

कूपे खाते च धर्म्मार्थे गृहदाहे च या मृता ।

ग्रामदाहे तथा घोरे प्रायश्चित्तं न विद्यते ॥ इति निर्म्मातुरिति शेषः ।

इति प्रायश्चित्तम् ॥

—*—

## (५५) अथ त्वरितरुद्रविधानम् १(*) ।

—*—

150 **तत्र शौनकः—**

यस्य कुक्षौ जगत् सर्व्वं स्थावरं जङ्गमञ्च यत् ।

दुःखच्छिदे नमस्तस्मै ब्रह्मविष्णु-शिवात्मने ॥

अस्य त्वरितरुद्रस्य न्यासमुद्राः क्रमेण तु ।

जपहोमादिकं सर्व्वं कथ्यते सर्व्वसिद्धये ॥

छन्दोऽनुष्टुबथर्व्वा च ऋषिस्त्वरित-संज्ञकः ।

देवता त्वरितो रुद्रो वीजशक्तिर्नमोऽस्त्विति ॥

देवागारे नदीतीरे शुचावन्यत्र वा शुचिः ।

उपविश्य नियम्यासून् सङ्कल्प्यासनसंस्थितः ।

करयोस्तलयोश्चैव मूलमन्त्रञ्च विन्यसेत् ।

न्यासं मन्त्रपदैः कुर्य्यात् पञ्चभि र्हृदयादिकम् २(†) ॥

### पदन्यासो यथा—

यः शिरसे नमः । रुद्रः ललाटाय नमः । अग्नौ नेत्रत्रयाय नमः । यः कर्णाभ्यां नमः । अप्सु नासिकायै नमः । यः मुखाय नमः । ॐ औषधीषु बाहुभ्यां नमः । यः हृदयाय नमः । रुद्रा नाभ्यै नमः । विश्वा गुह्याय नमः । भुवनाय अपानाय नमः । विश्वेश ऊरुभ्यां नमः । नमः अङ्गुलाभ्यां नमः । अस्तु चरणाभ्यां नमः ।

१ (*) 'नमस्ते रुद्र मन्यवे' इति शुक्ल यजुर्व्वेदे १६—१ । अन्यद्रुद्रविधानपद्धति ग्रन्थे चास्ति ।

"रुद्राः संसृज्य पृथिवीम्", शुक्ल यजुर्व्वेदे ११—५४ ।

"नमोऽस्तु रुद्रेभ्यः" शुक्लयजुर्व्वेदे १७—६६ ।

२ (†) न्यासेतु मन्त्रोक्त पृथक् पृथक् पदेन चतुर्थ्यन्ताङ्गस्थान योगेन हृदयाद्यङ्गन्यासं कुर्य्यात् ।

'न्यसनाद्देव भावस्य साधकाङ्गेषु मन्त्रतः ।

सन्न्यास इति विख्यातो मंत्रेषु शिवशासनात्' ।

यो रुद्रोऽग्नौ हृदि न्यस्य शीर्षे योऽस्त्विवति विन्यसेत्।
यः औषधिषु शिखायां यो रुद्रः कवचं न्यसेत्॥

तस्मै रुद्राय नमोऽस्त्विवति अस्त्रमन्त्रेण चार्चयेत्।
क्रमेणैव तु पञ्चाङ्गन्यास एवमुदाहृतः॥

अङ्गुलाग्राणि मूले तु कृत्वाङ्गुष्ठेन पीड़येत्।
सा मुद्रा शुभदा प्रोक्ता सैव शान्तिप्रदायिनी॥

'एष ते रुद्र भाग' स्तमितिमुद्रा-प्रदर्शनम् १(†)।
श्रीकामः शीर्षे कुर्वीत तेजस्कामस्तु नेत्रयोः॥

मुखेऽन्नादि कामस्तु ग्रीवायां रोगनाशने।
हृदये सर्व्वकामस्तु नाभौ ज्ञानं प्रदर्शयेत॥

प्रजाकामस्तु गुह्ये स्यात पशुकामस्तु जङ्घयोः।
जान्वोर्वै ग्रामकामस्तु राष्ट्रकामस्तु पादयोः॥

वशीकरण कामस्तु वामहस्ते प्रदर्शयेत।
पादद्वयेऽभिचारे च व्याधेरुपगतावपि॥

वहिः शरीरात् कुर्वीत शिवस्याज्ञेति वै स्मरन्।
एवं मुद्रा दर्शयित्वा ततो ध्यानं समाचरेत॥

## तद् यथा—

चतुर्भुजं त्रिनेत्रञ्च शुद्धस्फटिक सन्निभम्।
उग्रकर्म्मणि चैवोग्रमूर्त्तिं ध्यायेदुमापतिम्॥

द्विभुजं नागपाशञ्च शूलपाणिं जटाधरम्।
ध्यात्वैवं शङ्करं पापान्मुच्यते मानसोद्भवात॥

अधःशाय्येकभक्ताशी ब्रह्मचारी हविष्यभुक्।
अयुते द्वे जपेत पूर्व्वं प्रत्यहं पूजयेच्छिवम्॥

जुहुयात्तद्दशांशेन तद्दशांशेन तर्पणम्।
मार्ज्जनं दद्दशांशेन ततो ब्राह्मणभोजनम्॥

१(†) 'एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहैषते रुद्रभाग आखुस्ते पशुः'। शुक्ल-यजुर्वेदः ३।५७।

एवं कृते तु सिद्धिः स्यात् फलार्थन्तु ततो जपेत् ।
पुरश्चरणमेवन्तु कृत्वा सम्पूज्य शङ्करम् १(*) ॥
जपेत्सरितरुद्रन्तु सर्व्वकामसमृद्धये ।
श्रीकामः शान्तिकामो वा जपेल्लक्षमतन्त्रितः ॥
श्रीकामो विल्वसमिधा शान्तिकामः शमीमयैः ।
जुहुयादाज्य संमिश्रै स्तर्पणं मार्ज्जनन्ततः ।
जप्त्वा लक्षन्तु पुत्राय पायसं जुहुयात्ततः ॥
वित्तार्थी श्रीफलैर्होम मायुस्कामश्च दूर्वया ।
तिलैराज्येन सम्मिश्रै स्तेजस्कामो घृतेन वै ॥
व्रीहिभिः पशुकामस्तु राष्ट्रकामस्तु वै यवैः ।
पायसं सर्वकामेन होतव्यं शर्करान्वितम् ॥
मध्वाक्तान्याम्रपर्णानि तीव्रज्वरविनाशने ।
सर्व्वरोगविनाशाय सूर्य्यस्याभिमुखो जपेत् ॥
अयुतं द्वे जपेद्धोमः कार्य्योऽर्कसमिधा शुभः ।
औदुम्बरैरन्नकाम स्तेजस्कामस्तु खादिरैः ॥
अपामार्ग समिद्धोमाद्भूतबाधा विनश्यति ।
ग्रहबाधाविनाशाय जपेदगस्त्यसन्निधौ ॥
लवणान्वितदध्याक्ता स्तीक्ष्णाग्राश्वत्थसम्भवाः ।
हूयन्ते समिधः शुष्काः स्वाहान्तं मन्त्रमुच्चरन् ॥
दशपञ्चाहुतीर्हुत्वा गच्छ गच्छेत्युदीरयेत् ।
यावद्धोमो बलिर्देयः पुरुषाहार-सम्मितः ॥
एवं कृते प्रमुच्येत पुमान् स्त्री वा महाग्रहात् ।
जुहुयान् शतपत्राणि स हृष्टो जयमाप्नुयात् ॥
लाजाहोमेन कन्यार्थी कन्यामाप्नोति रूपिणीम् २(†) ।
लाजाश्च मधुसम्मिश्राः श्वेतपुष्पाणि वा पुनः ॥

---

१ (*) 'जपोहोमस्तर्पणञ्चाभिषेको विप्र भोजनम् ।
पञ्चाङ्गोपासनं लोके पुरश्चरणमिष्यते' ॥
तथाहि-देवतामन्त्र-सिद्ध्यर्थं स्वाभीष्टलाभार्थञ्च तत्तद्देवतापूजापूर्व्वकं तत्तन्मन्त्रजपः, होमस्तर्पणं अभिषेको ब्राह्मणभोजनं चेति पञ्चाङ्गकं साधनम् ; अन्यत्तु योगिनीहृदये, गौतमीये, वैशम्पायन संहितायां तत्प्रकारं चास्ति ।

२ (†) 'लाजहोमेन' इत्यपि पाठान्तरमस्ति ।

हूयन्ते हरिते देशे तस्य विश्वं वशं भवेत्।
वामाङ्गमुत्तमं कार्य्यं स्त्रीवशित्वे विचक्षणैः॥

हस्त्यश्वामात्यशान्त्यर्थं तिलैश्चाज्येन संयुतैः।
होमस्थाने तु संस्थाप्य कुम्भमेकं जलान्वितम्॥

मन्त्रं जप्त्वाष्टसाहस्रं कुम्भं स्पृष्ट्वा प्रयत्नतः।
अभिषेकन्तु तेषां वै शालां प्रोक्ष्य प्रदक्षिणम्॥

ग्रहग्रामादि शान्तिस्तु सर्व्वैः कार्य्या तु पूर्व्ववत्।
वास्तुपूजा प्रकर्त्तव्या प्राच्यां दिशि पदे शुभे॥

ईशानाय बलिः कार्य्यः पशूनाम्पतये तथा।
एवं कृते पशूनान्तु प्रजानां शान्तिमाप्नुयात्॥

अद्भुतेषु च सर्व्वेषु पशूनां ग्रामवाह्यतः।
उपविश्य जपेद्रुद्रं त्वरितं बहुभिः सह॥

होमः पलाशसमिधैः कर्त्तव्यो घृतसंयुतैः।
ईशानाय बलिः कार्य्यः यस्यान्दिशि तदद्भुतम्॥

तदाशापतये चैव पशूनां पतये तथा।
वृष्टिकामो जपेल्लक्षं तिलैर्होमो घृतान्वितैः॥

बलि–पूजा प्रकर्त्तव्या शिवस्य वरुणस्य च।
सर्व्वस्मिन्नपि चैवार्थे त्वरितस्य जपो भवेत्॥

अयुतद्वयजप्यन्तु यावल्लक्षं ततोऽधिकम्।
एवं कृते तु सिद्धिःस्यान्निष्कामः प्राप्नुयाच्छिवम्॥

ऐहिकामुस्मिकान् भोगान् भुक्त्वा सायुज्यमाप्नुयात्।
इति विधानपारिजाते त्वरितरुद्र–विधानम् १(*)॥

—*—

१ (*) तुला पुरुषदानविधान-कथनानन्तरं प्रसङ्गाङ्गाना विषया: उल्लिखिता:। पुनरनुक्रमणिकानुसारेण पर्वतादि-दानानि समुल्लिख्यन्ते। तुलादिदान-विधानमन्त्राश्च संक्षेपतश्च कथिता:। हेमाद्रिप्रबन्ध-प्रयोगपारिजातादौ विस्तरेण तत्तद्विषया उक्ता:।

## (५६) अथ धान्यादि दश पर्व्वतदानानि ।

—*—

### 151, 152 पाद्मे, मात्स्येच—

मेरोः प्रदानं वक्ष्यामि दशधा मुनिसत्त ! ।
तत् प्रदानान्नरो लोका-नाप्नोति सुरपूजितान् ॥
पुराणे पुत्र वेदेषु यज्ञेष्वायतनेषु च ।
न तत्फल मधीतेषु कृतेष्विह यदश्नुते ॥
तस्माद्विधानं वक्ष्यामि पर्व्वतानामनुत्तमम् ।
प्रथमो धान्यशैलः स्याद् द्वितीयोलवणाचलः ॥
गुड़ाचल स्तृतीयःस्यात् चतुर्थे हेमपर्व्वतः ॥
पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्व्वतः ॥
सप्तमोघृतशैलश्च रत्नशैल स्तथाष्टमः ।
राजतो नवमस्तद्वद् दशमः शर्कराचलः ॥
वक्ष्ये विधानमेतेषां यथावदनु पूर्व्वशः ।
अयने विषुवे चैव व्यतीपाते दिनक्षये ॥
शुक्लपक्षे तृतीयायां उपरागे शशिक्षये ।
विवाहोत्सव यज्ञे वा द्वादश्यामथवा पुनः ॥
शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे च विधानतः ।
धान्यशैलादयोदेया यथा श्राद्धं विधानतः ॥
तीर्थे चायतने वापि गोष्ठे वापि भवाङ्गने १(*) ।
मन्तपं कारयेद् भक्त्या चतुरस्रमुदङ् मुखम् ॥
प्रागुदक् प्रवणं तद्वत प्राङ्मुखोवा विधानतः ।
तद्वदिति तुला पुरुषवच्चतुरस्रमित्यर्थः ॥
गोमयेनोपलिप्तायां भूमावास्तीर्य्य वै कुशान् २(†) ।
तन्मध्ये पर्व्वतं कुर्य्याद् विष्कम्भ—पर्व्वतान्वितम् ॥

१ (*) अत्र भवाङ्गनं—शिवालयं इति ।

२ (†) यत्र गोमयलेपसम्भावना नास्ति तत्र पञ्चगव्य-गङ्गासलिल-कुश तुलसीजलैस्सम्पूर्व्वकं भूमिः संशोध्या ।

धान्यद्रोणसहस्रेण भवेद्गिरिरिहोत्तमः ।
मध्यमः पञ्चशतिकं कनिष्ठः स्यात्त्रिभिः शतैः ॥

तत्राह—

हरिचन्दन—शन्तानौ पूर्व्वं पश्चिमभागयोः ।
निवेश्यौ सर्व्वशैलेषु विशेषाच्छर्कराचलः ।
इति शर्कराचल प्रकरणोक्तेः ।

पूर्व्वे हरिचन्दनः पश्चिमे सन्तान इति तरुद्वयञ्च निवेश्यम् । विशेषाच्छर्कराचल-इत्युक्त्या शर्कराचलदाने अवश्यकर्त्तव्यता प्रतीयते ।

तेनाशक्तौ मन्दारादि वृक्षत्रयमेव कुर्य्यात । शर्कराचलदाने पञ्चापि कुर्य्यादित्यर्थः ।

मेरुर्महाव्रीहिमयस्तु मध्ये, सुवर्णवृक्षत्रयसंयुतः स्यात ।
पूर्व्वेण मुक्ताफलवज्रयुक्तो याम्येन गोमेदक पुष्परागैः ॥
पश्चाच्च गारुत्मत नीलरत्नैः, सौम्येन वैदुर्य्य सरोजरागैः ।
श्रीखण्ड खण्डैरभितः प्रवाल, लतान्वितः शुक्तिशिलातलः स्यात ॥
महाव्रीहिमयो राजान्नशालय इति हेमाद्रिः ।
सुवर्णवृक्षत्रयं-मन्दार-पारिजात-कल्पवृक्षरूपम् ।

तत्र मध्ये कल्पतरुः, दक्षिणे मन्दारः, उत्तरे पारिजातः स्थाप्यः ।

ब्रह्माथ विष्णु र्भगवान् मुरारि,
र्दिवाकरोऽप्यत्र हिरण्मयः स्यात् ।
मूर्द्धन्यवस्थाः गतमत्सरेण,
कार्य्याः सुवर्णेन नथा द्विजौघाः ॥

मूर्द्धन्यवस्थाः—पर्व्वतमस्तकाः द्विजौघाः पक्षिणः समूहाः । ब्रह्मादि प्रतिमा-लक्षणं, नवग्रहप्रकरणेऽभिहितम् । अत्रौघशब्देन बहुत्वेसिद्धे पुनरनेकग्रहणं—द्विजशब्दा-भिधेयार्थान्तर संग्रहार्थम् ।

ते पक्षिसंघा मुनिसंघाश्च कार्य्या इत्यर्थः । एते प्रकृतत्वात् सौवर्णा एव कार्य्याः ।

चत्वारि शृङ्गानिच राजतानि,
नितम्बभागेष्वपि राजतः स्यात ।
आद्रेक्षु वंशावृत कन्दरस्तु,
घृतोदकः प्रस्रवणश्च दिक्षु ॥

शुक्लाम्बराण्यम्बुधरावली स्यात्,
पूर्वेण पीतानिच दक्षिणेन ।
वासांसि पश्चादथ कर्व्वुराणि,
रक्तानि चैवोत्तरतो घनाली ॥
आर्द्रेक्षु रूपा वंशाः, घृतमेव उदकप्रस्रवणं यत्र ।
पूर्व्वादि दिगवस्थानि शुक्लाद्यम्बराण्येव मेघपंक्तिः १(+) ॥
रौप्यान् महेन्द्र प्रमुखानथाष्टौ,
संस्थाप्य लोकाधिपतीन् क्रमेण ।
नानाफलालीच समन्ततः स्यात्,
मनोरमं माल्य-विलेपनञ्च ॥
वितानकञ्चोपरि पञ्चवर्ण-
मम्लान पुष्पाभरणं सितञ्च ।
इत्थं निवेश्यामरशैलमग्रयम्,
मेरोश्च विष्कम्भगिरिं क्रमेण ।
तुरीय भागेन चतुर्द्दशन्तु,
संस्थापयेत् पुष्पविलेपनाढ्यान् ॥
अत्र प्रति विष्कम्भ पर्व्वतं प्रधानतूरीय भागोग्राह्यः ।
चतुर्थांशेन विष्कम्भ पर्व्वतान् कारयेत २(*) ।
पृथगिति—लवणाचले वक्ष्यमानत्वात् ।
होमानन्तरं कर्त्तव्यमाह—
मेर्व्वाद्यावाहनं कुर्य्यान्मन्त्रैरेभि र्यथाक्रमम् ।
तत्र मेरोः
त्वं सर्व्वदेवगणधामनिधेर्विरुद्ध—
मस्मद्गृहेऽप्यमर पर्व्वत नाशयाशु ।
क्षेमं विधत्स्व कुरुशान्तिमनुत्तमाञ्चः,
संपूजितः परमभक्तिमता मयाहि ॥

---

१ (+) 'दिगवस्थितानि' इतिपाठान्तरम् ।

२ (*) तत्र पर्व्वताः, तत्परिमाणतादिनिर्माणप्रणाली तत्तद्विधानपद्धतिषु विस्तरतो वर्णितानि, अत्र संक्षेपेणोक्ता ।

त्वमेव भगवानीशो ब्रह्मा विष्णुर्दिवाकरः ।
मूर्त्तामूर्त्तपरं वीजमतः पाहि सनातनः ॥
यस्मात्त्वं लोकपालानां विश्वमूर्त्तेश्च मन्दिरम् ।
रुद्रादित्यवसूनाञ्च तस्माच्छान्तिं प्रयच्छ मे ॥
यस्मादशून्य ममरैर्नारीभिश्च शिरस्तव १(*) ।
तस्मान्मामुद्धराशेषदुःखसंसार सागरात् ॥
एवमभ्यर्च्य तं मेरुं मन्दरञ्चाभिपूजयेत् ।
यस्माच्चैत्ररथेन त्वं भद्राश्वेन वर्षेण च ॥
शोभसे मन्दर क्षिप्रमलं पुष्टिकरो भव २(†) ॥
यस्माच्चूड़ामणि र्जम्बुद्वीपे त्वं गन्धमादन !
गन्धर्व्ववनशोभावानतः कीर्त्तिर्दृढ़ास्तु मे ३(‡) ॥
उत्तरैः कुरुभिर्यस्मात् सावित्रेण वनेन च ।
सुपार्श्व शोभसे नित्यमतः श्रीरक्षयास्तु मे ४(§) ॥
यस्मात्त्वं केतुमालेन वैभ्राजेन वनेन च ।
हिरन्मयाश्वत्थशिख स्तस्मात् पुष्टिर्ध्रुवास्तु मे ५(०) ॥
पूर्व्वेण मन्दरमनेकफलैश्च युक्तम् ,
युक्तं गणैः कनकभद्रकदम्बचिह्नम् ।
कामेन काञ्चनमयेन विराजमान-
माकारयेत् कुसुमवस्त्रविलेपनाढ्यम् ॥
क्षीरारुणोद सरसाथ वनेन चैव,
रौप्येण शक्तिघटितेन विराजमानम् ।

अत्र श्रीहिमयमेरुसन्निधानाद्वान्यान्तरानुपदेशाच्च मन्दरोऽपि श्रीहिमय एव कार्य्यः ।

गणैरिति—नराकृतिभिस्त्रिभिर्गणैर्युक्तम् ।
कनकेन घटितं—भद्रकदम्बाख्यवृक्षेण चिह्नितम् ।

१ (*) इत्यनेन मेरोः स्तवो बोध्यः । अत्र 'ममतथा' इति हेमाद्रिधृतः पाठः ।
२ (†) इति मन्दरार्च्चनमन्त्रो ज्ञेयः ।
३ (‡) इति गन्धमादनपूजनमन्त्रः ।
४ (§) इति सुपार्श्वार्च्चनमन्त्रः ।
५ (०) इति विपुलपर्व्वतपूजनमन्त्रः । सर्व्वत्र गन्धादिभिरर्च्चनं कार्य्यम् ।

क्षीरपूरितेन—अरुणोदसंज्ञकेन रूप्यघटितेन ।
सरसा चैत्ररथाख्यवनेन विराजमानमित्यर्थः ।
याम्येन गन्धमादनश्च निवेशनीयः,
गोधूमसञ्चयमयः कलधौतजम्बा ।
हैमेन यक्षपतिनाऽमृतमानसेन,
वस्त्रैश्च राजतवनेन च संयुतः स्यात् ॥
कलधौतजः—सौवर्णजम्बुवृक्षः ।
रजत-घटितगन्धर्व्ववनेन युत इत्यर्थः ।
पश्चात्सिताचलमनेक-सुगन्धि-पुष्प—
सौवर्ण-पिप्पल-हिरण्मय-हंसयुक्तम् ।
आकारयेद् रजत-पुष्पवनेन तद्वत्,
वस्त्रान्वितं दधिसितोदसरस्तथाग्रे ॥
संस्थाप्य तं विपुलशैलमथोत्तरेण,
शैलं सुपार्श्वमपि माषमयं सवस्त्रम् ।
पुष्पैश्च हेम-वटपादपशेखरन्त-
माकारयेत् कनक-धेनुविराजमानम् ।
माध्वीक भद्र सरसा च वनेन तद्वद्-
रौप्येण भास्करवता च युतं विधाय ॥

माध्वीकं मधु। मधुपूर्णरजतपात्ररूप-भद्रनामकसरसा रौप्यनिर्म्मितेन भास्करवता सावित्रवनेन च युतमित्यर्थः ।

अत्र मन्दारादि-वृक्षत्रय-मेरुमूर्ध्नि स्थापन-कामदेवादेः प्रत्यङ्मुखत्वादिकञ्च शर्करचले स्पष्टं भविष्यति ।

ते च कामदेवादयः कदम्बादीनां निजपृष्ठतः
वृक्षाणामधस्तात् स्थाप्य इति हेमाद्रिः १(*) ।
होमैश्चतुर्भिरथवेद-पुराणविद्भि-
र्दान्तैरनिन्द्यचरिताकृतिभिर्द्विजेन्द्रैः ॥
पूर्व्वेण हस्तमितमत्र विधाय कुण्डम्,
कार्य्यस्तिलैर्यवघृतेन समित्कुशैश्च ॥

१ (*) सूरिवरहेमाद्रिविरचितचिन्तामणौ दानखण्डे ।

रात्रौ च जागरणमनुद्धतगीततुर्य्यै—
रावाहनञ्च कथयामि शिलोच्चयानाम् ॥

पूर्व्वेणेति-मण्डपस्य पूर्व्वभागे हस्तमात्रं कुण्डं विधाय तदीशानभागे तुला-पुरुषोक्त१(†)लक्षणां देवतावेदिं कृत्वा तत्र विनाकयादि द्वात्रिंशद्देवताः आवाह्य पूजयित्वा ऋत्विग्भिस्तल्लिङ्गकैर्मन्त्रैस्तिलादिद्रव्येण होमं कारयेदिति हेमाद्रिः २(§)।

अत्र विनायकादयो द्वात्रिंशद्देवताः, द्वादशादित्याः, एकादश रुद्राः, दश-लोकपालाः, अष्टौ वसवः, ब्रह्मा, विष्णुः, शिवः, सूर्य्य-काम धनद-हंस-कामधेनवश्चेति एकाशीतिसंख्यका देवा द्रष्टव्याः ३(०)।

एवमामन्त्र्य तान् शैलान् प्रभाते विमले पुनः।
स्नात्वाथ गुरवे दद्याद् मध्यमं पर्व्वतोत्तमम् ॥
विष्कम्भपर्व्वतान् दद्यादृत्विग्भ्यः क्रमशो नृपः (!)।
गाश्च४(*) दद्याच्चतुर्व्विंशदथवा दश पार्थिव !
शक्तितः सप्त वाष्टौ वा पञ्च दद्यादशक्तिमान् ॥
एकां वा गुरवे दद्यात् कपिलाञ्च पयस्विनीम्।

---

१ (†) हेमाद्रिसूरिवरकृततुलापुरुषप्रकरणोक्तं, प्रयोगपारिजातोक्तं, [illegible]दानादिपद्धत्युक्तञ्च ज्ञेयम्।

२ (§) हेमाद्रि-सूरिवरकृत-चतुर्वर्गचिन्तामण्यन्तर्गतदानखण्डे।

३ (०) द्वादशादित्या गणदेवताः। तदुक्तं पुराणे—
"विवस्वानर्य्यमा पूषा त्वष्टा च सविता तथा। भगो धाता विधाता च वरुणो मित्र एव च।
शक्र उरुक्रमश्चैव आदित्या द्वादश स्मृताः"।
एकादश रुद्रा यथा,—
"अज एकपादहिर्बुध्नः पिनाकी चापराजितः।
महेश्वरः त्र्यम्बकश्च शम्भुर्वृषाकपिस्तथा।
हरश्चेश्वरश्चेति रुद्रा एकादश स्मृताः
लोकपाला यथा,—
वह्निपुराणे, ते च दिक्पाला गणसंज्ञक ।
"इन्द्रो वह्निः पितृपतिर्नैरृतिर्वरुणोऽनिलः।
धनदः शङ्करश्चैव लोकपालाः पुरातनाः"।
अष्टौ वसवः,—
"धरो ध्रुवश्च सोमश्च विष्णुश्चैवानिलोऽनलः।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ क्रमात् स्मृताः" इति भरतः।

४ (*) गाव इति पाठान्तरमस्ति।

अत्र केचित् सहस्रदक्षिणं कृत्वेति ब्रह्माण्डोक्तेर्वक्ष्यमाणत्वाद् गोभिन्नां दक्षिणां दद्यादित्याहुः ।

पर्व्वतानामशेषाणामेष एव विधिः स्मृतः ।
त एव पूजने मन्त्रा स्त त्रवोपकरा मताः १(*) ॥
ग्रहाणां लोकपालानां ब्रह्मादीनाञ्च सर्व्वशः ।
स्वस्वमन्त्रेण सर्व्वेषु होमः शैलेषु पठ्यते ॥
वस्वादेः प्रत्येक मन्त्राभावान्नाममन्त्रैर्होमादिकं कार्य्यम् ।
उपवासी भवेन्नित्य मशक्तौ नक्तमिष्यते ।
सर्व्वत्राक्षारलवण मश्नीयादत्र भक्तिमान् ॥
अन्नं ब्रह्म यतः प्रोक्तमन्ने प्राणाः प्रतिष्ठिताः ।
अन्नाद् भवन्ति भूतानि जगदन्नेन वर्त्तते २(†) ॥
अन्नमेव यतो लक्ष्मीरन्नमेव जनार्द्दनः ।
धान्यपर्व्वतरूपेण पाहि तस्मान्नमो नमः ॥
एवमुपस्थायाचार्य्याय दत्त्वाऽन्येभ्योऽपि दद्यात् क्रमेण ।
अनेन विधिना यस्तु दद्याद्धान्यमयं गिरिम् ।
मन्वन्तरशतं सार्द्धं देवलोके महीयते ३(‡) ॥
पर्व्वतदानचिकीर्षुर्यजमानः ।
अप्सरोगणगन्धर्व्वैराकीर्णेन विराजितः ।
विमानेन दिवः पृष्ठमायाति सुरसेवितः ।
कर्म्मक्षयाद्राजराजं (ज्यं) प्राप्नोतीह न संशयः ॥

इति धान्यादि दशशैलदान
मूलवाक्यानि ॥

—*—

१ (*) अभिधानां पर्व्वतानां शर्कराचल-धान्याचल-तिलाचल-सुवर्णाचल-रौप्याचल-लवणाचल-घृताचला-दीनामिति । सर्व्वेष्वचलेषु विहितेषु एवमेव विधिरिति बोध्यम् ।

२ (†) 'अन्न ब्रह्म' इति हेमाद्रिकृत-चतुर्व्वर्गचिन्तामणौ दानखण्डे पञ्चाध्यायि पाठः ।

३ (‡) यजमानस्य पर्व्वतदानफलं वक्ति, पर्व्वतेत्यादिना ।

## (५७) अथ शैलदान दशकस्य साधारण प्रयोगः कथ्यते ।

—*—

पर्व्वतदानचिकीर्षुर्यजमानः प्रागुक्तदेशकालादिकं १(*) प्राप्याधिवासनदिने कृतोपवासः कर्म्मसंकल्पं विधाय विनायकं संपूज्याप्सरोगन्धर्वविराजमाने दिवि विमानकरणक द्युलोकपृष्ठ गमनानन्तरं सार्द्धमन्वन्तरशतावधिकाल-देवलोक-निवासोत्तर-भूलोकराज-राजत्व-प्राप्तिकामः श्रीविष्णुप्रीतिकामो वा श्वोधान्यपर्व्वतमहादानमहं करिष्ये २ (†)।

लवणादि शैलेषु फलवाक्यानुसारेण फल—संकीर्त्तनं विधेयम्। तत्तत्कामः ३(‡) श्वोऽमुक पर्वतदानं करिष्य इतिसंकल्प्य तुला पुरूषोक्त प्रकारेण मातृकापूजनवृद्धिश्राद्धपुण्याह वाचनर्त्विग्वरण मधुपर्क—पूजाः कृत्वा चिकीर्षित धान्यादिपर्व्वतासाधनकुण्डमण्डप ग्रहवेदिकादि यथाविधि कृत्वा ततो वेदिकायां गोमयोपलिप्तायां कुशास्तृतायां सहस्रद्रोणमित राजशालिनामक महाव्रीहिभिरुत्तमम्। तदर्द्धेन मध्यमं, द्रोणशतत्रयेनाधममिति स्व शक्त्या मेरुं कारयेत्।

### तत्र द्रोण-परिमाणं परिभाषायां प्रागुक्तम्।

कल्पतरुकारस्तु—प्रमाणस्य करचरणस्थपुंसोद्वादशभिः प्रसृतिभिः कुण्डो भवति। यथोत्तर—मेतच्चातुर्गुण्येन प्रस्थाढ़कद्रोण इति चतुषष्ट्या कुण्डं चैव द्रोण इति व्याचख्यौ।

धान्यमेरु—मध्ये कल्पवृक्षम्। दक्षिणे मन्दारम्। उत्तरे पारिजातम्। शक्तौ सत्यां पश्चिमे सन्तानम्। पूर्व्वे हरिचन्दनमिति पञ्च सुवर्णवृक्षान् स्थापयेत्।

अशक्तौ त्रयमेव ४(०)।

मेरु पूर्व्वादिदिक्षु ब्रह्म-विष्णु-रूद्र-सुर्य्य-प्रतिमाः पक्षिसंघान मुनिसंघांश्च स्थापयेत ५(+)। तत्रैव चतुर्द्दिक्षु स्थित राजताचल मुक्ताफल वस्त्रादि युगं (युग्मं) संस्थाप्य तद्बहिर्द्दिगष्टके रौप्य ग्रहेन्द्राद्यष्ट प्रतिमाष्टकं निधाय प्रवाल लता स्थानीयैः श्रीखण्डैः शीलातलस्थानीयैरेताभिः शुक्तिभि र्भूषयित्वा राजतेन मेखला निबन्ध्याङ्कं रचयित्वा तद्बहिष्प्रागादिचतुर्द्दिक्षु श्वेत पीत-कर्व्वुर रक्तवस्त्राणि मेघपंक्ति स्थानीयानि निधाय, तद्बहिर्द्दिक्षु वेशस्थानीयेषु-इक्षुदण्डावृत-कन्दर-घृतपूर्ण-रजतपात्र-कल्पितोदक परिस्रवणं परितः स्थापयेत।

---

१ (*) देशकालादिकं संकीर्त्य इति च पाठः साधुः।

२ (†) इति संक्षिप्त संकल्पवाक्यम्।

३ (‡) 'तत् तत्काम' इति लवणादि शैलदानफलकाम इष्टकामोवा इत्यर्थः।

४ (०) अशक्तौ धनाभावे सति त्रीन् सुवर्णवृक्षान् स्थापयेदित्यर्थः।

५ (+) मेरुविरचनात् परं तत्पूर्व्वादिदिक्षु ब्रह्मादिप्रतिमास्थापनं कुर्यादित्यर्थः। यथा प्रकृते सुमेरौ ब्रह्मादयः सन्ति तद्वदत्रापि तेषां सन्निवेशः।

नाना फलमाल्यविलेपनमुपरि वद्धाम्लानपुष्पविभूषित–पञ्चवर्णवितानमेवंविधं मेरुं विरच्य, तत्पूर्व्वभागे मेर्व्वर्थोपकल्पित-व्रीहिचतुर्थांश परिमित व्रीहिमयं मन्दराख्यं विष्कम्भपर्व्वतमुपरि-स्थापितसौवर्ण-रौप्यमयं सौवर्णभद्रकदम्ब ततस्तस्य प्रत्यङ्मुख-सौवर्णकामदेव प्रतिमया कल्पोदसरः स्थानीयक्षीरपूर्णरौप्यपात्रम् , रौप्यघटित-चैत्ररथाख्य वन-नानाफल वस्त्रपुष्पविलेपनाद्यं कुर्य्यात् ।

153. कामदेवलक्षणं विश्वकर्मीये १(*) ।

चापवाणधरः कामोरति-प्रेयान् सुमध्यमः ।

आलीढ़ोनन्दनो वाणी रूपवान् विष्णुपुत्रक इति ॥

ततो दक्षिणे पूर्व्ववच्चतुर्थांश-गोधूममयं गन्धमादनाख्यं विष्कम्भ पर्व्वतम् । तदुपरिस्थित सौवर्ण जम्बूवृक्षं तन्मूल स्थापित सौवर्णोदङ्मुख धनदप्रतिमं मानससरश्च । ततो मधुघृतपूरित रौप्यपात्रं रौप्यघटित गन्धर्व्ववन नानाफल वस्त्रमाल्यादियुतं कुर्य्यात् ।

तथाच धनदलक्षणं श्रीप्रश्ने २(०) ।

ह्रस्वं वापि गृणात्र्यश्च गदिनं पीतविग्रहम् ।

पुष्पकस्थं धनाध्यक्षं ध्यायेच्छिवसखं सदा । ३(+) इति ।

ततः पश्चिमदेशे मेरुचतुर्थांश तिलात्मकं विपुलाख्यं विष्कम्भ पर्व्वतमुपरिस्थं सौवर्ण-पिप्पलं तन्मूलस्थ प्राङ्मुखसौवर्ण हंस-प्रतिमं पीतोदसर स्थानीयदधिपूरित-रौप्यपात्रं रौप्यघटित-वैभ्राजवनं नानाफल वस्त्रादियुतं कुर्य्यात् । एवमेवोत्तरत्रापि मेरु चतुर्थांश-परिमित वक्ष्यमाण-लक्षणाद्विद्रव्ये विस्कम्भपर्व्वत-रचना कार्य्या । ततोमण्डप-पूर्व्वभागे हस्त मात्रं कुण्डं विधाय तदीशानभागे ग्रहवेदिं हस्तमात्रं कुर्य्यात् ।

यजमान मण्डपप्रवेश-गुर्व्वादिविनियोगान्ते गुरुः कुण्डप्रान्ते सर्व्वौषध्यादि-गर्भकलशं प्रतिष्ठाप्य ऋत्विजो होमाय विनियुज्य वेदिस्थापनं विधाय ग्रहादि स्थापन-पूजादिकं कृत्वा ऋत्विग्भिर्विनायकादि ग्रहाधिदेवता लोकपालसहस्तेभ्यश्च च-

---

१ (*) विश्वकर्मप्रणीतशिल्पशास्त्रे कामदेवलक्षणमुक्तम् ।

२ (०) "धानुर्गुर्यचनिकराः कुबेरवरकिङ्कराः । मेघजप्रसरकरा मघनाकारमूर्त्तयः ।

" पिङ्गलाकारवदनाः पिङ्गलाख्या मनोहराः । स्फटिकारत्नवैयाघ दीर्घस्तनाश्च केवल" ॥ इति धनदस्वरूपं ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे समदशाध्याये ।

३ (+) यस्य पुष्पकं विमानम् । तथाच वेदान्त कल्पतरौ—

'सर्व्वेभ्योऽधरं ददाति पुष्पकम् , इति ।

एतस्य वर्ण्यं हृतं रामराजेन युद्धादेऽपि ॥

द्वादशादित्य-ब्रह्म-विष्णु-शिव-सूर्य्य कामदेव   धनद-हंस-कामधेनु रूप्ये काशीतिदेवेभ्यः प्रतिदेवं अष्टोत्तरशताहुती स्तिल-यवोदुम्बर-समिद्भिर्घृ तात्तै स्तान् विभज्य होमान् कारयेत् ।

अत्र हस्तमात्र-कुण्डोपदेशादाहुति-सहस्रं होतव्यमिति—

154. दान विवेककारः ।

155. ब्रह्माण्डपुराणेतु अष्टशतं होतव्य-मित्युक्तम् ।

होमसमाप्त्यनन्तरं कर्त्ता वक्ष्यमाणमन्त्रैर्मेर्व्वादीनावाह्य गन्धमाल्योपहारादिभिः पर्व्वतान् पूजयेत् ।

तत् पूजनमन्त्रास्तु—

त्वं सर्व्वदेवगणधामनिधिर्विरुद्धमस्मद् गृहेष्वमर पर्व्वत नाशयाशु ।
क्षेमं विधत्स्व कुरु शान्तिमनुत्तमां नःसम्पूजितः परमभक्तिमता मयाहि ॥
त्वमेव भगवानीशो ब्रह्मा विष्णुर्दिवाकरः ।
मूर्त्तामूर्त्तपरं वीजमतः पाहि सनातनः ॥
यस्मात्त्वं लोकपालानां विश्वमूर्त्तेश्च मन्दिरम् ।
रुद्रादित्यवसूनाञ्च ततः शान्तिं प्रयच्छमे १(×) ॥
यस्मादशून्यममरैर्नारीभिश्च शिरस्त व २(†) ।
तस्मान्मामुद्धराशेष दुःखसंसार सागरात् ॥
एवमभ्यर्च्च्य तं मेरुं मन्दरं चाभिपूजयेत् ।

अथमन्दरावाहनम्---३(‡) ।

यस्माच्चड़ामणिर्जम्बुद्वीपे त्वं गन्धमादन ।
गन्धर्व्ववनशोभावानतः कीर्त्तिर्दृढ़ास्तु मे ॥ इति ।

ततोगन्धमादनावाहनम्—

एवमावाह्य सम्पूज्य गुर्व्वादिसहितो गीतवाद्यादिपूर्व्वकं जागरणेनायत्तां निशाम् नीत्वा प्रातः कृत-नित्यक्रियो गुर्व्वादिभिः कृताभिषेकः शुक्लमाल्याम्बरधरो यजमानो-विहितपूर्णाहुति गृहीत-कुसुमाञ्जलि र्मेरुंप्रदक्षिणीकृत्य 'अमरं वदं यतः प्रोक्त'मित्यादि— 'पाहि तस्मान्नमोनम' इत्यन्तमन्त्रेणोपस्थाय पुष्पाञ्जलीन् प्रक्षिप्य नमस्कृत्य प्राङ्मुख-मुपविश्योदङ्मुखेभ्यो गुर्व्वादिभ्यो मेर्व्वादीन् दद्यात् ।

---

१ (×) 'रुद्रादित्यवसूनाञ्च तथाच्छान्तिं प्रयच्छमे' इति [illegible] पाठः ।
२ (†) 'यस्मादशून्यममरैर्नारीभिश्च शिरस्तव' इति [illegible] पाठः ।
३ (‡) [illegible]-मन्दरावाहनमन्त्रः । [illegible] ।

## तद्दान प्रयोगस्तुः—

अद्येत्यादि देश कालादिकीर्त्तनान्तेऽमुक गोत्रायामुकशाखाध्यायिनेऽमुक शर्म्मणे तुभ्यं गुरवे। ईश्वराप्सरो गन्धर्व्वगण-विराजमान-दिव्यविमानकरणक-द्युलोकपृष्ठ-गमनानन्तर सार्द्धमन्वन्तर शतावधि समय देवलोक निवासान्ते भूलोकराजत्वकामो विष्णुप्रीतिकामो वा इमं धान्यमयं मेरुं सौवर्णमन्दारादि वृक्षयुतं सौवर्णब्रह्म-विष्णु शिवार्कप्रतिमायुक्तं मुक्ताहीरकादिविभूषित-रौप्यमय शृङ्गचतुष्कशोभितं रौप्यमयेन्द्रादि-लोकप्र(ा)ल प्रतिमा युतं रौप्यनितम्बदिक्षु स्थितशुक्लपीतकर्व्वुर-रक्तवस्त्रमयाम्बुधरं नाना फलवितानाद्युपकरणसहितं तुभ्यमहं सम्प्रददे न ममेति तद्धस्ते जलं दद्यात्।

सच ॐ स्वस्तीत्युक्त्वा सावित्रेण यजुषा प्रतिगृह्य स्वशाखीयां कामस्तुतिं पठेत्। ततः कृतैतद्दानकर्म्मप्रतिष्ठार्थमिमां१(*) तुभ्यं गुरवे दक्षिणात्वेन सम्प्रददे न ममेति गोरुपां दक्षिणां दद्यात्।

चतुर्विंशति गोपक्षेऽष्टौगाः गुरवे दद्यात्। चतस्र श्चतस्रोगा ऋत्विग्भ्यो-दद्यात्। दशपक्षे षड्गुरवे एकैकामृत्विग्भ्यः। पञ्चगोपक्षे सर्व्वेभ्य एकैकां गां प्रयच्छेत्। एकपक्षे गुरवे एकां कपिलां दद्यात्।

ऋत्विग्भ्यस्तु सुवर्णदक्षिणां दद्यादिति विवेकः। तत एव मेवाद्येत्यादि प्रयोगान्ते इमं पूर्वस्थितं धान्यमयमन्दराख्य-विष्कम्भगिरि-उपरिस्थसौवर्णगणत्रयं सौवर्णभद्र-कदम्बमूल-स्थितं सौवर्ण कामदेव मरुणोदसरः स्थानीय क्षीरपूर्णरौप्यपात्रं रौप्यघटितं चैत्ररथवनं नानाफल-वस्त्र-पुष्पगन्धविलेपनाढ्यं तुभ्यं ऋत्विजे सम्प्रददे न ममेति दद्यात्।

एवमेव दक्षिण पश्चिमोत्तरपर्व्वतानां गोधूमतिलमासमयान् गन्धमादनविपुल-सुवर्णांश्च स्व स्व संज्ञान्यथानिवेशिततत्तत् पदार्थानुत्कीर्त्य दद्यात्।

ततो देवतानां विसर्ज्जनं कृत्वा यथा शक्ति ब्राह्मणान् भोजयित्वा स्वयमक्षार-लवणभोजी भूत्वा परमेश्वराय फलं समर्पयेत् २(†)।

इति श्री मद्विद्वज्जन कृपापात्री भूतेनानन्ताचार्य्येण विरचिते
विधान पारिजाते-धान्यादिमेरुदानदशकः प्रयोगः ॥

—*—

१ (*) यथोक्तलक्षणांगामित्यर्थः। गौः सुवर्णञ्च दक्षिणात्वेन प्रशस्तं कीर्त्तितम्।

२ (†) परमेश्वरार्पणेतु श्रीमद्भगवद्गीतायामुक्तम्—"तत्कुरुष्व मदर्पण"मिति।

तत्रैवाग्रेच एवमुक्तम्—

"युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।
अयुक्तः कामकारेण फले सक्तो निबध्यते" इति ॥

## (५८) अथ लवणाचल दानम्।

—*—

156. 157. **तदुक्तं मात्स्ये पाद्मे च—**

अथातः सम्प्रवक्ष्यामि लवणाचलमुत्तमम्।
यत् प्रदानान्नरोलोके प्राप्नोति शिव संयुतम्॥

तत्रोत्तमकल्पः—

उत्तमः षोड़शद्रोणः कर्त्तव्यो लवणाचलः।
मध्यमः स्यात्तदर्द्धेण चतुर्भिरधमः स्मृतः॥
वित्तहीनो यथाशक्त्या द्रोणादर्द्धन्तु कारयेत।
चतुर्थांशेन विष्कम्भ पर्व्वतान् कारयेत् पृथक्॥
अत्रापि पृथगित्युक्तेः प्रत्येकमेरुद्रव्य-चतुर्थांशेन विष्कम्भ—पर्व्वतकरणमिति गम्यते। एवमग्रेऽपि ज्ञेयम्।
विधानं पूर्व्ववत् कुर्य्याद् ब्रह्मादीनाञ्च सर्व्वदा १(*)।
तद्वद्धेमतरून् सर्व्वान् लोकपालान् निवेशयेत्॥
सरांसि कामदेवादीन् तद्वदेव निवेशयेत्।
तद्वदिति—धान्य—पर्व्वतवदित्यर्थः।
कुर्य्याज्जागरमत्रापि दान मन्त्रानिबोधत।
सौभाग्यरससम्भूतो यतोऽयं लवणोरसः।
तदात्मकत्वेन च मां पाहि पापान्नगोत्तम!
यस्मादन्नरसाः सर्व्वे नोत्कृष्टा लवणं विना २(†)॥
प्रियश्च शिवयोर्नित्यं तस्माच्छान्तिं प्रयच्छ मे।
विष्णुदेह समुद्भूतं यस्मादारोग्यवर्द्धनम्॥
तस्मात् पर्व्वतरूपेण पाहि संसार-सागरात्।
अनेन विधिना यस्तु दद्याल्लवण—पर्व्वतम्॥

---

१ (*) मूलपुस्तके 'ब्राह्मणानाञ्च सर्व्वदा' इत्यपपाठः पूर्व्वग्रन्थविरोधात्। हेमाद्रिणापि तथैव पाठः समुद्धृतः।

२ (†) 'नोत्कटा' इति क्वचित्पाठः।

उमालोके वसेत् कल्पं ततो याति परां गतिम् ।

प्रयोगस्तु पूर्व्ववज्ज्ञेयः ।

सकलपाप क्षय-सुरपूज्यलोकप्राप्ति पूर्व्वक-कल्पावनि-समयपार्व्वतीलोकनिवासोत्तरम् परमगति-प्राप्तिरिति संकल्पवाक्ये विशेषः ।

इति लवणाचल दानविधिः १(०) ॥

—*—

## (५६) अथ गुड़ाचल दानविधानम् ।

—*—

### 158. तदुक्तं पाद्मे —

पुलस्त्य उवाच ।

अथातः सं प्रवक्ष्यामि गुड़ाचल मनुत्तमम् ।
यत् प्रदानात् नरः स्वर्गं प्राप्नोति सुरपूजितम् ॥
उत्तमो दशभिर्भारैर्मध्यमः पञ्चभिर्मतः ।
त्रिभिर्भारैः कनिष्ठः स्यात्तदर्द्धेनाल्पवित्तवान् ॥
भारपरिमाणन्तु पलसहस्रद्वयम्, परिभाषायां प्रागभिहितम् ।
तद्वदामन्त्रनं पूजाहोमवृक्षसुरार्च्चनम् ।
विष्कम्भ पर्व्वतां स्तद्वत्सरांसि वनदेवताः ।
होमं जागरणं तद्वद् लोकपालाधिवासनम् ॥
यथा देवेषु विश्वात्मा प्रवरोऽयं जनार्द्दनः ।
सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥
प्रणवः सर्व्वमन्त्राणां नारीणां पार्व्वती यथा ।
तथा रसानां प्रवरः सदैवेक्षुरसोत्तमः ॥
मम तस्मात् परां लक्ष्मीं ददस्व गुड़पर्व्वत !
यस्मात् सौभाग्यदायिन्या भ्राता त्वं गुड़पर्व्वत ! ॥
निवासश्चापि पार्व्वत्या स्तस्मान्मां पाहि सर्व्वदा ।
अनेन विधिना यस्तु दद्याद् गुड़मयं गिरिम् ॥

---

१(०) लवणाचल विधिरिति संचितो त्रिविंशत्यस्तु प्रयोगपद्धतीचाहि ।

पूज्यमानः सगन्धर्व्वै गौरीलोके महीयते।
पुनः कल्पशतान्तेतु सप्तद्वीपाधिपो भवेत्।
आयुरारोग्यसम्पन्नः शत्रुभिश्चापराजितः॥

अथ सकल पापक्षयोत्तर-गन्धर्व्वपूज्यमानत्व-पूर्व्वक-कल्पशतावधिसमय-गौरीलोकपूज्यत्वा-नन्तसकल-पराजितत्वायुरारोग्यसमेत-सप्तद्वीपाधिपत्यकाम इति संकल्पवाक्ये विशेषः।

अन्यत् सर्व्वं समानम् १(*)।

इति गुड़ाचल दानम्।

—*—

## (६०) अथ सुवर्णाचलदानम्।

—*—

### 159. पाद्मे।

पुलस्त्य उवाच—

अथ पापहरं वक्ष्ये सुवर्णाचलमुत्तमम्।
यस्य प्रदानात् सकलदानस्य फलमाप्यते २(+)॥
उत्तमः पलसाहस्रो मध्यमः पञ्चभिः शतैः।
तदर्द्धेनाधमस्तद्वद्दृत्विग्भ्यः प्रतिपादयेत्॥
सर्व्वचैतत् प्रकुर्व्वीत स्वल्पवित्तोऽपि शक्तितः ३(†)।
दद्यादेकपलादूर्द्ध्वं यथाशक्त्या विमत्सरः॥
धान्यपर्व्वतवत् सर्व्वं विदध्याद्राजसत्तम ४(‡)!
विष्कम्भशैला स्तद्वच्च दानमन्त्रमथो शृणु ५(०)।
नमस्ते ब्रह्मगर्भाय ब्रह्मवीजाय वै नमः॥

---

१ (*) ये ये विषया लवणाचलादौ प्रोक्तास्तेषां विषयाणां गुड़ाचले तौल्यमपि। तदहा-मन्त्रमित्यादिना, उदीरयेदित्यन्तं सर्व्वविधानमूलवाक्यं स्पष्टं वक्ति।

२ (+) "यस्य प्रदानाद्भवनं विरिञ्चेर्याति मानव" इति हेमाद्रिः।

३ (†) 'तदर्द्धेनाधमस्तद्वत् स्वल्पवित्तोऽपि शक्तित' इति चतुर्वर्गचिन्तामणिः।

४ (‡) अत्र सुवर्णाचले सर्व्वं कार्य्यं धान्याचलवदनुष्ठेयं केवलं सङ्कल्पवाक्ये, उत्सर्गवाक्ये च कश्चिद्विशेषः।

५ (०) 'नमस्ते' इत्यादि 'नगोत्तम' इत्यन्त-दानमन्त्रोक्तिश्च यः।
—'विष्कम्भशैलास्तद्वच्च ऋत्विग्भ्यः प्रतिपादये'दिति हेमाद्रिः।
'कनकैरपर्व्वं प्रथमं सुवर्णम्' इति।

यस्मादनन्तफलद स्तस्मात् पाहि शिलोच्चय !

*यस्मादग्नेरपत्यं त्वं पवित्रञ्च जगत्यसि १(*) ।*

हैमपर्व्वतरूपेण तस्मात् पाहि नगोत्तम ! ।

अनेन विधिना यस्तु दद्यात् कनकपर्व्वतम् ।

स याति परमं स्थानं ब्राह्ममानन्दकारकम् ॥

तत्र कल्पशतं तिष्ठेत् ततो याति पराङ्गतिम् ।

इत्यत्र गुर्व्वादिभ्योमेर्व्वादि दानमल्पद्रव्य-विषयम् । परिमाणबहुत्वेतु चतुर्थांशादि गुरवे दत्वा तदनुज्ञया अन्येभ्योऽपि विभज्य दद्यादिति हेमाद्रिः ।

अत्र सकलपापक्षयोत्तरानन्दकारक—ब्रह्मलोकाधिकरणक-कल्पशतावधि—काला-वस्थानोत्तरं परमगतिप्राप्तिकाम इति संकल्पवाक्ये विशेषः ।

अन्यत् पूर्व्ववत् ।

इति सुवर्णाचलदानम् ॥

—*—

## (६१) अथ तिलाचलदानविधानम् ।

—*—

160. **पाद्मे, पुलस्त्य उवाच—**

अथातः सम्प्रवक्ष्यामि तिलशैलं विधानतः ।

यत्प्रदानान्नरो याति विष्णुलोकमनुत्तमम् ॥

उत्तमोदशभिर्द्रोणैः पञ्चभिर्मध्यमो मतः ।

त्रिभिः कनिष्ठोराजेन्द्र२(+) तिलशैलः प्रकीर्त्तितः ॥

पूर्व्ववच्चापरं सर्व्वं वृक्ष विष्कम्भकादिकम् ।

दानमन्त्रान् प्रवक्ष्यामि यथावद्राजपुङ्गव ! ३(†)

यस्मान्मधुवधे विष्णोर्देहस्वेद समुद्भवाः ।

तिलाः कुशाश्च माषाश्च तस्माच्छान्ता भवन्त्विति ४(‡) ॥

---

१ (*) 'यस्मादग्नेरपत्यं त्वं तस्मात्पुत्रो जगत्पतेः' इति हेमाद्रिधृतपाठः ।

२ (+) 'विप्रेन्द्र' इति चतुर्वर्गचिन्तामणिधृतपाठः ।

३ (†) 'सत्तम' इति हेमाद्रिधृतपाठः ।

४ (‡) 'तस्माच्छान्ता भवन्त्विह' इति हेमाद्रिः ।

हव्यकव्येषु यस्माच्च तिलैरेवाभिलक्षणम् ।
भवादुद्धर शैलेन्द्र ! तिलाचल नमोऽस्तुते १(*) ॥
इत्यामन्त्र्य च योदद्यात्तिलाचल मनुत्तमम् ।
स वैष्णवं पदं याति पुनरावृत्ति—दुर्लभम् ॥
दीर्घायुष्यमवाप्नोति पुत्र-पौत्रश्च मानवः २(०) ।
पितृभिर्देवगन्धर्वैं पूज्यमानो दिवं व्रजेत् ॥

अत्र दानमन्त्रान् प्रवक्ष्यामीत्युपक्रम्य इत्यामन्त्र्य च 'योदद्या'दित्यादिना तेषामामन्त्रणार्थं त्वभिधानाल्लवणाचलादिषु सर्व्वत्रामन्त्रणता ज्ञेया ।

इहतु सकलपापक्षय—दीर्घायुष्य—पुत्रपौत्रसमन्वितोत्तर— पितृदेवगन्धर्व्वपूज्यमानत्वपूर्व्वक विष्णुलोकप्राप्तिकाम इति संकल्पवाक्ये विशेषः । अन्यत् समानम् ।

इति तिलाचलदानम् ॥

—*—

## (६२) अथ कार्पासाचलदानविधानम् ।

—*—

### 161. पाद्मे—

कार्पासपर्व्वतस्तद्व द्विंशद्भारैरिहोत्तमः ।
दशभिर्मध्यमः प्रोक्तः कनिष्ठः पञ्चभिः स्मृतः ॥
भारेणाल्पधनो दद्याद्वित्तशाठ्य-विवर्ज्जितः ।
धान्यपर्व्वतवत् सर्व्वमासाद्य मनुजोत्तम ! ३(‡) ॥
प्रभातायान्तु शर्व्वर्य्यां दद्यादिदमुदीरयेत् ।
त्वमेवावरणं यस्माल्लोकानामिह सर्व्वदा ।
कार्पासाचल ! तस्मात्वमघौघ ध्वंसनो भव ।
एवं कार्पास शैलेन्द्रं योदद्यात् पर्व्वसन्निधौ ४(†) ॥
रुद्रलोके वसेत् कल्पं ततोराजा भवेदिह ।

---

१ (*) 'यस्मादित्यादि—नमोऽस्तुते' इत्यन्तं मन्त्राः, मन्त्रविधानं पाद्मस्तुतिश्च
२ (०) 'दीर्घायुष्य—इहचामुत्र मानवः' इति हेमाद्रि-समुद्धृतपाठः ।
३ (‡) 'राजसत्तम' इति हेमाद्रिः ।
४ (†) 'एवंकार्पास...पर्व्वतसन्निधौ' इत्यंशाधुपाठौ मूलेऽस्ति ।

अथ सर्व्वपाप—क्षयपूर्व्वक कल्पावधिसमय रुद्रलोकवासान्ते नरलोकराजत्व-कामइति संकल्पवाक्ये विशेषः १(*)। अन्यत पूर्व्ववज्ज्ञेयम्।

इति कार्पासाचलदानम्॥

—*

## (६३) अथ घृताचलदान विधानम्।

—,—

162. पद्म पुराणे—

अथातः सम्प्रवक्ष्यामि घृतशैल मनुत्तमम्।
तेजोऽमृत मयं दिव्यं महापातक-नाशनम् २(†)॥
विंशत्या घृतकुम्भानामुत्तमः स्याद् घृताचलः।
मध्यमस्तु तदर्द्धेन तदर्धेनाधमः स्मृतः ३(‡)॥
अमल्प—वित्तः प्रकुर्वीत द्वाभ्यामिह विधानतः।
कुम्भः पल सहस्रमितः परिमाण विशेषतः॥
विस्कम्भ पर्व्वतां स्तद्व चतुर्भागेण कारयेत्।
शालितण्डुल-पात्राणि कुम्भोपरि निवेशयेत्॥
कारयेत् संहतान् सर्व्वान् यथा शोभं विधानतः।
वेष्टयेच्छुक्लवासोभि रिक्षुदण्ड फलादिकैः।
धान्य पर्व्वत वच्छेष-विधानमिह पठ्यते।
अधिवासश्च कुर्व्वीत तद्वद्धोमं सुरार्चनम्॥

अत्र घृतस्य द्रवद्रव्यत्वात् साक्षादासादनीयायोग्यत्वेऽपि कुम्भोपरीति श्रवणाद् घृताधार पात्रान्तरानुक्तेः, कुम्भस्थितं घृत मासाद्य तदुपरि तण्डुलपूर्ण-पात्रान्तरासाधन-मिति गम्यते।

---

१ (*) अथेत्यादिना सङ्कल्पवाक्ये योविशेषः, सोऽभिहितः, तत्समीचाचरणमित्यारभ्य [illegible] इत्यन्तं मम.।

२ (†) 'आयुर्वै घृत' मिति। 'घृतं मखोपादान' मितिच। 'घृतेनोपचितं बलम्'। 'तथा धी स्मृति मेधाग्निकान्त्विकां म्रक्षते घृतम्'। 'घृतं सर्वबलवीर्यसातुविवीर्य[illegible]' इतिच वैद्यके। 'गव्यघृतं घृतमुत्तमम्' इतिस्मृतौ च।

३ (‡) "दशभिर्मध्यमः प्रोक्तः पञ्चभिरधमः स्मृतः" इति हेमाद्रिः।

प्रभातायान्तु शर्व्वर्य्यां गुरवे विनिवेदयेत् ।
घृताचलन्तदन्यांश्च ऋत्विग्भ्यः शान्तमानसः १(*) ॥
संयोगाद्घृतमुत्पन्नं यस्मादमृत तेजसः ।
तस्माद्घृतार्च्चिर्विश्वात्मा प्रीयतामत्र शङ्करः ॥
यस्तु तेजोमयं ब्रह्म घृते तच्च व्यवस्थितम् २(ऽ) ।
घृतपर्व्वतरूपेण तस्मान्नः पाहि भूधरः ॥
अनेन विधिना दद्याद् घृताचल मनुत्तमम् ।
महापातकयुक्तोऽपि लोकमायाति शाङ्करम् ३(‡) ॥
हंस सारसयुक्तेन मुक्तासज्जाल मालिना ४(ऽऽ) ।
विमानेनार्कवर्णेन सिद्धविद्याधरार्च्चितः ॥
विचरेत् पितृभिः सार्द्धं यावदाभूत संप्लवम् ।

अत्राकल्प फलपातकनाशपूर्व्वक-हंससारस-युक्त-किङ्किणीकणद्विमान-करणक-शङ्करलोकप्राप्ति पूर्व्वक-सिद्धविद्याधरार्च्चितत्व-पूर्व्वक भूतसंप्लवावधि-पितृलोक-सहाचरण-शङ्करलोककाम ५(०) इति सङ्कल्पवाक्ये विशेषः । अन्यतपूर्व्ववत् ।

इति घृत-पर्व्वतदानम् ॥

—*—

## (६४) अथ रत्नपर्व्वतदानविधानम् ।

—*—

163. पुलस्त्य उवाच—

अथातः संप्रवक्ष्यामि रत्नाचल मनुत्तमम् ।
मुक्ताफल सहस्रेण पर्व्वतः स्यादिहोत्तमः ॥
मध्यमः पञ्चशतिकस्त्रिशतेनाधमः स्मृतः ।
चतर्थांशेन विष्कम्भ-पर्व्वताः स्युः समन्ततः ॥

---

१ (*) 'विष्कम्भपर्व्वतां स्तद्वदृत्विग्भ्यः शान्तमानसः' इति हेमाद्रीय: पाठः ।
२ (ऽ) 'घृते तत्त्वं व्यवस्थितं' पुस्तकान्तरधृत: पाठ: ।
३ (‡) 'लोकमाप्नोति शङ्करम्' ग्रन्थान्तरे धृत: पाठ: ।
४ (ऽऽ) 'किङ्किणीजालमालिना' इति हेमाद्रि-लिखित: पाठः ।
५ (०) 'पुन: शङ्करलोककाम:' इतिविवक्षि मूलपुस्तकेऽपि ।

पूर्व्वेण वज्रगोमेदै र्दक्षिणे इन्द्रनीलकैः ।
अत्र वज्रगोमेदैर्युतो मन्दरः कार्य्य इति शेषः ॥
पद्मरागैर्युतः कार्य्यो विद्वद्भिर्गन्धमादनः १(*) ॥
वैदुर्य्यविद्रुमैः पश्चात् सम्मिश्रो विपुलाचलः ।
पद्मरागैः स सौवर्णैरुत्तरेणतु विन्यसेत् २(†) ॥
अत्र सुपार्श्वमिति शेषः ।
धान्यपर्व्वतवत् सर्व्वमत्रापि परिकल्पयेत् ।
तद्वदावाहनं कुर्य्याद् वृक्षान् देवांश्च काञ्चनान् ॥
पूजयेत् पुष्पपानीयैः प्रभातेच विसर्ज्जनम् ।
पूर्व्ववद्-गुरुमृत्विगभ्य्य इमान्मन्त्रानुदीरयेत् ॥
प्रदानायेति शेषः ।
यथा देवगणाः सर्व्वे सर्व्वरत्नेष्वपि स्थिताः ।
त्वञ्चरत्नमयोनित्य मतः पाहि महाचलः ॥
यस्माद्रत्नप्रदानेन तुष्टिं प्रकुरुते हरिः ३(‡) ।
महारत्न प्रदानेन तस्मान्नः पाहि सर्व्वतः ॥
अनेन विधिना यस्तु दद्याद्रत्नमयं गिरिम् ।
स याति वैष्णवं लोक ममरेश्वरपूजितः ॥
यावत्कल्प शतंसार्द्धं वसेदिह नराधिपः ।
रूपारोग्यगुणोपेतः सप्तद्वीपाधिपो भवेत् ॥
ब्रह्महत्यादिकं चेत्स्या दिहाप्यमुत्रवा कृतम् ४(०) ।
तत्सर्व्वं नाशमायाति गिरिर्वज्रहतो यथा ॥

अत्र ब्रह्महत्यादि-सकलपापक्षयोत्तर ममरेश्वरत्वलाभ-पूर्व्वकसार्द्ध-कल्पशतावधिकाल-विष्णुलोकनिवासोत्तर-रूपयोग्यगुणोपेत-सप्तद्वीपाधिपत्यकाम इति दानवाक्ये विशेषः ।

इति रत्नाचलदानविधानम् ॥

—*—

१ (*) पद्मोत्पलपद्मरागादीनां इदं श्रीमद्भोजराजकृतयुक्तिकल्पतरावपि ।

२ (†) वज्रगोमेदैः वज्रसंज्ञैः 'समंस्त्वादवृत्ततादितिन्यायात्' । एवमुत्तरत्रापि विज्ञेयम् । सौपर्णैरिति क्वचित् पाठः । सौपर्णैर्गरुडात्मज इति हेमाद्रिः ।

३ (‡) तुष्टिं प्रकुरुते हरिः' इति भिन्नः पाठः ।

४ (०) 'ब्रह्महत्या दिकं किञ्चिद् यदिहामुत्रवा कृतम्' इति हेमाद्रिधृतः पाठः ।

## (६५) अथ रौप्याचलदानविधानम् ।

—*—

### 164. पाद्मे, पुलस्त्य उवाच—

अथातः सम्प्रवक्ष्यामि रौप्याचल मनुत्तमम् ।
यत्प्रदानान्नरोयाति सोमलोकमनुत्तमम् १(×) ॥
दशभिःपलसाहस्रैरुत्तमो राजताचलः ।
पञ्चभिर्मध्यमः प्रोक्त स्तदर्द्धेनाधमः स्मृतः ॥
अशक्तो विंशतेरूर्द्ध्वं कारयेच्छक्तितः सदा ।
विस्कम्भ-पर्व्वतां स्तद्वत्तुरीयांशेन कल्पयेत् ॥
पूर्व्ववद्राजतान् कुर्य्याद् मन्दरादीन् विधानतः ।
कलधौतमयां स्तत्र लोकेशानर्च्चयेद्बुधः ॥

अत्र कलधौतं काञ्चनम् ।

ब्रह्मविष्ण्वर्कवान् कार्य्यो नितम्बोऽत्र हिरण्मयः ।
शेषञ्च पूर्व्ववत् कुर्य्याद्धोम जागरणादिकम् ॥
दद्यात्तद्वत् प्रभाते तु गुरवे रौप्यपर्व्वतम् ।
विस्कम्भ शैलानृत्विग्भ्यः सम्पूज्य स्रग्विभूषणैः २(‡) ॥
इमं मन्त्रं पठन् दद्याद्दर्भपाणि र्विमत्सरः ।
पितृणां वल्लभं यस्मा द्धर्म्मस्य शङ्करस्यच ३(०) ॥
रजतं पाहि तस्मान्नः शोक-संसारसागरात् ।
इत्थं निवेश्य योदद्या द्राजताचल मुत्तमम् ॥
गवायुतसहस्रस्य फलमाप्नोति मानवः ।
सोमलोके सगन्धर्व्वैः किन्नराप्सरसां गणैः ॥
पूज्यमानो वसेद्विद्वान् यावदाभूतसंप्लवम् ।

अत्र गवायुत सहस्रदानफल प्राप्तिपूर्व्वक-गन्धर्व्व किन्नराप्सरोगणैः पूज्य... यावदाभूत संप्लवन्तावत् सोमलोक वसतिकाम इति सङ्कल्पवाक्ये विशेषः ।

अन्यत् सर्व्वं पूर्व्ववत् ।

इति रौप्याचल दानम् ॥

---

१ (×) 'सोमलोकमिजोपम्' इति चिन्तामणौ पाठः ।

२ (‡) 'विष्कम्भ...पूज्यमग्विभूषणैः' इति हेमाद्रौ पाठः

३ (०) 'पितृवानिति मन्त्रः । [illegible] ।

# (६६) अथ शर्कराचलदानम् ।

—*—

165. **पुलस्त्य उवाच—**

अथातः सम्प्रवक्ष्यामि शर्कराचलमुत्तमम् ।
यस्मात् प्रदानाद्विष्णर्क्करुद्रा स्तुष्यन्ति सर्व्वदा ॥
अष्टाभिः शर्कराभारै रुत्तमःस्यान्महाचलः ।
चतुर्भिर्म्मध्यमः प्रोक्तो भाराभ्यामधमः(रः) स्मृतः ॥
भारेणचार्द्ध भारेण कुर्य्याद्यः स्वल्पवित्तवान् ।
विस्कम्भ पर्व्वतान् कुर्य्यात्तुरीयांशेन मानवः ॥
धान्यपर्व्वतवत् सर्व्वमासाद्यामर-संयुतम् ।
मेरोरुपरि तद्वच्च स्थाप्यं हेम तरुत्रयम् १(†) ॥
मन्दारः पारिजातश्च तृतीयः कल्पपादपः ।
एतद्वृक्षत्रयं मूर्द्धि सर्व्वेष्वपि निवेशयेत् ॥
हरिचन्दन सन्तानौ पूर्व्वपश्चिम भागयोः ।
निवेश्यौ सर्व्वशैलेषु विषेशा च्छर्कराचले ॥
मन्दारे कामदेवश्च प्रत्यग्वक्त्रः सदा भवेत् ।
गन्धमादनशृङ्गे च धनदः स्यादुदङ्मुखः ॥
प्राङ्मुखो वेदमूर्त्तिश्च हंसःस्याद्विपुलाचले ।
हैमी सुपार्श्वे सुरभी दक्षिणाभिमुखी भवेत् ॥
धान्यपर्व्वतवत् सर्व्व मावाहनमु(सु)खादिकम् ।
कृत्वाथ गुरवे दद्यान्मध्यमं पर्व्वतोत्तमम् ।
ऋत्विग्भ्यश्चतुरः शैलानिमान् मन्त्रानुदीरयेत् ॥
सौभाग्यामृत सारोऽयं परमः शर्कराचलः ।
तन्ममानन्दकारी त्वं भव शैलेन्द्र ! सर्व्वदा २(‡) ॥
अमृतं पिवतां येतु निपेतुर्भुवि सीकराः ।
देवानान्तत समं सोमं पाहि नः शर्कराचलः ३(०) ॥

---

१ (†) चतुर्भ्योऽपर्वतेभ्योऽपि विशेषः तत्र 'मेरोरुपरि'—इत्यादिर्गीतः ।
२ (‡) 'तन्ममानन्दकारी' इति हेमाद्रौ पाठः ।
३ (०) 'तत्सम सोऽयम्' इति पाठान्तरीयः पाठः ।

मनोभव धनुर्मध्यादुद्भूतः शर्कराचल १(×)।
तन्मयोऽसि महाशैल ! पाहि संसारसागरात ॥
योदद्याच्छर्कराशैल मनेन विधिना नरः।
सर्व्वपाप विनिर्म्मुक्तः प्रयाति शिवमन्दिरम् २(ऽ) ॥
चन्द्रादित्य प्रतीकाश मधिरुह्यानुजीविभिः।
सहैव यानं तिष्ठेत्तु सतु विष्णु प्रचोदितः ३(ऽऽ) ॥
ततः कल्पशतान्तेतु सप्तद्वीपाधिपो भवेत्।
आयुरारोग्य-सम्पन्नः यावज्जन्मायुत त्रयम् ॥
भोजनं शक्तितःकुर्य्यात् सर्व्वशैले विमत्सरः।
सर्व्वत्राक्षारलवणं अश्नीयात्तदनुज्ञया ॥

भोजनं—ब्राह्मणानामिति शेषः।

पर्व्वतोपस्करान् सर्व्वान् प्रापये द्ब्राह्मणालयम्।
पश्ये द्विमानप्यधनोऽपि भक्त्या, स्पृशेन्मधृष्यैरिहदीयमानम्।
शृणोति भक्त्याथ मतिंददाति, निष्कल्मषः सोऽपि दिवं प्रयाति ॥
दुःस्वप्नप्रशममुपैति पठ्यमानैः, शैलेन्द्रैर्भवभयभेदनैर्मनुष्यः।
यः कुर्य्यातकिमु मुनिपुङ्गवेह सम्यक् ४(::)।
सत्वात्मा ५(*) सकल गिरीन्द्र-सम्प्रदानम् ॥

सत्वात्मा—प्रसन्नमनाः। अत्र सकलकलुष-क्षयानन्तरं विष्णुर्क-रुद्र-तोषपूर्व्वक-मनुजीवि-सहित-चन्द्रादित्य-प्रतीकाश विमानाधिरोहणपूर्व्वकं शिवमन्दिरगमनोत्तर कल्पशतावधि-समय विष्णुलोके वासानन्तरं सप्तद्वीपाधिपस्येतर-जन्मायुतत्रया-वच्छिन्नायुरारोग्यकाम इति दानसङ्कल्पवाक्ये विशेषः।

अन्यत् सर्व्वं धान्यमेरुवत्। इति शर्कराचलदानम् ॥

इति विधानपारिजाते निबन्धे
धान्यादि दश शैलदानानि ॥

—*—

१ (×) 'मम भवतु मध्यादुद्भूता शर्करा यतः' इति चतुर्वर्गचिन्तामणौ पाठः।

२ (ऽ) इति शर्कराचलो पञ्चश्रुति-परिकीर्त्तनम्।

३ (ऽऽ) 'सहैव...ततोविष्णुपुरं व्रजेत्, इति हेमाद्रौ च पाठः।

४ (::) '[illegible]' इति पाठान्तरम्।

५ (*) '[illegible]' इति पाद्मान्तरे भिन्नः पाठः।

## (७) अथ शिखर दान विधानम् १(*) ।

—*—

166. **विष्णु धर्म्मोत्तरे, राम उवाच—**

शिखराणां ममाचक्ष्व दानं त्रिपुर नाशनम् ।
यानि दत्त्वा तु दौर्भाग्यं दौर्गत्यं न प्रजायते ॥

**शङ्कर उवाच—**

शृणु राम प्रवक्ष्यामि शिखराणां यथाक्रमम् ।
दानं देयं यथा येन तत् शृणुस्व सनातनम् ॥
माघ शुक्ल तृतीयायां मार्गशीर्षस्य वा पुनः ।
तृतीया वाथ वैशाखे शुक्ला वा रोहिणी युता ॥
प्रौष्ठपद्यां तृतीयायां विशेषेण तु भार्गव ।
गुडेक्षु-वस्त्र लवण-धान्यकाऽजाजि शर्कराः ॥
खर्ज्जूर तण्डुल द्राक्षा क्षौद्रै मलयजेन वा ।
फलैर्मनोहरैः रम्यैः शिखराणि प्रदापयेत् ॥

शर्करा इति तृतीयार्थे प्रथमा ।

एषा मन्यतमं दद्याद् यथाश्रद्धं विधानतः ।
आत्म-प्रमाणं कुर्व्वीत प्रादेशाभ्यधिकं शुभम् ॥
भूवि गोमय लिप्ताया मिक्षुपत्राणि संस्तरेत् ।
ततः कुर्व्वीत शिखरं गौरीस्थान मनुत्तमम् ॥
द्विहस्तं मूलकर्त्तव्यं हस्तमात्रं शिरस्तथा ।
भित्ति रिक्षुदलैः कार्य्या वेष्ट्ये द्रक्त वाससा ॥
दानद्रव्येण तन्मध्यं पूरयेद् भृगुनन्दन ! ।
इक्षु पत्रकटे गौरीं तस्योपरि निवेदयेत् ॥
चतुर्भुजां हेममयीं पूजयेत् कुङ्कुमेन तु ।
तत्राच गौरी लक्षणं, देवी पुराणे—
खण्डेन्दु वस्तु वर्णाभां शर्व्वरी शशि बिम्बिताम् ।

---

१ (*) [illegible]दानानि प्रोक्तानि, सम्प्रति [illegible]दानं [illegible]।
'कूटोऽस्त्री शिखरं शृङ्गम्' इति कोषः ।

वृत्त १(*) पद्मासमासीनां (तां) साक्षसूत्र कमण्डलुम् २(†)।
वरदां धृतरूपाढ्यां सर्व्वमाल्य फल प्रियाम् ३(‡) ॥
वेष्टयेत् सूक्ष्मवस्त्रेण देवीं शिखरमेवच।
अष्टाङ्गं पूजयेद् गौरीं मन्त्रै रेतैश्च शक्तितः ४(+) ॥
नमो भवान्यै पादौ तु कामिन्यै जानुनी ततः।
वामदेव्यै तथाचोरू नाभिश्चैव जगत् प्रिये ५(×)।
आनन्दायै तु हृदयं नन्दायै पूजयेत् स्तनौ।
सुभद्रायै मुखं पूज्यं ललितायै नमः शिरः ६(॥) ॥
एवं सम्पूज्य तां देवीं शिखरा नभिमन्त्रयेत्।
यस्मान्निवासः पार्व्वत्याः शिखर! त्वं शरैर्वृतः ॥
तस्मान्मां पाहि भगवन् त्वं गौरी शिखरः सदा ७(*)।
एव मामन्त्र्य शिखरं तृतीयायां यत-व्रतः।
ततः स्नात्वा प्रभातेतु दद्यान्मन्त्रेण भक्तितः ॥
यस्मात्त्वं सर्व्वभूताना मुपरिष्टा दवस्थितः।
तस्माच्छिवः प्रीयतां मे त्व (त)द्दानाद् गिरिजाधिपः ॥
अर्द्धभागं चतुर्थं वा पञ्चमं वा ततो गुरोः।
दत्त्वा शेषन्तु बन्धूनां शिष्टानां स्वजनस्य च ॥
अंशजीवि-स्वभृत्यानां दुर्गतानाञ्च कामतः।
एवं दत्त्वातु शिखरं गौर्य्यां भुञ्जीत वाग्यतः ॥
स मुक्तकेशः सम्प्राप्य क्षीरं घृत मथापि वा ८(†)।
विधिनानेन यो दद्याद् गौर्य्याः शिखर मुत्तमम्।
स वसेद् भवने देव्याः कल्पकोटि शतत्रयम् ॥

---

(*) 'रक्त' इति पाठान्तरम्।

(†) 'सीता' मिति चतुर्थः पाठः।

(‡) इत्यन्तं गौरीध्यानं ज्ञेयमिति।

(+) 'षडङ्गे' इति पाठान्तरम्।

(×) 'जगत् प्रिये' इत्यन्य: पाठः।

(॥) नमो भवान्यै इत्यारभ्य-'सुभद्रायै' इत्यन्तं पूजामन्त्रो ज्ञेय.।
'एवं पूज्य महादेवीम्' इति क्वचित्पाठः।

(*) भगवान् त्वं इत्यत्रविधा वक्रोक्तिः।

(†) 'क्षीरं घृत मथापिवा' इत्यन्तं [illegible] ततः [illegible] [illegible]। [illegible]

पुण्यक्षया दिह्यागत्य जायते पृथिवीपतिः ।
अनेन विधिना देव्याः कल्पकोटि शतत्रयम् ।
अनेन विधिना देयं विधिहीनं नकारयेत् ॥
विधिहीनं कृतं सर्व्वं न दातुः फलदं भवेदिति १(*) ।
इति विष्णुधर्म्मोत्तरोक्त शिखरदानविधिः ॥

—*—

## (६८) अथ शिखरदान प्रयोगः ।

—*—

शिखरदानं चिकीर्षुरात्र्योक्त २(†) । शुक्लतृतीयाद्युक्तकाले कृतनित्यक्रिय उपलिप्ते शुचौ देशे समासीनो गणपतिं सम्पूज्य पुण्याहं वाचयित्वा देशकालादि सङ्कीर्त्त्य तदन्ते सौभाग्य दौर्गत्यरहित कल्पकोटि शतत्रयावच्छिन्न समय गौरीभवन निवासानन्तर-पृथिवी पतित्व कामश्रोक्त गुड़ादि शिखरदान महं करिष्ये इति सङ्कल्प्य, गुरुं वृत्वा वस्त्रालङ्कार गन्धमाल्यादिभिः समभ्यर्च्च्य, गोमयोपलिप्तायां भूमौ इक्षुपत्राणि संस्तीर्य्य, मूलदेशे द्विहस्त विस्तार मुपरि देशे हस्तमात्रविस्तारं चतुरस्र-कुसुलिकाकारां स्वशरीरोर्द्ध-प्रमाणतः प्रादेशाधिक परिमाणामिक्षुदण्डाकृतिं भित्तिं निर्म्माय तां भित्तिं अभ्यन्तरं रक्तवस्त्रेण वेष्टयित्वा गौरीमावाहना द्युपचारैः प्रतिष्ठापूर्व्वक मभ्यर्च्च्य कुङ्कुमगन्धेनानुलिप्याङ्गपूजां कुर्य्यात् ।

तद् यथा—

ॐ भवान्यै नमः पादौ पूजयामि । कामिन्यै नमः जानुनी ३(‡) । वामदेव्यै नमः ऊरू । जगच्छ्रियै नमः नाभिम् । आनन्दायै नमः हृदयम् । नन्दायै नमः स्तनौ । सुभद्रायै नमः मुखम् । ललितायै नमः शिरः पूजयेत् । ततः कर्त्ता पुष्पाञ्जलिना शिखरं त्रिः प्रदक्षिणीकृत्य आवृत्यचानु मन्त्रयेत् ।

---

१ (*) एवमेव हेमाद्र्युक्तं शिखर दानम् ।

२ (†) पूर्व्व पृष्ठोक्त 'माघशुक्ल तृतीयायां' इत्यादि प्रमाणवाक्य-विहितकाले ।

३ (‡) "नमो भवान्यै पादौतु कामिन्यै जानुनी ततः ।
वामदेव्यै तथाचोरू नाभिश्चैव जगत् श्रियै' ॥
आनन्दायैतु हृदयं नन्दायै पूजयेत् स्तनौ ।
सुभद्रायै मुखं पूज्यं ललितायै नमः शिरः" ॥

तत्र मन्त्रः—यस्मात्त्वमवासः पार्व्वत्याः शिखर त्व सुरव्रत: ।
तस्मान्मां पाहि भगवन् त्वं गौरी शिखरः सदा ।

इति पुष्पाञ्जलीन् प्रक्षिप्य नमस्कृत्य च ततो देव्यग्रे रात्रौ जागरणं कृत्वा प्रभाते कृतनित्य-क्रियः शिखर पश्चिमभागे प्राङ्मुख उपविश्याद्येत्यादि देश कालादि सङ्कीर्त्तनान्ते दौर्भाग्य दौर्गत्याभाव पूर्व्वक कल्पकोटि शतत्रयावच्छिन्न समयगौरीभवन निवासानन्तरं पृथिवी पतित्व कामोऽहममुक गोत्र प्रवरेभ्योऽमुकशाखाध्यायिभ्योगुर्व्वादिभ्यो बन्धुशिष्ट अनानु-जीविभृत्यादिभ्य इमं यथोपस्कृतं शिखरं सम्प्रददे न ममेति गुर्व्वादिहस्ते जलं दद्यात् ।

ते स्वस्तीत्युक्त्वा सावित्रेण यजुषा प्रतिगृह्य स्वां स्वां कामस्तुतिं पठेरन् ।

ततः सुवर्णदक्षिणां दद्यात् ।

अद्येत्यादि कृतैतच्छिखर दानकर्म्मप्रतिष्ठार्थं इदं सुवर्णं दक्षिणात्वेन सम्प्रददे न ममेति दद्यात् । अत्र गुरवे शिखरार्द्धं तदर्द्धं वा दत्वा न्येभ्यो विभज्य देयम् । ततः क्षीरं घृतं वा वाग्यतो मुक्तकेशः प्राश्नीयात् । एवं रीत्या इक्ष्वादि शिखर प्रयोगः १(*) ।

इति श्रीविधानपारिजाते गुडादि शिखरदानानि ॥

—*—

## (६६) अथान्यानि दशमहादानान्युच्यन्ते ।

—*—

### 169. कूर्म्मे पुराणे—

कनकाश्च तिला गावो दासीरथ-महीगृहम् २(०) ।
कन्या च कपिला धेनु र्महादानानि वै दश ॥

तत्रादौ सुवर्णदानम् ।

### 170. सुवर्णोत्पत्तिरुक्ता स्कान्दे,—

महेश्वरस्य यद्रेतः पवित्रं शुक्र मुत्तमम् ।
समाकृष्य पुरा गौर्य्यां दुराधर्षं यतोऽन्यतः ॥

---

१ (*) याहग्रीत्या शिखरदान विधानमुक्तं तादृश्या प्रणाल्या इक्ष्वादि शिखरदान प्रयोगो विज्ञेय इति ।

२ (०) 'पवित्रं वै हिरण्यं' इति श्रुतिः । 'कनकाश्व' इति क्वचित् पाठः ।

" वह्नि पुराणे तुलापुरुषदानमाहात्म्याध्याये च—

"तस्मात् सुवर्णं ददता सुवर्णश्च तदात्मकम् ।
इह पूर्व्वापरां देव मोचायेदं इतस्परिः ॥
सुवर्णं ये प्रयच्छन्ति नरकात्तारयन्ति ते" ।

"सुवर्णदानं गोदानं भूमिदानं तथैव च ।
नाशयन्त्याशु पापानि महापातकजान्यपि" इति प्रायश्चित्ततत्त्वे ।

"कनकाश्व तिलानागदासीरथमहीगृहाः" इति हेमाद्रिधृतः पाठः ।
कीर्त्ते प्रथमोक्तत्वादादौ सुवर्णदानमुच्यते ।

देवतानां हितार्थाय तद्वह्नौ प्राक्षिपत् पुरा ।
मुखेनैवापि तद्वह्नि-रेतः शुक्रं पिनाकिनः ॥
तदुष्णमपवित्रं सत् गङ्गायांप्रक्षिपेत् पुनः ।
कथिताश्च पुनर्गत्वा स समुद्राः सरिद् गणाः ॥
भूम्यां निपातयामास पर्व्वतैरभ्यपातयेत् ।
ततो यः पिण्डवद्भूमिः सा भूमिः कुलपर्व्वते ॥
ततस्तदैश्वरं रेतः स्वं वशेन सपावकम् ।
वहेत् समस्तभुवनं जातं संख्येरणं प्रति ।
ततः स्कन्दः समभवत् स्कन्दसम्पर्कि यज्जलम् ।
तत् स्वच्छं स्वर्णमभवदित्यादि ॥

## 171 वह्निपुराणेऽपि १(*)

एतत् पवित्रमतुलं सम्भूतमिह शुभ्रम २(†) ।
शम्भोर्वीर्य्यात् परं तेजोह्यपत्यं जातवेदसः ॥
सहजं कार्त्तिकेयस्य रुद्र शुक्र-समुद्भवम् ।
पवित्रं यत्सुरैः सर्व्वैर्धार्य्यते मुकुटादिभिः ३ (‡) ॥
अग्निस्तु देवताः सर्व्वाः प्रीयन्ते सर्व्वदेवताः ।
तस्मात् सुवर्णं ददता सुवर्णञ्च तदात्मकम् ४(+) ।
अथ सुर-सुसंस्कृत्यं स्वयं वा तदनुज्ञया ।
राजतेन विधानेन ताम्रेणच घटेन वा ॥
तान्याधान्यष्टादश पदैर्म्मन्त्रः ।
पौराणिकं गुरुम् ५(×) ।

१ (*) वह्नि पुराणे,—तुलापुरुषदाननामाध्याये ।
२ (†) 'शुभ्रत' इति क्वचिदादर्शे पाठः ।
३ (‡) 'मुकुटादिषु' इति पुस्तकान्तरस्थः पाठः ।
४ (+) 'प्रीताः स्युः सर्व्वदेवताः' इति मात्स्योक्तः पाठः ।
५ (×) स्वर्णं—पञ्चाशीतिरक्तिका परिमित सुवर्णम् । 'कर्षम् सुवर्णस्य सुवर्णसंज्ञम्' इति लीलावती ।
अथ कर्षं परिमाणम् । पौराणिकं कार्षापणमितमिति केचित् । गुरु' सेरपरिमाण मित्यर्थः ।
* देवी पुराणेन—"ग्रामा मानंसुवर्णादिः पात्रेषु प्रतिपादयेत् ।
[illegible]"॥

## (कनकदानप्रयोगः)

कृतनित्यक्रियोऽग्नि सान्निध्ये विष्णोरीशस्य वान्यतः ।
इमान् समुच्चरेन्मन्त्रान् कुशपाणिः प्रसन्नधीः ॥

### मन्त्रा यथा—

ॐ नमः सर्व्वदानन्द सर्व्व सम्पत्तिवर्द्धन ! ।
वर्द्धयाऽस्मान् समृद्धेयह आयुषा यशसा श्रिया ॥
नमस्तेऽनन्त नमः पाशधरा प्रमेय !
नमोऽस्तु रामाय सुनामधेय ! ।
नमः समीराय हुताशनाय,
नमोऽस्त्वनन्ताय गजासनाय ॥
नमः सुरश्रेष्ठ हरीश्वराय,
नमोऽस्तु सावित्रि शिवे श्रियेति ।
सरस्वति प्रीति क्रिये सुपुष्टि,
तुष्टि स्मृति शान्ति सदा सुकीर्त्ते १(*) ॥
सर्व्वामराणां निधिरप्रमेयः,
त्वमेव मन्त्रर्षि मुनौ शरण्यः ।
आधार भूतोसि चराचरस्य,
विश्वस्य यस्मात् प्रणतोश्व(स्म्य)त स्त्वाम् ॥
नमोऽस्तु सौन्दर्य्यनिधे सुरेश !
नमोऽस्तु गाम्भीर्य्य मङ्गाय मनवे मणिभद्राय ते नमः ।
नमो नन्दि विवर्त्ताय नन्द्यावर्त्ताय वर्त्तिने ॥
नमो हाटक वर्णाय कण्ठावर्त्ताय ते नमः २(†) ।
नमो नव प्रतिष्ठाय नमो हेम प्रियाय च ।
नमो हिरण्यगर्भाय नित्यानन्दाय ते नमः ॥
एवं पूज्य विधानेन नित्यानन्दनिधिं सुधीः ३(०) ।

---

१ (*) 'आर्षप्रयोगोऽपि छन्दोवद् भवति' इति नियमादत्र विभक्ति व्यतिक्रमाऽशुद्धिश्च द्रष्टव्या ।

२ (†) 'मन्त्रर्षिः मुनिः शरण्य' इत्थं पाठान्तरमस्ति ।

३ (०) 'एवं संस्तुत्य' इति पक्षान्तरस्थः पाठः ।

ससिद्धार्थक दूर्व्वाभिः सकुशाक्षत-चन्दनैः ।
तिललाजैः समं पुण्यं भूमावुदक मुत्सृजेत् ॥
मन्त्रेणानेन विधिवत् कल्पोक्तेन खगेश्वरः १(*) ।
अद्येह पुण्यकालेऽस्मिन् द्विज देवाग्नि सन्निधौ ।
यशः श्रेयोऽभिवृद्ध्यर्थं मातापित्रो स्तथात्मनः ॥
पुराणन्याय मीमांसा—वेदवादिभ्य एवच ।
नमो विद्या विदायिभ्यो नानागोत्रेभ्य एवच ॥
विप्रेभ्योऽनेकधर्म्मेभ्यो नित्यानन्दनिधिं परम् ।
अहं सम्प्रददे तेभ्यो नाना मन्त्रावृतेन च ॥
स स्वर्ण रौप्यताम्रेण सरत्नेन सवाससा ।
सोपकारेण पुरुषो ब्रह्मविष्णुशिवात्मकः २(†) ॥
प्रीयतां निधिदानेन श्रीयज्ञपुरुषोच्युतः ।
एवमुत्सृज्य उदकं विप्रेभ्यः प्रतिपादयेत् ॥
सं विभज्य यथाशास्त्रं न किञ्चि दपमानयेत् ।
महादानमिदं यस्मात् तस्मादेकोऽपि नार्हति ॥

इति कनकदानम् ॥

—*—

## (७०) अथानन्दनिधि दान विधानम् ।

—*—

### आनन्द निधि दानम् ।

अथान्ये केचि दिच्छन्ति समस्तविधि पारगाः ।
यज्ञदान व्रतानां वा सोऽप्योकोऽर्हति तद् गृहे ॥
एवं यः कुरुते दानं निधेः परमपावनम् ३(‡) ।
परं पदमवाप्नोति संसारेऽपि निरन्तरम् ४(०) ॥

---

१ (*) 'खगोत्तम' इति हेमाद्रिधृत-पाठः ।
२ (†) 'सोपस्करेण' इति पाठान्तरम् ।
३ (‡) 'नित्यानन्दनिधिः परम्' इति हेमाद्रिधृत-पाठः ।
४ (०) 'एवं सम्पदमाप्नोति'

दानानामप्यशेषाणा मनन्त फल मुच्यते १(*)
नित्यानन्द विधानस्य प्रदाना दपवर्गभाक् ॥
यस्त्वेवं सकृदत्रैव सदानन्द-विधानकृत् ।
स करोत्यसकृद्राज्य मक्षये वेधसः पदे ॥
यथा कथञ्चि दत्रैति सकर्म्मगुण सञ्चयम् २(+) ।
तदाखिलमही-राज्यं प्राप्नोति व्रतसंज्ञके ॥
पुनः स्वधर्म्मसंयुक्तो राज्यं कृत्वा सहानुगः ।
प्राप्नोति पद मैशानं नित्यमक्षयमव्ययम् ३(×) ॥
तस्मा देत्य पुनाराज्यं लभेत् वैद्याधरे पदे ।
आकल्पमप्यनल्प श्रीः श्रीनिधान प्रदानतः ॥
पुनः प्रयाति कल्पान्ते वैष्णवं पद मव्ययम् ।
गता हि योगिनो यत्र प्राप्नुवन्ति पुनः परम् ॥
एतद् भद्रनिधानाख्य माख्यातं वैनतेय ! ते ।
मया प्रीत्या प्रयत्नेन किमन्यत् कथयामि ते ॥
नित्यानन्द निधेर्दानान्नित्यानन्दोऽभिजायते ।
यः कुर्य्यात् सोऽच्युतायुः स्याद्दीर्घ सन्तान माप्नुयात् ॥
यस्तु संकीर्त्तयेद् भक्त्या यः शृणोति समाहितः ।
स दीर्घ मायुराप्नोति मुच्यते सर्व्वं किल्विषैः ॥ इति ।

## अथास्य प्रयोगः ।

कर्त्ता पूर्व्वोक्त देशकालौ संकीर्त्त्य पुराणोक्तफल प्राप्तिकामआनन्द निधि महादानं करिष्ये इति सङ्कल्प्यास्य महादानत्वान्मातृपूजाभ्युदयिक श्राद्धे कृत्वाचार्य्यं वृत्वा द्रव्याणां बहुत्वे ऋत्विगादीन् वृत्वा तेभ्यो वस्त्र मुद्रिका कुण्डलादीनि दत्वा-निध्यासादनं कुर्य्यात् ।

## तद् यथा—

नानारत्न स्वर्णरौप्यताम्र मुद्रा यथाशक्ति सम्पाद्य द्वादश पलादिपरिमित-स्वर्णयुतम् ।

---

१ (*) 'फलमनुते··· इति हेमाद्रि-धृत: पाठः ।
२ (+) 'गुणसंयुतम्'··· इति पादर्शान्तरे पाठः ।
३ (×) 'अक्षयमव्यय' मिति धातुगतार्थमिदेन नैकार्थकत्वम् ।

रौप्य पिधान-ताम्रघटरूप-मानन्दनिधिं सुसूक्ष्मवस्त्रे १(०) । वेष्टितम् । विशुद्धोपलिप्त भूतलन्यस्ताष्टाढ़क-धान्योपरि विष्णादि देवता सन्निधौ स्थापयित्वा आनन्दनिधेः प्रतिष्ठापूर्व्वकं ॐ नित्यानन्द निधये नमः इति मन्त्रेणावाहनाद्युपचारै-रभ्यर्च्च्य सिद्धार्थ दूर्व्वादलकुश-चन्दनाक्षतानादायानन्दनिधिं प्रदक्षिणीकृत्य ॐ नमः सर्व्वदानन्द इत्यादि पूर्व्वोक्त मन्त्रैरूपस्थाय महादान प्रतिष्ठार्थमिदं सुवर्णमग्निदैवतं दक्षिणात्वेन सम्प्रददे न ममेति दक्षिणां यथाशक्ति दद्यात् ।

अस्य महादानस्य ग्रहीतु रेकस्य पात्रस्यासुलभत्वाद् ब्राह्मणेभ्यस्तं निधिं संविभज्य दद्यात् २(*) ।

इत्यानन्द निधिदान प्रयोगः ॥

—*—

## (७१) अथ भद्रनिधिदान विधानम् ।

—*—

### 172. वह्निपुराणे, रुद्र उवाच—३(*)

भगवन् सर्व्वं माख्यातं वृषदानक्रियाफलम् ।
पृच्छाम्यन्यदहं पुण्यं सदाक्षयफल प्रदम् ॥
दानं त्रैलोक्यनाथस्य हरेः प्रीति विवर्द्धनम ।
यस्य जन्मायुरन्तेऽपि दानस्यान्तो न विद्यते ॥
तद् वदस्व मुने ! येन दत्तेनेशः प्रतुष्यति ।
दिक्पालात्मा च सन्नित्यं सदानन्दमयो हरिः ॥
केन दानेन तपसा व्रतेन यजनेन वा ।
मुच्यते पातकाद् घोरादाजन्ममरणान्तिकान् ॥

---

१ (०) पट्टवस्त्रं कार्पासाम्बरात् प्रशस्तम्, पट्टवस्त्रात् क्षौमं कौषेयवस्त्रं वा श्रेष्ठ पूतमिति ।
" नील-रक्ताम्बरे, दशाहीन पुरातनं सच्छिद्रं भिन्नं परिहितं दग्धं कच्छिकं मधीतदेतत् सर्व्वमम्बरं महर्षि-मन्वादि-स्मृतौ निषिद्धम् ।

२ (०) दानपात्र-विषयेतु— 'ददाति विप्राय बहु श्रुताय,
वेदान्त विज्ञान तपस्विनेच' इति श्रुतिः ।
अन्यद दानपात्रलक्षण प्रागुक्तम् ।

३ (*) हेमाद्रि सूरिमयेतु 'इन्द्र उवाच' इति पाठोऽस्ति ।

कथं भवन्नरः श्रीमान् धीमान् पुत्री प्रतापवान्।
अमितायुस्तथारोग्य सकलैश्वर्यभाक् सुधीः॥
कस्य जन्मायुतान्तेऽपि दानस्यान्तो न विद्यते।
केन तत् पदमाप्नोति विष्णोर्यत्परमं पुमान्॥
श्रोतुमर्हति वै ब्रह्मन् वैष्णवं मन्यसे यदि।
त्वत् प्रसादादखिलं दानं तत्त्वमाचक्ष्व मे गुरो! १(†)॥

173. **ब्रह्मोवाच—**

आनन्दं ब्रह्मणो रूपं नित्यं वेदेषु गीयते २(*)।
सर्व्वाभासो विभुः साक्षादानन्देन व्यवस्थितः॥
तस्माद्दानमिदं पुण्यं देह्यानन्दनिधिं परम्।
विप्रायाच्युतरूपाय वर्द्धयानन्द मुत्तमम्॥
दानेनानेन ते शक्र धातुत्रययुतेन च।

174. **इन्द्र उवाच—**

विधानं ब्रूहि मे ब्रह्मन् दानस्यास्य महानिधेः ३(†)।
यथा देयं विशेषेण विष्णोरानन्द कारकम्॥

175. **ब्रह्मोवाच—**

पुण्यान्तिथिं प्राप्य तु पौर्णमास्याम्,
तथोपरागे शशि-सूर्य्ययोर्व्वा।
चतुर्युगादिष्वयनद्वये वा,
प्रबोधने प्रस्वपनेऽथ विष्णोः॥
कुर्य्यादथौदुम्बरमेव कुम्भम्,
हिरण्यमानेन यथात्म शक्त्या ४(‡)।

हिरण्यमानेन प्रक्षेप्तव्य भारादि-परिमित-सुवर्णानुसारेण देयेन हीरकादिरत्न-सहितेन यावत् पूर्ण कुम्भः स्यात्तावत् प्रमाणं कुर्य्यादित्यर्थः।

१ (†) 'प्रसादादखिलं' इति हेमाद्रिधृत-पाठः।

२ (*) 'आनन्दो' इति चतुर्व्वर्ग चिन्तामणि धृत पाठः।
'आनन्दं ब्रह्मणोरूपं तच्चमोक्षे प्रतिष्ठितम्' इति वेदान्ते।

३ (†) 'महाप्रभो' रिति हेमाद्रिधृत-पाठः।

४ (‡) 'हिरण्य सारेण' इति हेमाद्रिधृत-पाठः।

तथा विधानञ्च सुराजतं स्यात,
हिरण्यभारेण तु पूरये त्तत ।
तदर्द्धतोऽर्द्धेन तदर्द्धतो वा,
स्वशक्तितः स्वर्ण पलैः शतेन ।
तदर्द्धमर्द्धेनतु वित्त शक्त्या,
प(फ)लत्रयादूर्द्ध्वमपि प्रकुर्य्यात् ।
तत्ताम्रभाण्डे कनकं निधाय,
सवज्र नीलोत्पल पद्मरागम् ॥
संयुक्त वैदूर्य्य सविद्रुमञ्च,
तद्राजतं पात्र मधोमुखं स्यात् ।
कुशोत्तरे दर्पण चामराढ्ये,
स पादुकोपानहच्छत्र युक्तम् ॥
तत् क्षौमवस्त्रोत्तरयुग्मयुक्तम्, १(*)
सं पूजयेन्मन्त्रवरै रथै तैः ।
आद्रौ तु पञ्चामृत माद्य विष्णुम्,
सं स्नाप्य संसार हरं समर्च्च्य ॥
प्रावरणोत्तरच्छदेनोपयुक्तेन सहिते इति ।
तथेश्वरं पावकमेव हुत्वा,
आमन्त्रयेद् भद्रनिधिं ततस्तम् ॥
श्रीखण्ड कर्पूर सकुङ्कुमेन,
पञ्चाक्षरं नाम श्रियंप्र लिख्य ।
नमस्तथौङ्कार ग्रुतञ्च पात्रेऽ,—
तद्राजतेऽप्येव यथार्च्चयेत ।
त्वया समस्तामर सिद्धयक्ष—
विद्याधरेन्द्रोरग किन्नरेन्द्रैः ।
गन्धर्व्व विद्याधर-दानवेन्द्रैः,
युतं धृतं विश्वमिदं नमस्ते ॥

१ (*) 'तत् क्षौम' इत्यत्र प्रावरणोत्तर इति पाठान्तर मस्ति ।
प्रावरणोत्तरच्छदेनेति 'क्षौमवस्त्रोत्तर' इत्यस्य व्याख्यानम् ।
एतेन परिधानवस्त्रमपरमुत्तराच्छादनं युक्तम् ।

समग्र संसारकरी त्वमेव,
विभोः सदानन्दमयो च माया ।
समस्त कल्याण निधिः समाधिः,
हरि प्रिये भद्रनिधिर्नमस्ते ॥
एवं सम्पूज्य विधिना ततो विप्रमथार्चयेत् १(*) ।
किरीटाङ्गद-निष्काग्र्य कुण्डलाङ्गुलिभूषणैः ॥
अलङ्कृत्य हरिं यद्वत पीताम्बरधरन्ततः ।
पूजये दच्युतं ध्यात्वा मन्त्रेणानेन भक्तिमान् २(†) ॥
भूदेवोऽसीत्यतो नित्यं नित्यानन्दमयोहरिः ।
हर मे दुष्कृतं कृष्ण ! कृपाकर नमोऽस्तु ते ॥
भूदेव भगवद्धर्म्म भवभङ्ग करेश्वर ! ।
भवभूतिकरो जिष्णुः प्रभविष्णुर्नमोऽस्तुते ॥
एवं पूज्य हृदि ध्यात्वा तं द्विजं विष्णुरूपिणम् ।
ततोभद्रनिधिं दद्यान्मन्त्रेणानेन मानवः ॥
स्वगोत्रोच्चारणेनादौ विष्णोर्नाम महात्मनः ३(*) ।
यव दर्भतिलैः सार्द्धमुदकं संपरित्यजेत् ॥
पितृ सन्तारणार्थाय नित्यानन्द विवृद्धये ।
सर्व्वाघौघ विनाशाय विष्णोर्हानं मया कृतम् ॥
तदनेन सरत्नेन धातुत्रय-युतेन च ।
सत् क्षौमाम्बरयुक्तेन सादर्श—पादुकेन च ॥
आसनेन सच्छत्रेण चामरोपानहेन च ४(†) ।
सदानन्द विधानेन प्रीयतां विष्णुरीश्वरः ॥
एव मुच्चार्य्य तन्दद्यात द्विजाय हरिरूपिणे ।
गोप्येन विधिना दद्यात हेमसंख्या न कीर्त्तयेत ५(‡) ॥

---

१ (*) 'एवं पूज्य' इति क्वचिदादर्श-पाठः ।

२ (†) 'पूजयेदतः' 'किरीटाद्याच्युतं' इति तत्र पाठान्तरद्वयं विद्यते ।

३ (*) 'वपुर्नाम महात्मनः' इति भिन्नादर्श-पाठः ।

४ (†) चामरोपानहेनचेत्यार्षम् ।

५ (‡) गोप्येन विधिनेति यद हेमादिकं प्रदत्तं तेषां संख्यादिकं न कीर्त्तयेत्, तदुक्तं मानव-धर्म्मशास्त्रे 'दानञ्च परिकीर्त्तना' दिति । परिकीर्त्तनाद्दानफलं क्षरतीत्यर्थः ।

प्रकीर्त्तिते कोटि गुणायुतं फलम् १(+),
प्रगोपिते कल्पगुणैर्न संशयः ।
इतीदमन्यायं न कीर्त्तयेत् सुधीः,
निधानमध्ये निहितश्च यद्वसु २(×) ॥
एवं कृते स्यान्मनुजः कृतात्मा,
भवेन्नचा(वा)स्मान्मरणं कदाचित् ।
प्रयाति विष्णोः पदमव्ययन्तत्,
शिवात्मकानन्दमयं स साक्षात ३(०) ॥ इति ।

कर्त्ता पूर्णिमादिकाले कृतसङ्कल्पः शुद्धे देशे सोत्तरच्छदे कुशोत्तरे प्रागुक्त-प्रकारेण यथाशक्ति विरचितं भद्रनिधिं क्षौमवस्त्रद्वयावृतं स्थापयित्वा परितो दर्पण चामर-पादुको-पानच्छत्राण्यासाद्य पुरतो हरिहरौ स्थापयित्वा पञ्चामृतादिना सम्पूज्य तदीशानदेशे स्वगृह्यानुसारेणाग्निं संस्थाप्य घृताक्त तिलैरष्टोत्तरशतादि संख्यया प्रागुक्त-देवोद्देशेन हुत्वा श्रीखण्ड कुङ्कुम कर्पूरैः प्रणवादि श्रियै नमः इति पञ्चाक्षरमन्त्रं निधिकुम्भ विधानपत्रे च लिखित्वा तेनैव भद्रनिधिं पूजयित्वा गृहीत कुसुमाञ्जलि भद्रनिधिं प्रदक्षिणीकृत्य प्राङ्मुखः उदङ्मुखं गुरुं किरीटाङ्गद पीतवस्त्रादिना सम्पूज्य 'भूदेवोऽसी'-त्यादि मन्त्रेण स्तुत्वा कुश-यव-तिल-जल-हस्तोऽमुकशर्म्माहं सर्व्वपापक्षय सकल-पितृ-तारण-नित्यानन्दविवृद्धि—शिवात्मकानन्दमयाव्यय—विष्णुपद प्राप्तिकामोऽमुक-शर्म्मणे तुभ्यमिमं भद्रनिधिं सरत्न धातुत्रयात्मक सं क्षौमाम्बर युग्ममादर्श पादुकोपान-च्छत्रासनसहितं सम्प्रददे न ममेति तद्धस्ते जलन्दद्यात् । दान प्रतिष्ठार्थं सुवर्णं दत्त्वा विप्राय समर्पयेत् ।

इति भद्रनिधि दानप्रयोगः ॥

*—

१ (+) प्रकीर्त्तिते इति दत्तवस्तु संख्यादीनां फलन्यूनतार्थं सूचितः ।
प्रगोपिते इति फलाधिक्य मनेन सूचितम् ।

२ (×) हेमाद्रावपि एवमेवास्ति भद्रनिधेः प्रयोगः ।

३ (०) 'स साक्षात्' इत्यत्र 'स संख्या' इति हेमाद्रौ पाठान्तरमस्ति ।

## (७२) अथ शतमान-दानविधिः १(*) ।

—*—

176, **ब्रह्माण्ड पुराणे, ब्रह्मोवाच—**

शृणुष्वावहितो दानं ब्रवीमि तव नारद !
शतमान मिति प्रोक्तं सर्व्वपाप-प्रणाशनम् ॥

आयुष्यं श्रीकरं पुण्यं आरोग्यं सन्तति प्रदम् ।
भुक्ति-मुक्ति प्रदं सर्व्वं सर्व्वमाङ्गल्य-कारणम् ॥

पुण्यकालेषु सर्व्वेषु चन्द्रसूर्य्य ग्रहादिषु ।
यत्र साधन सम्पत्तिः तत्र दानं समाचरेत् ॥

गव्येन भूमिं सरितो जलेन २(†),
आलेख्य-मध्ये सिततण्डुलैश्च ।
सरोरुहं केशर-भूषणाढ्यम्,
सकर्णिकं चाष्टदलं विलिख्य ॥

तस्मिन् हिरण्यं शतमान-मात्रम्,
निधाय तस्योपरि तं विचिन्त्य ।
ब्रह्माणमीशं कमलासनस्थ
मावाह्य गन्धादिभि रादरेण ॥

विप्रं तथा वेद-विदं विचिन्त्य,
विरिञ्चिबुद्ध्यातु समर्च्चयित्वा ।
दद्यात सुवर्णं शतमान मस्मै,
सम्प्रीयता मात्म-भूरित्युदीर्य्य ॥

शतमान मात्रमिति-शक्त्यनुसारेण कृष्णलादि शतमित्यर्थः ३(*) ।

---

१ (*) शत परिमाण हिरण्यमत्र ज्ञेयम् ।

२ (†) सरितो जलेन, गङ्गाजलेन साधारण-नदीजलेन वा ।

३ (‡) 'कृष्णलो सुवर्णनिर्म्मित मणि विशेष' इति वेदान्त-कल्पतरुकाराः
मीमांसकैरपि 'शत-कृष्णलं चपर्येत्'—इत्यत्र तथैव प्रतिपादितम् ।

योऽसौ दानं शतमानं हिरण्यम्,
तस्मादायुः सर्व्वमेवैति चोक्तम् ।
अतः कुर्य्यादादरै रित्यसकृद्वा १(*),
नित्यं मासं हायनं शक्तितो वा ॥
जाम्बुनदं जातरूपं सुवर्णं काञ्चनन्तथा ।
हिरण्यं चेति शक्तथातु क्रमादेतानि नारद ! ॥
रोगपरिहारार्थञ्चेत् २(†) ।

—*—

177. **अथाह, बौधायनः—**

शतमान मक्षयेन सुवर्णेन मितञ्चयत् ।
तत्कांस्ये निक्षिपेत् सम्यक् तिलाढ़क-समन्विते ॥
कांस्यपात्र-परिमाणं प( फ )लानामष्टकं विदुः ।
तिलानामुपरि स्थाप्य अक्षताः शुभ्रशाल्यः ॥
आवाहयित्वा देवेशं द्युमणिं भानुमव्ययम् ।
गन्धमाल्यैः सुरभिभी रक्तमाल्यै र्विशेषतः ॥
उपचारैः षोड़शभि रर्च्चयेद् भानुमव्ययम् ।
अष्टाक्षरेण मन्त्रेण सावित्रेणाति भक्तितः ॥
यद्वा सावित्रलिङ्गेन मन्त्रेन प्रणिपत्य तु ।
ब्राह्मणाय ततः पूजां कुर्य्याद् गन्धाक्षतैः शुभैः ॥
अन्नैश्च विविधैः सम्यक् स्वकुटुम्बाबिरोधतः ३(‡) ।
तस्मै दान्ताय सत्कृत्य स्वाचारायात्म वेदिने ॥
प्राङ्मुखाय स्वयञ्चोदङ्मुखः प्रयत-मानसः ।
मन्त्रेणानेन सङ्कल्प्य पापव्याधि-विमुक्तये ॥
पद्मोद्भवः पद्मकरः सप्ताश्च रथवाहनः ।
शतमानेन दत्तेन तुष्टः सर्व्व-जगद्गुरुः ॥

---

१ (*) 'आदरै'रित्यत्र 'नारदे रिति' पाठान्तरं ग्रन्थान्तरेऽस्ति। परवर्त्ति-श्लोके नारद इति सम्बोधनान्तं पदमस्ति ।

२ (†) रोगनाशार्थं चेद् यदि एतद्दानं करोति तदा तस्य पापरोगयोर्विमुक्तिः स्यात् । 'स्वकुटुम्बाविरोधतः' इति क्वचित् पाठान्तरम् ।

३ (‡) 'स्वकुटुम्ब विरोधतः' इति हेमाद्रि-समुद्धृत-पाठः ।

इह जन्मनि यत्पापं अन्यजन्मनि यत्कृतम् ।
महद्वा यदि वा स्वल्पं तत्सर्व्वं क्षमयत्वसौ १(‡) ॥

इति दानमन्त्राः ।

ततः क्षमाप्य तं विप्रं प्रणिपत्य विसर्ज्जयेत् ।
यथा प्रसन्नो भवति तथा सर्व्वं प्रकल्पयेत् ॥

इति पापरोगहर-शतमान-दानविधिः ॥

—*—

## (७३) अथ हेमदान-विधानम् ।

—*—

178. **वायु पुराणे—**

हेमदानमथो वक्ष्ये यद्गतं रेतसा मम २(*) ।
अग्निगर्भं पवित्रञ्च आयु रारोग्य-वर्द्धनम् ॥
निष्कमान-परिमाणं तदर्द्धं पादमेव वा ३(†) ।
तण्डुलाढ़क सम्पूर्णं पात्रे पात्रान्तरे न्यसेत् ॥
अर्द्धाढ़कतिलैः पूर्णं तस्योपरि घृतान्वितम् ।
तिलार्द्ध-माणतः पात्रं घृते सद्धेम विन्यसेत् ॥
गोमयेनोपलिप्तायां भूमौतत्रितयं न्यसेत् ।
विप्रञ्च तद्धिरण्यञ्च शम्भुं स्मृत्वा प्रपूजयेत् ॥
आत्मच्छायां हिरण्यञ्च तिलतण्डुलमेवच ।
विलोक्य दद्याद् विप्राय शिवः सम्प्रीयतामिति ॥
दद्यादनेन विधिना नित्यं मास्ययनेऽपि वा ।
सम्वत्सरे चामावस्यां मत्सायुज्यपरं यतः ४(‡) ।
आयुरारोग्य-सम्प्रीति स्तस्मिन् काले भविष्यति ॥

---

१ (†) 'तत् प्रत्यया प्रत्ययाभवा तत् सर्व्वं क्षमयत्वसौ' इति हेमाद्रि समुद्धृतः पाठः ।
—अत्र 'स्वल्प' मित्यत्र बाल्यमिति पाठोऽस्ति ।

२ (*) 'यदुक्तं वेधसा मम' इति पुस्तकान्तरधृतः पाठः ।

३ (†) 'निष्कमात्रं पवित्रं वा' इति हेमाद्रीयः पाठः ।

४ (‡) 'सम्वत्सरे वा प्रीत्येव तत् सायुज्यमवाप्नुयात्' इति चतुर्वर्ग चिन्तामणिधृतः पाठः ।

एवं सुवर्ण दानेन नित्यं दद्यादनन्तकम्।
अन्यांश्च विविधान् कामान् आप्नोत्येव न संशयः॥
इति नानाविध सुवर्णदानम्॥

—*—

## (७४) अथ प्रसङ्गाद्रजत-दानविधानम्।

—*—

179. **नन्दि पुराणे—**

अथो देवो विरूपाक्षः प्रत्यालीढ़ं समाश्रितः।
स्थानकं पद ( शर ) मादाय सर्वदेवमयन्तदा १(*)॥
आकृष्णमन्दरं चापं वासुकिज्यावनामितम् २(†)।
त्रिपुरस्य वधार्थाय निर्निमेषै स्त्रिलोचनैः ३(‡)॥
ततोऽश्रुकणमेकस्माद् यत्तु तस्य त्रिलोचनात्।
तस्माद्रुद्राक्षमभवत् शाखाव ज्जटयोज्ज्वलम्॥
द्वितीयनेत्रादभवत् अश्रुविन्दुश्च स्वाननात्।
तस्माद्रजतमुत्पन्नं पितृकर्म्मसु शासितम्॥
रजतेन समायुक्तं यस्य श्राद्धेषु किञ्चन।
तत्तदक्षयमित्युक्तं रहस्यं पितृभिः समम्॥ इति।

180 **स्कान्दे—**

यः प्रयच्छति विप्राय रजतं वापि निर्म्मलम्।
स विधूयाशु पापानि स्वर्गलोके महीयते।
रूपवान् सुभगः श्रीमान् इह लोकेच जायते।

---

१ (*) अत्र स्थानानि षड् धन्विनाम्। तथाच—भरतः।
वैष्णवं समपादञ्च वैशाखं मण्डलं तथा।
प्रत्यालीढ़ मथालीढं स्थानान्येतानि षड्नृणाम्।
अमर सिंहमतेतु स्थानपञ्चकमिति।
अस्यत् क्षीरस्वामी तत्टीकायाम्, धनुर्वेदे विश्वामित्रीये वासिष्ठेच।
२ (†) अत्र 'आकृष्ण' इत्यत्र आकृष्य' इति पाठः साधुः।
३ (‡) 'गौरपूर्वै स्त्रिलोचनै' रिति पाठान्तर मादर्शान्तरे।

181. **मात्स्ये—**

पितॄणां राजतं पात्रं अथवा रजतान्वितम् ।
शिवनेत्रोद्भवं यस्मा त्तस्मात्तत् पितृवल्लभम् ॥
अमङ्गलञ्च यज्ञेषु देवकार्य्ये च वर्जितम् ।
रजतं दक्षिणामाहुः पितृकार्य्येषु सर्व्वदा ॥ इति ।

तथाच —

सुवर्णं सर्व्वदादानां मङ्गलत्वेन दीयते १(*) ।
सुवर्णदानेन रजतं अङ्गमित्येव केचन ॥ इति ।

अतएव—सुवर्णदाने रजतं दक्षिणेति, केचिदिति—हेमाद्रिराह । रजतदानमन्त्रस्तु,—

रुद्रनेत्र समुद्भूतं रजतं पितृवल्लभम् ।
प्रदानादस्य मे रुद्रः प्रियकृत् भक्तवत्सलः ॥
इति रजतदानम् ॥

—०—

## (७५) अथाश्वदानम् ।

—*—

182. **स्कान्दे—**

अश्वं यस्तु प्रयच्छे द्वै हेमचित्रं सुलक्षणम् ।
स तेन कर्म्मणा देवि ! गान्धर्व्वं लोकमश्नुते २(*) ॥

183. **महाभारते च—**

सर्व्वोपकरणोपेतं युवानं दोषवर्ज्जितम् ।
योऽश्वं ददाति विप्राय स्वर्गलोके महीयते ॥
यावन्ति रोमाणि हये भवन्ति हि नरेश्वर !
तावतो वाजिदा लोकान् प्राप्नुवन्ति सुपुष्कलान् ॥

---

१ (*) 'दक्षिणात्वेन प्रदीयते' इति आदर्शान्तरधृतः पाठः ।
'सुवर्णे दीयमाने तु रजतं दक्षिणेष्यते ।
सर्व्वेषामेव दानानां सुवर्णं दक्षिणा भवेत्' इति श्रुति भाष्ये )

२ (*) 'कर्म्मणा चैव' इति हेमाद्रि-लिखितः पाठः ।

उच्चैःश्रवास्त्वमश्वानां राज्ञां विजय-कारकः।
सूर्य्यवाहं नमस्तुभ्यं अतः शान्ति प्रयच्छ मे ॥

गारुड़ेच—

*अश्वमेध मखं यस्तु कलौ कर्त्तुं समीहते १(†)।*
*अश्वदानन्तु तेनेह कर्त्तव्यं विधि-पूर्व्वकम् ॥*
*विधिन्तस्य प्रवक्ष्यामि ब्रह्मणा निर्म्मितं पुरा २(*)।*
श्वेतमश्वं शुभं स्नातं हेमपर्य्याय भूषितम् ॥

अथाश्वालङ्करणम्—

रौप्यैस्तु कटकैः शुद्धैः करिदन्तोपशोभितम् ।
वज्रनेत्रं खुरैस्ताम्रैः क्षौमपूच्छं सुवाससम् ॥
शुभ्रेण पट (द) केनैव सम्वृतं सायुधान्वितम् ।
धान्यरत्नोपरिस्थन्तु वद्धकक्षं सुपट्टकम् ॥
एवं सुतेजसं चाश्वं ब्राह्मणाय निवेदयेत् ।
सुरूपाय सुवृत्ताय विदुषेच सुबुद्धये ॥
दातव्यो मन्त्रमुख्याय दातव्यो भास्कराय च ।
मन्वादौ च युगादौ च अयने विषुवे तथा ॥
चन्द्र-सूर्य्य ग्रहे चैव मश्वं दत्त्वा सुखी भवेत् ।

तथाश्व पूजामन्त्र :

मार्त्तण्डाय सुवेगाय काश्यपाय त्रिमूर्त्तये ।
जगद्धिताय सूर्य्याय त्रिवेदाय नमोऽस्तुते ॥
एवं समुच्चरेन्मन्त्रं कर्णे दद्यात्तिलोदकम् ।
महार्णवे समुत्पन्न उच्चैश्रावस पुत्रकः ॥
मया त्वं विप्रमुख्याय दत्तो हय सुखी भव ।
इमं विप्र नमस्तुभ्यं अश्वं ते प्रतिपादितम् ॥
प्रतिगृह्णीष्व विप्रेन्द्र ! मया दत्तं सुशोभनम् ।
कर्णे समर्पणं कृत्वा विप्रहस्ते जलं क्षिपेत् ।
पश्चादश्वः पुरो गच्छेत् पदानां सप्त-सप्ततिम् ।
भास्करं मनसि ध्यात्वा आलोक्य स्वगृहं व्रजेत् ॥

---

१ (†) 'कर्त्तुमनीश्वरः' इति आदर्शान्तर-घृतः पाठः।
२ (*) 'ब्रह्मणा कथितं पुरा' इति आदर्शान्तरस्थः पाठः।

श्वेत मश्वन्तु यो दद्यात् फलं दशगुणं लभेत् ।
एवं कृते नरव्याघ्र ! सूर्य्यलोकं व्रजेन्नरः ।
वड़वांश्च तथा दत्त्वा तुल्यमेव फलं लभेत् ॥
एवं कृते नरव्याघ्र । सूर्य्यलोकं व्रजेन्नरः ।
ब्रह्महत्यादि-पापानि तथान्यानि बहून्यपि ॥
तानि सर्व्वाणि नश्यन्ति दत्त्वा ह्यश्वं विधानतः ।
त्रिंशत् पूर्व्वान् त्रिंशत् परान् त्रिंशच्चैव परावरान् ।
सम्यग् दत्त्वाश्वदः पुत्रो नरकादुद्धरेत् पितॄन् ।
तृप्यन्ति पितरः सर्व्वे नृत्यन्तिच हसन्ति च १(*) ।
वाजी प्रदः कलौ जात स्ततो वैतानिका वयम् ।
वाजि-प्रदेन पुत्रेण उद्धृता नरकार्णवात् ।
हयदानफलं ह्येतद् यल्लोका अक्षया नृणाम् ॥ इति ।

इत्यश्वदानफलकीर्त्तनम् ॥

—*—

## अत्रैवं प्रयोगः १(*) ।

उक्तकाले पूर्व्वोक्तगुणमश्वं समासाद्य सुस्नातं सदलङ्कृतं मार्त्तण्डायेति मन्त्रेण पूजयित्वा 'महार्णवे समुत्पन्न' इत्यादि 'सुशोभन' मित्यन्तं मन्त्रं पठित्वामुकगोत्रायामुक· शाखाध्यायिनेऽमुक-गोत्रोऽहं सकलपापक्षयपूर्व्वकाश्वमेध-फलप्राप्तिकाम त्रिंशत्रिंशत् पूर्व्वापर पित्रुद्धरण पूर्व्वकाक्षय-सूर्य्यादि लोक प्राप्त्यर्थं हेममयपद्मेन भूषितं रौप्यकटि-करिदन्त वज्रमयनेत्र-ताम्रमयखुर-क्षौमपुच्छ-स्वर्णतिलकोपशोभितं सुवद्धकस्वायुधं सुग्रैवेयकं सुवाससा संवीतं धान्यरत्नोपरि स्थितं सूर्य्यदैवतमिमं श्वेताश्वं तुभ्यमहं सम्प्रददे न ममेति । तत् कर्णे घृतं दद्यात् । प्रतिष्ठार्थे ( वाक्यपूर्व्वक ) दक्षिणां दत्त्वा स्वस्तीत्यादि वाचयित्वा अश्व-पुरस्तात् सप्त-सप्ततिपदानि गत्वा भानुं ध्यात्वा दृष्ट्वा च स्वगृहमियादिति ॥

इति श्वेताश्वदानम् ।

---

१ (*) 'तृप्यन्ति पितरः सर्व्वे वल्गन्ति च हसन्ति च' इति सूरिहेमाद्रीयः पाठः ।

१ (*) प्रयोगेतु वाक्यारम्भे प्रागुक्त देशकालादि-सङ्कीर्त्तनं विधेयम् ।

# (७६) अथ तिलदानम् ।

—*—

185. **मत्स्यपुराणे—**

विष्णोर्देह-समुद्भूताः कुशाः कृष्णतिलास्तथा ।
धर्म्मस्य रक्षणार्थायालं एतत् प्राहुर्दिवौकसः१ (*) ॥

186. **व्यासदेवस्य—**

महर्षेः कश्यपस्यैते गात्रेभ्यः प्रसृतास्तिलाः२ (†) ।
ततो दिव्यं गता भावं प्रदानेषु तिलाः प्रभो ३(‡) ॥

187. **महर्षि सम्वर्त्तः—**

नित्य-नैमित्तिके काम्ये तिलान् दत्वा स्वशक्तितः ।
प्रजावान् पुत्रवान् नित्यं धनवान् जायते नरः ॥

188. **कूर्म्मपुराणे—**

कृष्णाजिने तिलान् दत्वा सुवर्णं मधु-सर्पिषी ।
रौद्रेण वाससाच्छन्नं त्रिधा तद्वत् सदक्षिणम् ॥
आहिताग्नौ द्विजे दत्वा सर्व्वं तरति दुष्कृतम् ॥

अत्र निधेर्हीन मध्यमोत्तम भेदेन द्रोण मात्रेण द्रोण द्वितीयेन द्रोण तृतीयेन पात्रत्रयमिति हेमाद्रिः । सदक्षिणमिति सर्व्वत्र ।

189. **विष्णुधर्म्मोत्तरेच—**

तिला गावो हिरण्यञ्च अन्नं कन्या वसुन्धरा ।
दत्तान्येतानि विधिवत् तारयन्ति महाभयात् ॥

---

१ (*) अन्यच स्मृतौ—
'विष्णु देहोद्भवाः पुण्याः तिलाः पाप प्रणाशकाः ।
प्रेतस्वर्गं प्रयच्छन्तु संसारार्णवतारकाः ॥१॥
यथा मधुवधे विष्णोर्घर्म्मबिन्दुसमुद्भवाः ।
तिलाः कुशाश्च समिधः तथाच्छान्ता भवन्तु मे' ॥२॥

२ (†) 'प्रसृताः पुरा' इति आदर्शान्तर-धृतः पाठः ।

३ (‡) 'तिलाः स्मृताः' इति चतुर्व्वर्ग चिन्तामण्युक्तः पाठः ।

„ अथ महर्षिमनुः—
'वासोदश्चन्द्रसालोक्य मश्विसालोक्य मश्वदः ।
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम्' ॥
'भूमिदोभूमिमाप्नोति दीर्घायुश्च हिरण्यदः' । इति ।

### 187. हेमाद्रौ—

मूलर्क्षगे शशधरे माघे मासि प्रजायते ।
एकादश्यां कृष्णपक्षे सोपवासो जितेन्द्रियः ।
द्वादश्यान्तु तिलान्दत्त्वा सर्व्वपापात् प्रमुच्यते ।
तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलोदकी ।
तिलस्य दाता भोक्ता च षट्तिलाः पापनाशनाः १(*) ॥
असकृत् षट्तिली भूत्वा सर्व्वपाप-विवर्जितः ।
त्रिंशद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

तथा—

मृगं तिलमयं कृत्वा सुवर्णरजतान्वितम् ।
दद्यात् कम्बल संस्तीर्णं कृष्णमार्गाजिनेन वा ॥
सर्व्वकाम समृद्धेन विमानेन दिवं व्रजेत् ।
कालक्षयादिहागत्य राजराजो भवेत् पुनः ॥
इति तिल मृग दानम् २(†) ॥

—*—

### 188. तत्र विष्णुस्मृतौ—

ताम्रपात्रे तिलान् कृत्वा पलषोड़श कल्पितान् ।
सहिरण्यं स्वभक्त्या च विप्राय प्रतिपादयेत् ।
नाशयेत्त्रिविधं पापं वाङ्मनः कायसम्भवम् ॥

### 189. स्कान्दे,—

तिलपात्राणि यो दद्याद् वि प्रेभ्यः श्रद्धयान्वितः ।
अमावस्यां समासाद्य नियतः सुसमाहितः ॥

---

१ (*) 'षट् तिली नावसीदति'-आर्त्तभट्टाचार्य्य धृतः पाठः ।

२ (†) 'एवं तिलनिर्म्मितधेनुदानं, तद्विवरणन्तु पद्मपुराणे सृष्टिखण्डेप्यस्ति ।
तद् यथा,—
'विधानं तिलधेनोस्त्वं ब्रूहि मीनं द्विजोत्तम ! ।
मुनिः प्राह विधानं यत् तच्छृणुष्व नराधिप ! ॥
षोड़शाढ़कमयी धेनुः चतुर्भि र्वत्सको भवेत्' इत्यादि ।

स पितॄं स्तारयत्वाशु नरकान्नर पुङ्गवः ।
पितृलोकं समाप्नोति स चिरं सुखमश्नुते ॥

### 190. महर्षिरत्रिः—

तिल पात्रन्तु सम्पूर्णं यो दद्यात् सुसमाहितः ।
ध्रुवं स गच्छति स्वर्गं नरो वै नात्र संशयः ॥

### 191. यमर्षिः—

तिलपात्रञ्च यो दद्यात् प्रत्यहं वाथ पर्व्वणि ।
सदक्षिणं सत्वभावाद् हृदि कृत्वा जनार्द्दनम् ।
नाशयेत्त्रिविधं पापं धर्म्मस्य वचनं तथा ॥

### 192. ब्रह्मपुराणे—

ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रं द्विजायतु ।
सहिरण्यञ्च यो दद्यात् श्रद्धावृत्तानुसारतः ।
सर्व्वपाप विशुद्धात्मा लभते च परां गतिम् ।

### 193. कूर्म्मपुराणे—

तिल पूर्णं ताम्रपात्रं सहिरण्यं द्विजातये ।
प्रातर्दत्वा तु विधिव द्दुः स्वप्नं प्रतिहन्ति सः ।
तिलपात्रं त्रिधा प्रोक्तं कनिष्ठोत्तम मध्यमम् ।
ताम्रपात्रं दशफलं जघन्यञ्च प्रकीर्त्तितम् ॥
द्विगुणं मध्यमे प्रोक्तं त्रिगुणं चोत्तमे स्मृतम् ।
स्वर्णमेकं जघन्यन्तु द्विगुणं मध्यमे क्षिपेत् ॥
त्रिगुणं चोत्तमे तद्वत् सुवर्णं परिकीर्त्तितम् ।
सुवर्णं दक्षिणान्दत्वा सर्व्वपापक्षयो भवेत् ।
इति हेमाद्र्युक्तानेकविध-तिलपात्रदानम् १(*) ॥

—*—

१ (*) सूरिवर्य्य हेमाद्रि प्रणीत—चतुर्व्वर्ग चिन्तामणयन्तर्गत दान खण्डे ।

# (७८) अथ मातृणापाकरणार्थं तिलपूर्णकांस्यपात्र दानम् ।

—*—

## 194. आदित्य पुराणे—

पितामह उवाच—

शृणुध्वं देवताः सर्व्वा ऋषयश्च तपोधनाः ।
मुक्ता भवन्ति येनेह मानवा मातृजादृणात् ॥
यज्ञं सौत्रामणिं कर्त्तुं यदि शक्ति र्न विद्यते ।
महासर स्तथा वापीं कूपं कर्त्तुञ्च दीर्घिकाम् ॥
एवं कृते मातृ-ऋणान्मुक्तो भवति मानवः ।
सदक्षिणं कांस्यपात्र म थ दत्वा प्रमुच्यते ॥

ऋषय ऊचुः—

भगवन् कांस्यपात्रस्य विधिं सम्यक् प्रकीर्त्तय ।
यत् प्रमाणं यत् स्वरूपं यस्मिन् काले च दीयते ॥
यादृशाय च दातव्यं दान मेतद् द्विजातये ।
यादृशेन च दातव्यं न दद्याद् यादृशाय च ॥

पितामह उवाच,—

शुद्धकांस्यस्य पात्रस्य प्रमाणं पञ्चविंशतिः ।
पलाना मत्र निर्द्दिष्टं तिलानां प्रस्थ-सप्तकम् ॥
सुवर्ण माषा श्चत्वारः पात्रोपरि विधारयेत् ।
वस्त्रेण वेष्टयेत् पात्रं प्रधानेन सुभक्तितः ॥
स्नानं कृत्वा निम्नगादौ पितॄन् देवांश्च तर्पयेत् ।
ततोऽभि पूजये च्छम्भुं शङ्करं हरिमेव च १(*) ॥
गोमयेनाथ संलिप्य गृहमध्यञ्च सर्व्वतः ।
लिखेत् पद्मं द्वादशारं कुङ्कुमेनाथ चन्दनैः ॥
ततो वह्निं स्थापयित्वा होमं कुर्य्याद् यवै स्तिलैः ।
तत्र पात्रं प्रतिष्ठाप्य पूजयेद् भक्ति संयुतः ॥

---

१ (*) 'ब्रह्माणं हरिमेव च' इति पाठः सुष्ठु स्यात् ।
नाना मुनीनां मते दानविषये ये ये मतभेदाः सन्ति ते ते च सन्दर्भेष्वारेव प्रदर्शिताः ।

गन्ध चन्दन पुष्पाद्यैधूपदीपैश्च शोभितम् ।
ततो ब्राह्मण माहूय बहुभृत्यं सुसंयतम् ॥

परस्त्री-वर्ज्जकं शान्तमलङ्कृत्य यथाविधि ।
दाम्भिकं वर्ज्जयेन्नित्यं परस्त्रीरतिलालसम् ॥

क्षुद्रं मत्सरशीलञ्च ब्रह्मभ्रष्ट मशौचकम् ।
पादौ प्रक्षाल्य विधिवन्मातृश्राद्धं समाचरेत् १(*) ॥

अत्र तम्पूजयेद् विप्रं पुष्पधूप-विलेपनैः ।
वस्त्राणि परिधाप्यासौ सुभव्यानि मृदूनि च ॥

अलङ्कृत्य यथाशक्त्या माघ्यां वा मृतवासरे ।
अत्र माघी—माघमासस्य पौर्णमासी ॥

मृतवासरे—मातृमृतदिवसे तत्तिथौ च ।
ग्रहणे रवि सोमाभ्यां संक्रान्तिषु युगादिषु २(†) ॥

तथान्यदपि यद्दत्तं माघ्यामुद्दिश्य मातरम् ।
तदक्षयफलं सर्व्वं पुरा प्राह महेश्वरः ३(‡) ॥

जीवन्तीं भूषयेद् वस्त्रै र्भोज्यैरपि विभूषणैः ।
मृत मुद्दिश्य दातव्यं माघ्यां सर्व्वं स्वशक्तितः ॥

अमावस्यां यथा दत्तं पितृणाञ्च पुरा मया ।
यथा माघ्यां मया दत्तं मातृणां नात्र संशयः ॥

दत्तं जप्तं हुतं स्नातं विधिवत्तर्पणं कृतम् ४(*) ।
तदक्षयफलं सर्व्वं जायते मुक्तिरेव च ॥

---

१ (*) 'पादौ च श्राद्धविधिवन्मातृश्राद्धं समाचरे' दिति पाठान्तरे-पाठः। मातृ-मुख्यं श्राद्धं मातृश्राद्धं, यत्र मातरः प्रधानम्। आभ्युदयिकं नान्दीश्राद्धं इति श्राद्धमिति यावत्। तथा हि स्मृती 'मातरः प्रथमं पूज्याः पितरस्तदनन्तरमिति।

२(†) 'रवि सोमाभ्याम्' चन्द्रसूर्य्ययोर्ग्रहणे तदुपस्थिते।
युगादिषु चतुर्णां युगानामारम्भदिवसेषु।

३ (‡) "तदक्षय...जायते मुक्तिरेव च" इत्यादर्शान्तरे पाठः।
'अमावास्यायां पितृभ्यो दद्यात्' इति श्रुतिः।

४ (*) 'तर्पणन्तु शुचिः कुर्यात् प्रत्यहं स्नातको द्विजः।
देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्' इति स्मृती।

विप्रं सम्पूज्य विधिवत् पात्रन्तस्य प्रदापयेत् १(‡) ।
प्रणम्य विधिवद् भक्त्या मन्त्रमेतदुदीरयेत् ॥

कांस्यपात्रं मया दत्तं मातुराणृन्यकाङ्क्षया ।
भगवत् तद्वचनात्तुभ्यं यथा शक्ति तथा वद २(+) ॥

दशमासांश्च उदरे जनन्याः संस्थितेन मे ।
क्लेशितो बाल्यभावे च स्तनपानाद्द्विजोत्तमः ॥

गूथमूत्रादिसंलेपैः लिप्तो यश्च कृतो मया ३(×) ।
भवतो वचनादद्य मम मुक्ति र्भवेद्दणात् ॥

कांस्यपात्रं सुवर्णञ्च तिलान् वस्त्राणि दक्षिणाम् ।
सप्तधान्यं मया दत्तं ऋणान्मुक्तिर्भवे न्मम ॥

कांस्यपात्र-प्रदानेन तत्त्वज्ञानं शारीरकम् ४(*) ।
तथा हेमप्रदानेन परमात्मानमव्ययम् ॥

आच्छदानन्तु ब्रह्माण्डं गुह्यमेतत् सनातनम् ।
विप्राच्छादन-दानेन परमात्मा सुपूजितः ॥

तिल संख्याकृतं दुःखं जनन्या मम सेवितम् ।
तिलदान-प्रभावेन कृतमुक्तो भवाम्यहम् ॥

फलादि खचितं कृत्वा तज्जलेन विभूषितम् ।
एवमुत्क्रामतः पात्रं प्रदद्याद् ब्राह्मणाय च ॥

ब्राह्मणेन ततो वाच्यं जननी सम्भवादृणात् ।
मुक्तस्त्वं पात्रदानेन महेश्वर वचो यथा ॥

दत्त्वा विप्रस्य पात्रन्तु होमं कुर्य्यात् प्रयत्नतः ।
सोपस्करं सताम्बुलं क्षमाप्य विप्रं विसर्ज्जयेत् ॥

---

१ (‡) 'विप्रं सम्पूजयित्वा तु तत्पात्रं तस्य' इति हेमाद्रिधृतः पाठः ।

२ (+) 'भगवद्वचनादद्य मम मुक्तिर्भवेद्दृणात्' इति पाठान्तर-पाठः ।

" 'संस्थितस्य मे' इत्यं पाठान्तर मस्ति ।

३ (×) 'लिप्ता यच्च कृता मया' इत्यपरादर्शस्थः पाठः ।

४ (* 'तत्त्वज्ञानमिति'—'नाहं देहो नेन्द्रियाणि नमी विषयाः'—
इत्याकारकं शिवो भिन्नं जीवमहात्म स्वरूपं तत्त्वज्ञानं जायते ।
'तत्त्व' ब्रह्मणि यथार्थे च वौं साधारणेऽपि च' इति । एवन्तु परमेश्वराख्यः ।

अन्येषामपि विप्राणां भोजनादि प्रदापयेत् ।
भक्त्या शक्त्या ससम्मानं पूज्य-विप्रान् प्रयत्नतः ॥
एवं कृते ततो देवादृणान्मुक्ति र्न संशयः ।
जननी सम्भवादस्मा न्नान्यथा क्वचि देवहि ॥
पुरा मातृवधोद्भूत-पापशङ्कित-चेतसा ।
जामदग्न्येन रामेण प्रदत्तं कांस्यभाजनम् ॥
वशिष्ठ-तनयान् हत्वा विश्वामित्रेण धीमता ।
पुरा दानमिदं दत्तं पातक-व्रातशान्तये ॥
अकृत्वा मातृ-वचनं पन्नगैः शाप-सं युतैः ।
कैश्चिच्छङ्कापरै र्मुत्वा माता पश्चात् प्रसाधिता ॥
शापतो निष्कृतिं ब्रुहि न वाक्यं यत्कृतं तव ।
शापोऽभिभवति (ते) देवि नानृणानां दुरात्मनाम् ॥
कथयामास सा तेभ्यः कांस्यपात्रं सविस्तरम् ।
दत्त्वा दानं विनिर्म्मुक्तो भविष्यति न संशय ः ॥
भुजङ्गैस्तत्कृतं सर्व्वं मातृ वाक्येन गर्हितैः ।
कांस्य पात्रे प्रदानन्तु पापमुक्तस्ततोऽभवम् ॥
विधानं कांस्यपात्रस्य सर्व्वमेतन्मयोदितम् ।
अन्यथा किन्तरिष्यन्ति ऋणान्मातृ-समुद्भवात् ॥ इति ।

## अस्य प्रयोगः ।

युगादावाब्दिके माघ्यादि काले कर्त्ता नद्यादौ स्नात्वा देवर्षि पितृण् सन्तर्प्य कृताह्निकः गृहमध्ये गोमयोपलिप्त-प्रदेशे कुङ्कुमेन चन्दनेन वा द्वादशदल पद्मं विलिख्य तत्र पञ्चविंशति पलमितं कांस्यपात्रं तिलप्रस्थ-सप्तकपूर्ण मुपरिस्थ स्वर्णमाष-चतुष्टयम् सुभव्य-वस्त्र वेष्टितं विन्यस्य तत्र हरिं हरं वा विधिवदभ्यर्च्च्य परितः सप्तधान्यकं फलानि चासाद्य प्राग्रमभ्यर्च्च्य तासु पुरतोऽग्निं प्रणीय गृह्योक्त-विधिनाज्याक्त-तिलैर्वैष्णं शिवं विष्णुं वोद्दिश्य तत्तन्मन्त्रेणाष्टोत्तरशतं हुत्वा मृतमातृको मात्राब्दिकं कृत्वा जीवन्मातृकस्तु तद् गन्धाभरणादिनालङ्कृत्य पूर्वोक्त-लक्षणं प्रतिमहितारं न्धवस्त्रालङ्कारैरलङ्कृत्य अद्येत्यादि संकीर्त्तनान्तेऽमुकगोत्रायामुक ब्राह्मणायेदं पञ्चविंशति पलं कांस्यपात्रं प्रस्थसप्तकतिल पूर्णं चतुर्माष स्वर्णयुतं श्रेष्ठ वस्त्र संयुतं परितः स्थापित सप्त

धान्य फलयुतं मातुराणृन्यकाम स्तुभ्यं अहं सम्प्रददे नममेति तद्धस्ते जलं दत्वा सावित्रेण प्रतिगृह्यकामस्तुतिं पाठयित्वा ततः कृतैतत् कांस्यपात्रदान प्रतिष्ठार्थं सुवर्णं दत्वा प्रणम्य कांस्यपात्र सम्पादितमित्यादि मन्त्रान् पठित्वा मातृ-ऋणान्मुक्तोऽसीति-ब्राह्मणेनोक्ते पुनर्व्याहृतिभिर्हुत्वा कर्म्मशेषं समाप्य ब्राह्मणं विसृज्य यथाशक्ति ब्राह्मणान् भोजयेत् ।

इति कांस्यपात्र दान प्रयोगः ॥

—*—

## (७६) अथ तिलराशिदानम् ।

—*—

पाद्मे—

195. **तदाह यमः—**

सर्व्व पातक संघातः कामतो वाप्यकामतः ।
शुद्धिं तस्य प्रवक्ष्यामि स्वर्ग-साधन मेवच ॥
शुक्लैः कृष्णै र्यथालब्धै र्द्वात्रिंशदङ्गुलोत्थितः ।
राशि तिलैः समे देशे कर्त्तव्यः पुरुषायतः १(*) ॥
यथा विभवविस्तारं यदि वा शक्तितो नरैः ।
प्रतिमा साङ्गुला स्थाप्या सौवर्णी तत्र माधवी ॥

196. **तत्र माधवमूर्त्तिलक्षणं नारदीये—**

आरभ्य वामोर्द्धकरा दपसव्य क्रमेण तु ।
शङ्खं चक्रं गदा पद्मं दधानो माधवः स्मृतः ॥
क्षौद्रेण पयसा दध्ना घृते ना पूरयेद् घटान् ।
स्थापयेत्तत्र तं रुक्मं पुष्पस्रग् वस्त्र-भूषिताम् ॥
क्षौद्रेणेति—मध्वादिपूरित घट चतुष्टयं तिल क्षेपः २(†) ।

पूर्व्वादि दिक्षु स्थापयित्वा रुक्मरूपां माधव ३(‡) प्रतिमां तत्र स्थापयेदित्यर्थः ।

---

१ (*) 'कार्य्यः पुरुषमानतः' इति क्वचिदादर्शे पाठः ।
२ (†) 'माधव' इति नारायणस्वरूपः । मा महालक्ष्मीस्तस्या धवः अधिपतिरिति ।
३ (‡) रुक्मरूपां सुवर्णमयीं माधवप्रतिमामित्यर्थः ।
'रुक्मं लौहे सुवर्णे च' इति हेमचन्द्रः ।

भक्त्या चाभ्यर्च्य तत्सर्व्वं ब्राह्मणे श्रोत्रियेऽर्थिनि ।
दद्यान्माघेऽथ वैशाखे विषुवे वोत्तरायणे ॥
अज्ञानाद् यदिवा मोहा ल्लोभाद्वा जन्मजन्मनि ।
अर्जितं यन्मया किञ्चि दुष्कृतं मधुसूदन ! ॥
तत् सर्व्वं विलयं यातु दानेनानेन माधव ! ।
एवमुच्चार्य्य तत् सर्व्वं ब्राह्मणाय निवेदयेत् ॥
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ।

इति पद्मपुराणोक्तं तिलराशि दानम् ॥

—*—

## (८०) अथ तिलपद्मदानम् ।

—*—

सर्व्व यज्ञेषु यत्पुण्यं सर्व्वदानेषु यत्फलम् ।
यद्दत्त्वा लभते विप्र ! तद्दानं कथयामि ते ॥
रहस्यं सर्व्वदानानां कथ्यमानं मया शृणु ।
पुण्येऽस्मिन् भारते वर्षे देवानामपि दुर्लभम्१(*)॥
तिलपद्ममिति ख्यातं सुरासुरनमस्कृतम् ।
माघमासेतु सम्प्राप्ते शुक्लपक्षे द्विजोत्तमः ।
गोमयं मण्डलं कृत्वा चतुरस्रं महामते ।
नववस्त्रं समस्तीर्य्य कृष्णाजिन समन्वितम् ॥
द्रोणावरां २(†) स्तिलांस्तत्र निधाय वसनोपरि ।
निष्कत्रयं सुवर्णस्य स्थापयेच्च तथोपरि ॥
श्रीनिवासं जगन्नाथं भुक्ति मुक्ति प्रदायकम् ।
ध्यायेच्चतुर्भुजन्देवं प्रणतार्त्तिहरं हरिम् ॥

**ततो ध्यानं यथा—**

शङ्ख चक्र गदापाणिं पीतवाससमच्युतम् ।
श्रीवत् साङ्कजगद्बीजं सर्व्वकारण-कारणम् ॥

---

१ (*) 'गायन्ति देवा किलगीतकानि,
धन्यास्तु ते भारतभूमिभागे । स्वर्गापवर्गास्पदमार्गभूते,
इति विष्णुपुराणे, २।३।१।२२।२४ ।

२ (†) द्रोणमितां स्तिलान्' इति क्वचिदयन्तु पाठः ।

कविं पुराणं विश्वेशं पुण्डरीक-निभेक्षणम् ।
आसीनं कर्णिकामध्ये सर्व्वशक्ति-समन्वितम् १(†) ॥
कृताञ्जलिपुटोभूत्वा नमस्कृत्य पुनः पुनः ।
पूजयेत् परमेशानं श्रद्धावित्तानुसारतः ॥
इन्द्रनील-महानील-मणिमुक्ताफलादिभिः ।
आराधय यथा शक्त्या देवदेव-जनार्द्दनम् ॥
गन्ध पुष्पै स्तथादीपै नैवेद्यैश्च मनोरमैः ।
क्षीरान्ने घृ त पक्वैश्च फलैर्दिव्यै रनेकधा ॥
पुष्पाणां प्रकरैश्चैव गीतनृत्यादिभिस्तथा ।
इत्थमाराध्य देवेशं ताम्बुलं विनिवेदयेत् २(*) ।
पद्म सौगन्धिकोपेतं श्रद्धापुते न चेतसा ॥
पद्मसौगन्धिकं ग्रन्थादौ परिभाषायां ज्ञेयम् ।
तैलप्रस्थं घृतप्रस्थं दध्याढ़क मतः परम् ३(†) ।
स्थापयेत् पार्श्वतस्तस्य धान्यपात्राणि षोड़श ॥
एवमाराध्य तत् पद्मं तिलद्रोणमयं शुभम् ।
एकरात्रं द्विरात्रं वा त्रिरात्र मथवा द्विज ! ॥
तिलाहारो भवेत् पूर्व्वं मुपवास मथापि वा ।
कुर्य्यात् स्वकार्य्यशुद्ध्यर्थं वासुदेवमनु स्मरन् ।
ततो दद्याच्च तत् पद्मं शुचिर्भूत्वा समाहितः ।
विज्ञात-कुलशीलाय ब्राह्मणाय कुटुम्बिने ॥
जितेन्द्रियाय शान्ताय प्रसन्नायात्मवेदिने ।
रागद्वेषविहीनाय वैष्णवाय विशेषतः ॥
एतद् गुणान्वितायैवं यथायोगं यथाक्रमम् ।
दातव्यं तत् प्रयत्नेन 'तिलपद्म' विधानतः ॥
श्रद्धाभक्ति युतविष्णु भक्ताय इति ।

---

१ (†) ध्यायेदित्यादि-समन्वितमित्यन्तं तद्ध्यानं विज्ञेयम् ।

२ (*) इत्यन्तं देवाराधन प्रणाली बोध्या ।

३ (†) अत्र आढक-परिमाणं परिभाषायां प्रागुक्तम् ।
'पुष्कलानि च चत्वारि आढकः परिकीर्त्तितः' । इति,स्मृतिः ।
'आढको च तुवर्यां स्त्री परिमाणान्तरे स्त्रियां' इति मेदिनी ।

## 197. महाभारते—

प्रीयतां माधवो देव इत्युक्तं तमनुस्मरन् ।
हिरण्यगर्भ देवेश पद्मनाभ जनार्दन ! ॥
हिरण्येश गुणाधार सर्व्वाधार धरेश्वर ! ।
पुत्र-पौत्रादि-संयुक्तं दासी दास-समन्वितम् ॥
आरोग्यञ्च सुमन्त्रञ्च सर्व्वदुःख-विवर्जितम् ।
कुरु मां परमोदारं भक्तोऽयमिति चिन्तयन् ॥
इत्थं प्रसाद्य देवेशं वासुदेवं सनातनम् १(*) ।
दद्यात्तिलमयं पद्मं सर्व्वकामसमृद्धये ॥

### अत्र वेदविद्दानग्रहोतुरुक्तिः—

ब्राह्मणश्चापि गृह्णीया द्वाचयेत्तु प्रतिग्रहम् ॥
'कोऽदात् कस्मा अदा' दिति वैदिकं मन्त्रमुच्चरेत् २(†) ।
एवं तिलमयं पद्मं यो ददाति विधानतः ! ।
सर्व्वं सत्त्व समाकीर्णं नरकं स न पश्यति ॥
स्वयं भवति पूतात्मा पितॄनथ पितामहान् ।
प्रपितामहांश्च धर्म्मात्मा तारयत्यखिलं कुलम् ।
धर्म्मार्थी धर्म्ममाप्नोति धनार्थी धनमाप्नुयात् ३(‡) ॥

### अत्र तिलपद्मदानफलकीर्त्तनम्—

मोक्षार्थी मोक्षमाप्नोति नात्रकार्य्या विचारणा ॥
पातकी मुच्यते पापात् पितृघ्नोगुरुतल्पगः ॥
सर्व्व-पापरतोवापि मुच्यते नात्र संशयः ४(*) ।
इच्छन्ति पितरः पुत्रान् पौत्रां स्तद्वंश-सम्भवान् ।
अस्मद्वंशभवः कश्चित्तिलपद्मं प्रदास्यति ॥

---

१ (*) 'इत्थं......दद्यात् पद्म तिलात्मकम्' इति पाठान्तरे-पाठः।

२ (†) 'कोऽदात् कस्मा अदात् कामोऽदात् कामायादात् कामो दाता कामः प्रतिग्रहीता कामैतत्ते'। अस्य मन्त्रस्य नाम कामस्तुतिरिति। इति शुक्ल यजुर्व्वेदे ७।४८।

३ (‡) 'धर्मार्थश्च कामांश्च मोक्षमाप्नोत्य संशय' इति पाठान्तरे-पाठः।

४ (*) "मुच्यते सर्व्वपातकैः"......पाठान्तरे पाठः।

यस्तु राजा धनपतिः समृद्धोऽतीव धार्म्मिकः ।
आराध्य विप्रं विधिना वस्त्रालङ्कारभूषणैः ॥
वाहनादिभि रत्नैश्च ग्रामक्षेत्रादिकै स्तथा ।
यत् फलं जायते तस्य द्विज दान-परस्य च ॥
परिच्छन्नं भवेत्तन्तु नात्र कार्य्या विचारणा ।
यस्त्विमं विधिवद्दद्या त्तिल पद्मञ्च धार्म्मिकः ॥
तस्य दानफलं यस्य तस्य तन्मात्र विद्यते १(†) ।
इति महाभारतोक्तं तिलपद्मदानम् ॥

—*—

## 198. तत्र हेमाद्रावन्यदुक्तम् (२‡) ।

—*—

अथान्यत् परमं वक्ष्ये अल्पद्रव्यं महाफलम् ।
द्रव्य-मन्त्रोपसंयुक्ते काले ह्यस्य विधिः स्मृतः ॥
सर्व्वकालेष देशेच अम्बराणि प्रकीर्य्य च ।
गोमयालेपिते देशे कर्त्तव्य मिह कथ्यते ॥
तन्मध्ये निक्षिपे द्धीमान् तिलभारत्रयं शुभम् ।
पद्ममष्टदलं कृत्वा कर्णिका केशरान्वितम् ॥
दशनिष्केण ततकार्य्यं तदर्द्धार्द्धेन वा पुनः ३(*) ।
तिलमध्ये न्यसेत् पद्मं पद्ममध्ये महेश्वरम् ॥
आराध्य विधिवद्देवं वामादीनि प्रपूजयेत् ।
शक्तिरूपं सुवर्णेन त्रिनिष्केणतु कारयेत् ४(‡) ।

---

१ (†) "तस्य दानफलं यत्स्या तस्यान्तं नात्र विद्यते" इति पुस्तकान्तरे धृतः पाठः ।

२ (‡) नाना मतभेदेन तिलदान मिदं तत् पद्मवीत्याऽधुना हेमाद्रि सूरिमतं दर्शयति ग्रन्थकृत्, हेमाद्राविति ।

३ (*) 'दीनारोऽपि च निष्कोऽस्त्री' इत्यमरः ।
दीनारः [illegible] इत्यर्थः ।
'निष्कमस्त्री साष्टशते दीनार कर्षयोः' इति मेदिनी ।
'चतुः सौवर्णिको निष्कः' इत्यमरः ।

४ (*) वामा ज्येष्ठा रौद्री क्रियाः [illegible] कालिमती च [illegible] प्रकीर्तिताः ।

तासाञ्च पुरतः कार्य्याः विद्येशाः प्रविभागशः ।
पूर्व्वोक्त हेममानेन विद्येशानपि कारयेत् ॥
तानभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ।
तत् परितोऽष्टौ वामादि शक्ती र्भक्त्या प्रपूजयेत् ॥

## तद् यथा—

वामा ज्येष्ठा तथा रौद्री कालविकरणी तथा ।
काल प्रमथनी देवी दमनीच यथाक्रमम् ॥　इति ।

## यथाक्रममिति पूर्व्वाद्यष्ट दलेषु ।

अथानन्तश्च सूक्ष्मश्च शिवश्चाप्येक नेत्रकः ।
एकरुद्रस्त्रिमूर्त्तिश्च श्रीखण्डश्च शिखण्डिकः १(*) । इति ॥
विद्येशानर्च्चयेदेतां स्तद्‌बाह्येच दलाग्रतः ।
अर्च्चयेत् पुण्डरीकैश्च पद्मै र्व्वा शतपत्रकैः ।
धूपञ्च गुग्‌गुलं दद्याद् घृताक्तं परमेष्ठिनः २(†) ।
एवमभ्यर्च्च्य देवेशं कृत्वा चैव प्रदक्षिणम् ।
ततो विप्रं समाहूय पुण्यकाले उपस्थिते ॥
यथा देवं तथा विप्रमर्च्चयित्वा विधानतः ।
मूलमन्त्रेण कर्त्तव्यं सर्व्वमेवार्च्चनादिकम् ।
इमं मन्त्रं ततः प्रोक्त्वा तस्मै विप्राय दापयेत् ।
एतत्तिलमयं पद्ममत्र सन्निहितो हरः ॥
एतत् प्रदानादनिशं शिवः संप्रीयतामिति ।
यथासौ भगवान् देवः सर्व्वभूतान्तर-स्थितः ॥
तेन सत्येन मे पापं विलयं यातु सर्व्वतः ।
एवं यस्तिल पद्मस्य विधानं सम्यगाचरेत् ॥
सर्व्व-पाप-विनिर्म्मुक्तः स याति शिवमन्दिरम् ।

[ इति सूरिहेमाद्रयुक्तं तिलपद्मदानविधानम् ]

—✱—

१ (*)　वामादीनां नामानि प्रागुक्तानि ।
२ (†)　'...दीपो नैवेद्यमेव च' इत्यन्यः पाठः, एकादश रुद्रनामानि प्रागुक्तानि । पद्मानि द्विधे उच्यन्ते ।

## (८१) अथ रुद्रैकादश तिलदानविधानम् ।

—*—

अतःपरं प्रवक्ष्यामि तिलदान मनुत्तमम् ।
यद्दत्वा पुरुषः स्त्री वा वैरिञ्चि लोकमाप्नुयात् ॥
आयुरारोग्यदं पुण्यं सर्व्वपाप-प्रणाशनम् ।
शिवप्रीति-करं नृणां पुत्रवृद्धिकरं शुभम् ॥
रुद्रैकादश बुद्ध्यातु विप्रानेकादशान् सुधीः ।
प्राङ्मुखः प्रत्यगासीनान् गन्धादिभि रथार्चयेत् ।
तिलप्रस्थद्वयं पात्रे प्रत्येकं निक्षिपेत्तथा ॥
प्रत्येकं मण्डलं हैमं पात्रेषु विनिवेदयेत् ।
पात्राणि चैव माराध्य शिवबुद्ध्यायथाक्रमम् ॥
रुद्रैकादश मन्त्रैश्च दद्यादुदक-पूर्व्वकम् ।
धरोभद्रश्च शम्भुश्च शिवश्च सुमहायशाः ॥
अजैकपादोऽहिर्बुध्नः पिनाकी च परन्तपः १(*) ।
भुवनाधीश्वरश्चैव कपाली च विशाम्पते ! ॥
स्थाणुर्भगश्च भगवान् रुद्रा एकादशाः स्मृताः २(†) ।

अत्र प्रणवादि-चतुर्थ्यन्त-नमोऽन्तेन च मन्त्राः सर्व्वेषां ज्ञातव्याः ।

इति रुद्रैकादशतिलदानविधानम् ।

—*—

## (८२) अथ तिलगर्भदानम् ।

—*—

199. ब्रह्माण्डे—

अतः परं प्रवक्ष्यामि तिलगर्भं मनुत्तमम् ।
यत् संप्रदानान्मनुजो दीर्घमायुरवाप्नुयात् ॥

---

१ (*) 'अपराजित' इति । 'मृगव्याधश्च सर्पश्च निर्ऋतिश्च महायशाः' इति च हेमाद्रिः ।

२ (†) 'बहुरूपेश्वरश्चैव कपाली च महाद्युतिः' ।
स्थाणुर्भवश्च भगवान् रुद्रा एकादश विदुः, इति चतुर्वर्ग-चिन्तामणिः ।
अत्र बटुनाथः, आदिनाथः मीननाथः, मत्स्येन्द्रनाथादयः । एवां नाथ भारतेश्वर इति
[illegible] प्रसिद्धिः । 'नाथस्तु शैवयोगी वा शैवमतप्रदीपितः' । [illegible] ।

अपमृत्युजयोपायो व्याधिनिर्म्मोक्षणक्षमः ।
तिल गर्भ इति ख्यातो रहस्यं पापनाशनः ॥
यदा ग्रहोपरोधः स्याज्जन्मर्क्षस्याति दारुणः १(†) ।
व्याधीनाञ्च समुत्थान मुत्पातस्यापि चोदयः ॥
तिल गर्भ स्तदा कार्य्यः सर्व्वदोषापशान्तये ।
निमित्तानन्तरं कुर्य्यात नैमित्तिक विधिक्रमम् ॥
गोमयेनोपलिप्तायां क्षितावास्तीर्य्य वाससी ।
शालीनामाढ़कं मध्ये तदर्द्धं तण्डुलं न्यसेत् ॥
तैस्तु पद्मं प्रविस्तीर्य्य मष्टपत्रं सकर्णिकम् ।
कर्णिकायां न्यसेत् पद्मं सौवर्णं शक्तितः कृतम् ॥
नवरत्नानि तत्पद्मे निधातव्यानि यत्नतः ।
ततस्तदूर्ध्वतः शुद्धां स्तिलान् कुर्य्यात् समन्ततः ॥
गर्भवद् वाससा भूयः समास्तीर्य्य ततः शनैः ।
गर्भन्तं योनि मन्त्रेण समाधाय यथाविधि ॥
तत्रोपविश्य पुरुष कृष्णकृत-सुमुष्टिकम् २(*) ।
तस्याङ्गेषु न्यसेन्मन्त्रं मृत्युञ्जय मनुक्रमात् ३(†) ॥
तञ्च देवं विरूपाक्ष मर्द्धचन्द्र-विभूषणम् ।
कल्पयित्वाऽर्चयेन्मन्त्रं पञ्चब्रह्मभिरादरात् ॥

योनिमन्त्रस्तु—

यस्यैते यज्ञियो गर्भो यस्यै योनि र्हिरण्मयी ।
अङ्गान्यह्रुता यस्य तं मात्रा समजीगमं स्वाहेति ४(‡) ॥

200. वाजसनेयिनांसा प्रसिद्धा ।

---

१ (†) ग्रहोपरोधः—ग्रहपीड़ा, जन्मर्क्षयो-मूलमघयोर्मता, मूलादिदुष्ट नक्षत्रयो रथवा पत् प्रत्यरिवधनक्षत्रावामिति । व्याधयो-दुष्ट रोगाः । उत्पाती-दिव्यभौमान्तरिक्षजाः विविधाः ।

२ (*) 'तत्रोपविश्य पुरुष कृष्णकृत सुमुष्टिकम्' इति पाठान्तर धृतः पाठः ।

३ (†) ॐ भूः इति त्र्यम्बक मृत्युञ्जय मन्त्रः ।

४ (‡) महामृत्युञ्जयमन्त्रस्तु ग्रन्थान्तरे प्रोक्तः ।
मन्त्रमन्त्रः यथा—शुक्लयजुर्वेदे ३।६० ।
शुक्ल यजुः अः ८, मः २९ ।

### 201. मृत्युञ्जय मन्त्रन्यास उक्तः शौनकेन १(*)—

त्र्यम्बकं यजामहे इति शिखायां न्यसेत। सुगन्धि पुष्टिवर्द्धनमिति हृदये। उर्व्वारुकमिव बन्धनादिति बाह्वोः। मृत्यो र्मुक्षीय माऽमृतादिति नाभौ।

### 202. देवी पुराणे—

पादे गुल्फे च जान्वोरू जघने कोटि मेढ्रयोः।
नाभौ कुक्षिद्वये पार्श्वे कक्षयोः कुचयोर्हृदि॥
स्कन्धककाटिकायाञ्च कूर्परे मणिबन्धके।
कनिष्ठाऽनामिकामध्या तर्ज्जन्यङ्गुष्ठ पाणिषु॥
कण्ठेऽथ चिबुके वक्त्रे नासिका कर्णचक्षुषि।
ललाटे मूर्द्ध्नि चूडायां वर्णान् मन्त्रस्य विन्यसेत॥

**पञ्चब्रह्म मन्त्राः—**

सद्योजातादयः तैत्तिरीये प्रसिद्धाः २(*)।
तस्य मूर्द्ध्नि पुनः पद्मं सौवर्णं पूर्व्ववत कृतम्॥
विन्यसे द्रुक्म मावेष्ट्य तिलैरापूरयेत् पुनः।
तं गर्भमर्च्चयेद् भूय श्चिन्तयित्वाऽमृतोद्भवम्॥
अमृतस्राविणं चन्द्रं स्वेन मन्त्रेण मन्त्रवित्।
ततः शतावृतं मन्त्रं मृत्युञ्जय मनुत्तमम् ३(†)।

---

१ (*) पञ्च ब्रह्ममन्त्रो यथा—महामृत्युञ्जयप्रयोगग्रन्थे तन्मन्त्रविधानन्यास-ध्यान-पूजादिकं विधत्ते

२ (*) ॐ सद्योजातं प्रपद्यामि सद्यो जाताय वै नमो नमः। भवे भवेनातिभवे भजस्वमाम् भवोद्भवाय नमः।१७। वामदेवायनमः ज्येष्ठायनमः श्रेष्ठायनमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनायनमः सर्व्वभूत दमनाय नमो मनोन्मनायनमः। १८ अघोरेभ्योऽथ घोरेभ्यो घोर घोरतरेभ्यः। सर्व्वेभ्यः सर्व्व शर्व्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः। १९। तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्। २०। ईशानः सर्व्वविद्यानामीश्वरः सर्व्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपति र्ब्रह्मा शिवोमे अस्तु सदाशिवोम्। २१। नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः। २२। ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः। २३। सर्व्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु पुरुषो वै रुद्रस्सन्महो नमोनमः। २४। विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानञ्च यत्। सर्व्वो ह्येष रुद्रस्तस्मै रुद्राय नमोऽस्तु। २५। नारायणोपनिषदि च। १४। १५।

३ (†) तन्त्रोक्त मृत्युञ्जय मन्त्रः—

हौं ॐ जूंसः भूर्भुवः स्वः ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्व्वारुकमिव बन्धनान्मृत्यो र्मुक्षीय माऽमृतात्। शुक्लयजुः ३।६०। अयमार्ष महामृत्युञ्जयमन्त्रोऽप्यविरोधोऽस्ति। ॐ जूंसः इति मृत्युञ्जय मन्त्रः—एवमेव शिवपूजायै विधत्ते।

तत उत्थापयेत्तस्माद् गर्भस्थानात् समाहितः।
पुनः संप्रोक्ष्य वारुण्याः पावमानीभिरेव च १(‡) ॥
पूर्व्वदेह-विनिर्म्मुक्तः शङ्करोऽस्मीति चिन्तयेत।
ब्राह्मणाय विनीताय ज्ञानिने वीतमन्यवे ॥
ब्रह्मनिष्ठाय तत् सर्व्वं सम्प्रदद्यात्तिलादिकम्।
प्रीयतां भगवान् शम्भुश्चन्द्र मौलिरिति ब्रुवन् ॥
अनेन विधिना यस्तु तिल गर्भं समारभेत्।
अकाल मृत्युर्नभवेत्तस्य नास्त्यत्र संशयः ॥
व्याधीनां विप्रमोक्षः स्यान्महतामपि निश्चयः।
ग्रहदोषाश्च नश्यन्ति प्रसीदन्ति ग्रहाः पुनः।
उत्पातानां प्रशान्तिश्च त्रिविधानामपि क्षणात् ॥

त्रिविधानामुत्पातानां—भौमान्तरीक्ष दिव्यानाम्।

अत्र तिलगर्भेणोपशमनं ग्रहपीड़ानां शङ्कर-भगवता, तिलदानानि यजमान-कर्तृकानि उक्तानि, अन्य दाचार्य्य कर्तृकमिति ज्ञेयम्।

## अथास्य प्रयोगः।

यदा ग्रहपीड़ादिःस्यात्तदा कर्त्ता जन्मर्क्ष-ग्रहपीड़ा-अकालमृत्युनाश-दीर्घायुष्यादि फलप्राप्ति-कामस्तिल गर्भदानमहं करिष्ये इति सङ्कल्प्य यथोपयुक्त गुणवन्तमेकं ब्राह्मण-माचार्य्य वृत्वा गोमयेनोपलिप्ते भूभागे वासो युग्ममास्तीर्य्य तदुपरि अर्द्धाढ़क-परिमित-तण्डुलैरष्टदलपद्मं कृत्वा कर्णिकायां यथाशक्ति सौवर्णं पद्मं नवरत्न-सहितं विन्यस्य परितः शुद्धां स्तिलान्, उपविष्ट-यजमानो वरण प्राप्ताद् ब्राह्मणवचनात् पुनः शुद्धान् स्थापयित्वा अन्येन वाससा गर्भद्वारा वरणं कल्पयित्वा गर्भयोनि मन्त्रेणाभिमन्त्र्य तत्र यजमानमृजूकृत-बद्धमुष्टिक मुपवेश्य तदङ्गेषु प्रागुक्त मृत्युञ्जय न्यासान् पूर्व्वोक्त प्रकारेण कृत्वा तं विरूपाक्ष चन्द्र मौलिं भावयित्वा पञ्चब्रह्म मन्त्रै र्यजमानमभ्यर्च्च्य २(†) पुनर्न्यसेत्।

सौवर्णपद्ममध्ये मुखतः मूर्ध्नि स्थापयित्वा वाससा संवेष्टय तिलैरापूर्य्य ततोऽन्तस्थ पुरुषं तिलरूपगर्भं मृत्युञ्जयमन्त्रेण पुनरर्चयित्वा अमृतस्राविणं चन्द्रं मंत्रेण

१ (‡)। पावमानी सूक्तानि। 'ॐ पावमानोः स्वस्त्ययनोः' इत्यादि जनविंशति सूक्तानि।

२ (†) पञ्च ब्रह्ममन्त्राः प्रागुक्ताः। अथवा, शुक्ल यजुः ११,४६। ४,२६। १०,७२। चः, मनः।

सम्पूज्य शतावृत्त्या मृत्युञ्जयमन्त्रप्राग्रणैः सहितं पठित्वा (?) तिलान् अपसार्य्य तस्माद् गर्भाद् यजमान मुत्थाप्य वारुणीभिः १(*) संप्रोक्षयेत्।

अथ यजमानः पूर्व्वदेह-विनिर्म्मुक्तः शङ्करोऽस्मीति भावयित्वोदङ्मुखोपविष्ट-आचार्य्योऽद्येत्याद्युक्त्वा अमुकगोत्रायामुक-प्रवरायामुकशर्म्मणे दीर्घायुष्य जन्मर्क्ष-महपीड़ा-काल मृत्यु-त्रिविधोत्पातसूचित-रिष्ट-व्याध्याद्युपस्थित-वाधानिवृत्ति काम इमं तिलगर्भवासं स्वर्णपद्माद्युपस्कर सहितं तुभ्यमहं सम्प्रददे नममेति दत्वा देयद्रव्य तृतीयां शाखिरूपां दक्षिणां दत्वा अनेन तिलगर्भदानेन श्रीभगवच्छङ्करः प्रीयतामिति वदेत्।

इति तिल गर्भदान प्रयोगः ॥

—*—

## (८३) अथ त्रिपद्मदानम्।

—*—

203. **पुराणे—**

अथ दानं प्रवक्ष्यामि त्रिपद्ममिति विश्रुतम्।
आयुष्यं श्रीकरं पुण्यं आरोग्यं पापनाशनम्॥
माघे मासे विशेषेण जन्मर्क्षेषु च कारयेत्।
व्याधिग्रस्ते च दातव्यं दुःखेत्वद्भुत दर्शने २(†)॥
अथान्यद्वा भयं पश्येत् सर्व्वदोष प्रशान्तये।

**इति दानफलमुक्त्वा ततः कृत्यमुच्यते—**

भूमौ गोमयलि-प्तायां तिलैराढ़क-सम्मितैः॥
पद्ममष्टदलं कृत्वा कर्णिकाकेशरान्वितम्।
तस्मिन् विधाय सौवर्ण तत्र कृत्वा सरोरुहम्॥
वस्त्रेणावेष्ट्य गन्धाद्यै रर्च्चयेत् परमेष्ठिनम्।
विप्रं वैतानिकं धर्म्म-शास्त्रज्ञं शान्तमानसम्॥
अभ्यर्च्च्य दापयेत्तस्मै मन्त्रमेत दुदीरयेत।

**अत्र मन्त्राः—**

सम्प्रीयतां मे भगवान् आत्मभूश्चतुराननः॥
दानेनानेन सर्व्वात्मा जगत्स्रष्टा जगत्पतिः।
अथाज्ञ तण्डुलैरेव तृतीयां लवणेन तु॥

---

१ (*) वारुण सूक्तै रित्यर्थः।
२ (†) चलाद्भुतदर्शं महापार्थ्यावां ज्योतिषतत्त्वं चाद्भुतसागरेच दृष्टव्यमिति।

विष्णवे स्वात्मने चेति दानमन्त्रैर्निवोधयेत् ।
दानेनानेन मे विष्णुः प्रीयतां मे जनार्द्दनः १(*) ॥
त्रिनेत्रः सार्व्वतीनाथः शङ्करः शङ्करस्तु मे ।
दानेनानेन विश्वात्मा चन्द्रार्द्ध-कृतशेखरः २(†) ॥
इति मन्त्रान् समुच्चार्य्य दद्यादेतान् पृथक् पृथक् ।
आ(ब्रा)तलपमयान् कृत्वा ब्रह्म-विष्णु-महेश्वरान् ॥
एवं कृते तु यत् पुण्यं जायते द्विजपुङ्गवाः ! ।
न तद् वर्णयितुं शक्यं कल्पकोटि-शतैरपि ॥
इत्याह भगवान् ब्रह्मा नारदाय महात्मने ।
उक्तं मयापि तत् सर्व्वं युष्माकं मुनि सत्तमाः ! ॥

माघादिकाले गोमयलिप्ते देशे आढ़कमिततिलाष्टदलपद्मं कृत्वा तत्र सौवर्णपद्मं निधाय तत्र ब्रह्माण मर्च्चयित्वाग्निहोत्रिणे सम्प्रीयतामिति मन्त्रेणदद्यादेवमेव तण्डुल-लवण-पद्मदानमिति प्रयोगः ३(‡) ।

—:*:—

## (८४) अथ तिल पीठ दानम् ।

—*—

204. **वायु पुराणे—**

तिलपीठ मथो वक्ष्ये सारदाकमये शुभे ।
पीठेऽरत्निद्वयायामे तिलपूर्णे सभित्तिके ॥
व्योमाधिपं गणेशानरूपिणं शिवमर्च्चयेत् ॥

205. **गणेश रूपमाह, आत्रेयः—**

चतुर्भुजोगजमुखो मूषकस्थश्च तुण्डिलः ।
विषाणं चाक्षसूत्रञ्च परशुं मातुलुङ्गकम् ।

१ (*) ... ... 'परमात्मा जनार्द्दनः, इति हेमाद्रिधृतः पाठः ।
,, "दानेनानेन विश्वात्मा परमः पुरुषोत्तमः ।"
२ (†) "सं ... शङ्करः शङ्करोऽस्तु मे" इति चतुर्वर्ग-चिन्तामणिः । सम्प्रीयतामित्यादि— 'चन्द्रार्द्धकृतशेखर' इत्यन्तं मन्त्रा ज्ञेयाः ।
३ (‡) यथा तिल पद्मदानरीतिः पद्मतिल ग्रहेण तण्डुल-लवण-पद्म दाने विधिरुक्तः ।

गजाननो विघ्नराजः स्यादिति १(*) ।
शुक्ले गन्धैश्च धूपैश्च कर्पूरं धूपवेत्तथा ॥
क्षौमे च वाससी दद्यात् पुस्तकं तत्र विन्यसेत् ।
व्योम-ध्वनिपतिः शुभ्रो गणनाथ स्तिलाश्रयः ॥
व्योमशब्द-श्रुति प्राप्तं पाप मीश ! व्यपोहतु ।
इति दत्तेऽस्य नश्यन्ति पापान्यकामजान्यपि ॥
अनिबद्ध-कथोत्थानि परनिन्दोत्थकानि च ।
कूटसाक्ष्य-समुत्थानि पैशुन्य-जनितानि च ॥
वेदनिन्दा गुरोर्निन्दा तयोश्च श्रवणेन च ।
हन्ति पापान्यशेषाणि तिल-पीठ-प्रदानतः ।
शिवलोके च कल्पांश्च मोदते दश पञ्च च ॥
इति—तिल पीठ दानम् ॥

—*—

## (८५) अथ तिलादर्शदानम् ।

—*—

206. तत्रैव, वायवे—

अथान्यत् सम्प्रवक्ष्यामि तिलदान मनुत्तमम् ।
पूर्व्वोक्त-कल्पिते पीठे चतुः कुम्भ-परिष्कृते ॥
आदर्शं विमलं न्यस्य तत्र देवं मनोमयम् ।
विष्णुरूपधरं शम्भुं विन्यस्य परितो न्यसेत् ॥

207. विष्णुरूप मुक्तं नारदेन—

शङ्ख-चक्र-गदा-पद्मधरो वामोर्द्ध बाहुतः ।
विष्णु र्विधेयो भगवान् विशेषोन्यासमूर्त्तिषु ॥ इति ।

---

१ (*) प्रकारान्तरेण गणेश ध्यानं यथा,—
"खर्वं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरम्,
प्रस्यन्दन्मदगन्धलुब्धमधुपव्यालोल-गण्डस्थलम् ।
दन्ताघातविदारितारि रुधिरैः सिन्दूरशोभाकरं,
वन्दे शैलसुतासुतं गणपतिं सिद्धिप्रदं कामदम्" ।
गणपतेः—पञ्चाक्षरादि ध्यानान्यपि सन्ति । गणपतेर्विधानाकरे च [illegible] ।
शारदातिलकटीकायां पद्मासनस्थापनः [illegible] सन्ति ।

पीतवस्त्रयुगं विष्णु चक्रादीन्यायुधानि च ।
पञ्चलोह-प्रतिष्ठानि तुलसीभिः समर्चयेत् ॥
मनोमय नमस्तेऽस्तु सौम्यरूप वृषध्वज ! ।
मनस्कृतानि पापानि सर्व्वाण्याशु विनाशय १(*) ।
इति दत्तेऽस्य नश्यन्ति मानसानि कृतानि च ।
परद्रोह-प्रवृत्तानि कामलोभोद्भवानि च ॥
क्रोधजानि च सर्व्वाणि पापानि च विशेषतः ।
अवाच्य वाचने यानि अध्येय-ध्यानजानि च ॥
मदनोत्सव-जातानि क्रोधोद्भुतानि यानि च ।
ध्येयान्यावृत्तवृत्तानि(?)नश्यन्ति सकलान्यपि ॥
शिवलोके वसेद्वर्षानर्व्वुदान् दशकामतः ।

इति तिलादर्शदानविधिः ।

—*—

## (८६) अथ देवताभ्यो गजदानम् ।

—*—

### 208. शैवधर्म्मे —

निवेदयति यो नागं भक्त्या स्वर्णाद्यलङ्कृतम् २(*) ।
शिवाय पर्व्वदिवसे तस्य पुण्यफलं शृणु ॥
समन्तैरावत प्रख्यैर्गजैर्युक्तैः सुशोभनैः ।
प्रक्रीडति महायानैः शतसंख्यैरनेकशः ॥
रुद्रलोके गतश्रान्ते भवेदिह सुराधिपः ॥
चतुर्युग-सहस्रान्ते स्वर्गं प्राप्य नराधिपः ।
भवेदिन्द्रसमः श्रीमान् रूपवीर्य्य-समन्वितः ॥

इति शिवगजदानम् ।

—*—

---

१ (*) इत्यत्रोक्तमहापापविनाशनोक्तमहापापविनेत्यादि पुराणे शिवधर्मे च विष्णुप्रतिमादानविधाः वर्णिताः सन्ति । 'मनःकृतानि' इति पाठः पुस्तकान्तरे पाठः ।

२ (†) 'निवेदयानि' इति पुस्तकान्तरधृतः पाठः ।

# (८७) अथ विष्णु-गजदानम्।

—*—

## 209. गरुड़ पुराणे—१(*)

यो जगन्निधये नागं प्रयच्छति महामतिः।
भद्रजाति समुद्भूतं पद्मनाभाय शक्तितः॥
कुथ-कंबल शोभाढ्यं घन्टाचामर-भूषितम्।
वरत्राङ्कुश संयुक्तं अनेक स्वर्णभूषणम्॥
कृत्वा विष्णोर्महापूजां कार्त्तिके द्वादशीदिने॥
द्वादश्यामर्पयेत्तन्तु देवदेवाय चक्रिणे।
त्रिलोकीनाथ-देवेश! सर्व्वभूत-कृपानिधे! ॥
गजदानेन तुष्टस्त्वं प्रयच्छ मम वाञ्छितम्।
इत्युच्चार्य्यार्थ दत्वा तं प्रणिपत्य जगत् प्रभुम्॥
सुरेन्द्र-लोक मासाद्य क्रीड़ते काल मक्षयम्।
वर्षार्व्वुद सहस्राणि क्रीड़ित्वा सुचिरं दिवि।
ततो भूलोक मासाद्य सार्व्वभौमो नृपोभवेत्।

इति विष्णु गजदानविधिः॥

—*—

---

१ (*) गजः—प्रजापति देवताकः।
"अश्वं सर्व्वदैवत्यं भूमिर्वै विष्णुदेवता।
कन्या दास तथा दासी प्राजापत्याः प्रकीर्त्तिताः॥
प्राजापत्यो गजः प्रोक्त तुरगो यमदैवतः।"
ब्राह्मणः प्रतिगृह्णीयाद्धनार्थं साधुतस्तथा।
[illegible] मातङ्ग तिल [illegible] वर्जयेत्"॥
तत्र प्रतिग्रहे चावश्य [illegible]। [illegible]
करी [illegible] तथा कन्या दासदासी [illegible]।
[illegible] प्रतिग्रहः।
इति विष्णुधर्मोत्तरे, ब्रह्मपुराणे च। अस्मद् परद्रव्यदैवतं परिभाषाप्रकरणे प्रागुक्तम्।

२ (†) गजदान फलं यथा, वह्निपुराणे,—
"षोडश' [illegible] गजं वापि ब्राह्मणे प्रतिपादयेत्।
स [illegible] गजतुल्यो [illegible]।
ब्राह्मणे चैव [illegible] राजा भवति [illegible]।" इति

## (८८) अथ सूर्य्यगजदानविधिः ।

—*—

### 210. आदित्य पुराणे,—१(*) ।

निवेदयति यो नागं भक्त्या स्वर्णाद्यलङ्कृतम् ।
सूर्य्याय पर्व्वदिवसे तस्य पुण्यफलं शृणु ॥
समस्तैरावत-प्रख्यैर्गजेन्द्रैः सुशोभनैः ।
प्रक्रीड़ति महायानैः शतसंख्यैरनेकशः ॥
सप्तद्वीप-समुद्रायां क्षितौ नरपतिर्भवेत् ।
भुक्त्वातु विपुलान् भोगान् प्रलये समुपस्थिते ॥
सूर्य्ययोगं समासाद्य स तत्रैव प्रलीयते ।

इति सूर्य्यगजदान-विधानम् ॥

—*—

## (८९) अथ दासीदान विधानम् २(†) ।

—*—

### 211. कौर्म्मे°—

दासीं दद्याद् यथाशक्ति मूल्येनालङ्कृतां शुभाम् ।
सुवर्ण रजतैः सार्द्धं विधिवद्दक्षिणायुताम् ॥
वित्तानुसारात्तां दत्वा विप्राय गृहमेधिने ।
मोदतेऽप्सरसां लोके यावत् कल्पशत-त्रयम् ॥

### 212. वह्नि पुराणे,—

दासीदानं प्रकृत्योक्तम् ।

स्थिर नक्षत्रसंयुक्ते सौम्ये सौम्य-ग्रहान्विते ।
दानकालं प्रशंसन्ति सन्तः पर्व्वणि वा पुनः ॥
अलङ्कृत्य यथाशक्त्या वासोभिर्भूषणैस्तथा ।

---

१ (*) 'गामश्वं महीं हेम मणीनंच गजां तिलान् ।
ये प्रयच्छन्ति पापेषु निरताः सर्व्वदा भुवि ।
न तेषां रौरवः पन्थाः दत्वैषां दानमित्युत' ॥
इति वह्नि पुराणे यमब्राह्मणोपाख्यान—नामाध्याये ।

२ (†) दासी, भुजिष्या, परिचारिका इति । देव-दासी तु देवालये देवानां सेविका ।
'दासीदासा-भुजिष्ययोः' इति । 'भुजिष्याः सन्ति भारत' इति विराट पर्व्वणि ।

तद्दान मन्त्रास्तु—

इयं दासी मया तुभ्यं श्रीमती प्रतिपादिता ।
सदा कर्म्मकरी भोग्या यथेष्टं भद्रमश्नुते ॥ इति ।
पञ्चवर्षाधिका सातु चत्वारिंशत् समावधिः ।
दासी द्विजाय दातव्या दासदानेऽप्ययं विधिः ॥
दत्त्वा क्षमापयेत् पश्चाद् ब्राह्मणं वस्त्र-काञ्चनैः ।
अनुगत्वातु सीमायां द्विजं विसर्ज्जयेत्ततः ।
एवं दत्त्वा महाराज कृतकृत्योभवेत् पुमान् ।
इह लोके परे चैव सप्तजन्मन्यखण्डितः ॥
गृहकर्म्मकरीन्दद्यात्तरुणीं रूपशालिनीम् ।
बहुद्रव्योपसंयुक्तां ग्रामवेश्म समन्विताम् ॥

तथा च—

दासीं समीक्ष्य बहुशोगृहकर्म्मदक्षाम् ,
यो ब्राह्मणाय कुलशीलवते ददाति ।
विद्याधरेष्वधिपतिः स्त्वभि पूजितोऽसौ ,
मर्त्यः प्रयाति स्वजनैः सह विष्णुलोकम् ॥

इति दासी दानम् १(*) ।

—*—

१ (*) 'एवमेव दास दानम् । विधिस्तु दासीदानानुरूपः । स च दासः पञ्चदशविधः ।
'गृहजात स्तथाक्रीतो लब्धो दायादुपागतः ।
अनाकालभृतस्तद्वदाहितः स्वामिना च यः ।
मोक्षितो महतश्चर्णाद् युद्धे प्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ।
भक्तदासश्च विज्ञेयः तथैव वडवाहृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥' इति नारद स्मृतिर्नारदीयमनुस्मृतिर्वा ।
दास कर्म्म-नियुक्ता भार्या दासीति । ईषद्दासीषु स्वत्वम् तथा ।

## (६०) अथ रथदानम् ।

—*—

### 213. गारुडे—

गन्त्रीं तुरङ्ग संयुक्तां यो ददाति द्विजातये ।
सर्व्वकाम समृद्धात्मा स राजा जायते भुवि ॥

गन्त्रीनाम रथविशेषः १(*) ।

सचक्राख्यां युगोपेतां मत्तवारण-भूषिताम् ।
आस्तीर्णवृक्षास्तरणां योक्त्रयुक्तां सकूथकाम् २(†) ॥
युक्तां चतुर्भिस्तुरगै र्द्वाभ्यां वा शक्तितोयुताम् ।
बलीवर्द्दयुताञ्चापि द्विजाय प्रतिपादयेत् ।
पुण्येऽह्नि विप्रमाहूय कृत्वा वस्त्रादि-भूषितम् ।
सुदक्षिणां यथाशक्त्या दद्यात्प्रयत मानसः ॥

### तद्दान मन्त्रास्तु—

गन्त्री मिमां प्रयच्छामि विश्वकर्म्माधि दैवताम् ।
दानेनानेन भगवान् प्रीयतां मे परः पुमान् ३(‡) ॥
एवं प्रदाय विधिवद् गन्त्रीं मन्त्रेण मानवः ।
विमानेनार्क-वर्णेन देववद्दिवि मोदते ॥
इहलोके भवेद्राजा बलवान् धर्म्मवत्सलः ।

### 214. कूर्म्म पुराणे प्रकारान्तरेणोक्तम् ।

रथश्चतुर्बलीवर्दैर्व्यूढं ( ध्यानं ) ४(*) धान्यावृतन्त्रिधा ।
वित्तानुसारैः सर्व्वैश्च रथोपकरणैर्युतम् ॥
सदक्षिणश्च विप्राय दत्वा शिवपुरं व्रजेत् ।

---

१ (*) 'गन्त्री कम्बली वाह्यकम्' इत्यमरः ।
शकटिका इत्यर्थः । क्षुद्रा सा शकटीति ।
गम्यते यया सा गन्त्री । उणादिकात् ष्ट्रन् ।
ततः षित्वात् ङीष् ।

२ (†) 'वस्त्रास्तरणाम्' 'योक्त्रयुक्ता' मिति आदर्शान्तर धृतः पाठः ।
आस्तीर्य्य वस्त्रास्तरणां योक्त्रयुक्तां सकूथकामिति च ।

३ (‡) 'प्रीयतां मे हरः पुमान्' इति पुस्तकान्तरधृतः पाठः ।

४ (*) 'धान्याष्टमतमन्विता' पुस्तकान्तर धृतः पाठः ।

धान्याष्टतमं—अष्टादशधान्ययुतम्। त्रिधेति—शक्त्यनुसारात्। त्रिद्वयेक (धक) सुवर्णदक्षिणायुतमित्यर्थो। रथोपकरणानि—युग-योक्तृ-तोत्रादीनि ॥

215. तद्दानमन्त्रस्तु स्कान्दे,—

रथाय रथनाथाय नमस्ते विश्वकर्म्मणे।
विश्वभूताय नाथाय अरुणाय नमोनमः ॥ इति ।

इति रथदानविधानम् ।

—*—

## (६१) अथ प्रसङ्गाच्छिबिका-दानम् ।

—*—

216. वह्नि पुराणे, वशिष्ठः—

शृणु चान्यन्महीपाल महादान मनुत्तमम् ।
यस्य वै वृत्त मात्रेण मुच्यते नरकार्णवात् ॥
मार्गशीर्षे शुभे पक्षे समुपोष्य हरेर्द्दिनम् ।
माघ फाल्गुनयोर्व्वापि वैशाखस्य शरत्सु च ।
द्वादश्यां हरिमभ्यर्च्च्य कलसोपरि संस्थितम् ।
शङ्ख-शार्ङ्ग-गदा-चक्रधरं शक्त्या हिरण्मयम् ॥
शिबिकां चक्रवंशोत्था मृजुदारुमयीं शुभाम् ।
आनीय सन्निधिं विष्णोः शुभच्छत्र-समन्विताम् ॥
सम्पूज्य गण्डकां भूषां जागरं तत्र कारयेत् १(*) ।
गण्डकां–सोपधानामित्यर्थः ।
विद्याभिजन-सम्पन्नं विद्वांसं शास्त्रवित्तमम् ।
आज्ञासारं शुचिं दक्षं कलत्रापत्य-भूषितम् ॥
प्रातः सभार्य्यमभ्यर्च्च्य वासोभिः कर्णभूषणैः ।
उपानच्छूरिका-खड्ग-पट्ट-कञ्चुक-वेणिका २(†) ।
आदर्शस्थगिका-पानपात्रञ्च कांस्यभाजनम् ॥
स्थगिका, ताम्बुलपात्रं-ताम्बुल करङ्क इति ।

---

१ (*) 'चच गण्डका'मित्यत्र 'सता'मिति कचिदादर्श पुस्तके पाठः ।
'सम्पूज्य' इत्यत्र 'सम्पूज्य' इति कैमाद्रीयः पाठः ।
प्राक् शिबिकादान मन्त्रं सङ्क्षेपेणोक्ता इदानीं सप्रक्रियं विस्तारेण वक्ति ।

२ (†) 'वेणुका' कचिदादर्श पुस्तके पाठः ।

चत्वारो वृषभा देया धेनवश्च सुलक्षणाः ।
शिविका वाहनानान्तु तथैव छत्रधारिणः ॥
वृत्तिर्देया तथाम्भश्च वर्षार्हं ब्राह्मणस्य च ।
वर्षे वर्षे पुनर्देयं ब्राह्मणस्यैत देव तु ॥
वृत्तिरेव त्वसम्पत्तौ वर्षे वर्षेऽपि वार्षिकी ।
इहामुत्रातपत्राणं कुरु केशव मे प्रभो ! ॥
छत्रं त्वत् प्रीतये दत्तं ब्राह्मणाय मया शुभम् ।
देव देव जगन्नाथ विश्वात्मन् दत्तयाऽनया ॥
प्रभो शिविकया देव प्रीतो भव जनार्द्दन ! ।
दत्वा तज्ज्ञान-विदुषे सपत्नीकाय पुत्रिणे ॥

## अतः शिविकादान फलम्—

सुरापः स्तेनकृत् भङ्गी १(*) ब्रह्महा गुरुतल्पगः ।
शिविका दान माहात्म्यान्मुच्यते पातकात् स्फुटम् ॥
पितृपक्षं मातृपक्षं पत्नीपक्षन्तथैव च ।
आत्मानं बन्धुपक्षञ्च तारयेन्नरकार्णवात् ॥
भुक्त्वातु विपुलान् भोभान् इहा मुत्रसुखप्रदान् ।
सपत्नीकः सपितृको विष्णु सायुज्यमश्नुते ॥

अत्र सम्भावित-ब्रह्महत्यादि-पातकावलिनाश पितृमातृ-पत्नीपक्षात्मबन्धु-पुरुष-नरकार्णवतारण-पूर्व्वकं हि कामुष्मिक-भोगानु-भव पूर्व्वक स्ववंश-सहित-सात्मविष्णु-सायुज्य-काम इमां शुभछत्रो पानद्धुरिका-वृष-धेनु-चतुष्टय-समन्वितां वाहकछत्र-समेतां तुभ्यमहं सम्प्रददे नममेति दानवाक्यं ज्ञेयम् ।

इति शिविकादानम् २(:) ।

—*—

# (६२) अथ भूमिदानम् ।

—*—

## 217. कूर्म्म पुराणे—

गोचर्म्म मात्रं भूखण्डमधिकं वा स्व शक्तितः ।
त्रिधा सदक्षिणं कृत्वा दत्वा शिवपुरं व्रजेत् ॥
त्रिधेति—त्रिद्वेयक सुवर्णरूप-दक्षिणाभेदे त्रिधा इत्यर्थः ।

---

१ (*) 'सङ्गी'ति आदर्श पुस्तकान्तर धृतः पाठः ।
२ (:) 'शिविकानरदोला च याप्ययानं तथैव च' इति जटाधरः । अब्वद युक्तिकल्पतरावपि ।

218. तद्दाने बृहस्पतिः—१(*)—

—*—

अपि गोचर्म्ममात्रेण सम्यगदत्तेन मानवः ।
वीत पापो विशुद्धात्मा स्वर्गलोके महीयते ॥
दशहस्तेन दण्डेन त्रिंशद्दण्डै र्निवर्त्तनम् ।
दश तान्येव गोचर्म्म ब्राह्मणेभ्यो ददाति यः ॥
यत् किञ्चित् कुरुते पापं पुरुषो लोभ-मोहितः ।
तद् सर्व्वं भूमिदानेन क्षिप्रमेव विनश्यति ॥

219. वृद्ध वसिष्ठस्तु—

दशहस्तेन दण्डेन दशहस्तात् समन्ततः ।
पञ्चचास्या धिकान्दद्या देतद् गोचर्म्म कथ्यते ॥

220. मात्स्ये—

सप्तहस्तेन दण्डेन त्रिंशद्दण्डै र्निवर्त्तनम् ।
त्रिभागहीनं गोचर्म्म-मानमाह प्रजापतिः ॥
इति पारिभाषिकगोचर्म-विधानम् ।
मानेनानेन यो दद्यान्निवर्त्तन शतम्बुधः ।
विधिनानेन तस्यास्तु क्षीयते पापसंहतिः ॥
तदर्द्धमथवा दद्यादपि गोचर्म्म मात्रिकम् ।
भगवन् स्थानमात्राङ्कं सोऽपि पापात् प्रमुच्यते ॥
यत् किञ्चित् कुरुते पापं जन्म प्रभृति मानवः ।
अपि गोचर्म्म मात्रेण भूमिदानेन शुध्यति ॥
गवां शतं वृषश्चैको यत्र तिष्ठे दयन्त्रितः ।
तद्धि गोचर्म्ममात्रन्तु प्राहुर्वेद विदोजनाः २(†) ॥

---

१ (*) 'यत्किञ्चित् कुरुते पापं ज्ञानतोऽज्ञानतोऽपिवा ।
अपि गोचर्म्ममात्रेण भूमिदानेन शुध्यति ॥
गो चर्म्मलक्षणं च बृहस्पतिना दर्शितम्—
सप्तहस्तेन दण्डेन त्रिंशद्दण्डै र्निवर्त्तनम् ।
दश तान्येव गोचर्म्म दत्वा स्वर्गे महीयते' ॥
इति मिताक्षरायामाचाराध्याये ।

२ (†) 'प्राहुर्वेदविचक्षणाः' इति पाठं ग्रन्थान्तरे पाठः ।

एवं गोचर्म्मोऽधम मध्यमोत्तम-भेदेन शक्त्या व्यवस्था स्थेया। तथाच—

श्रोत्रियाय कुलीनाय विनीताय तपस्विने ।
विपन्नाय दरिद्राय सर्व्वभूत-हिताय च १(*) ॥
ईदृशाय शुभा शुद्धा दत्ता स्वल्पाऽपि वासव ! ।
कुलानि तारयेद्वी( द्धी )रः क्रमेण सप्त सप्तच ।

शुभा—सर्व सस्योत्पत्तियोग्या २(†)। शुद्धा—न्यायोपार्जिता।

221. **वृद्ध वशिष्ठः**—३(‡)

अपि पापकृतां राज्ञां प्रतिगृह्णेति साधवः ।
पृथ्वीं धान्यादि मिच्छन्ति पावनं ह्येतदुत्तमम् ॥

222. **भूमिदानमन्त्रो मात्स्ये,**—

तथा भूमिप्रदानस्य कलां नार्हन्ति षोड़शीम् ।
दानान्यन्यानि मे शान्ति र्भूमिदानाद् भवत्विह ॥ इति ।
नहि भूमेः परं वस्तु गौ सुवर्णाच्च किञ्चन ।
अतो भुवि गवि प्राप्तेः सुवर्णं दक्षिणा मता ॥ इति ।

223. **महाभारते च**—

न चोषरां न निर्द्दग्धां महीं दद्यात् कथञ्चन ।
न श्मशान-परीताञ्च न च पापि-निषेविताम् ॥
स्वदत्तां परदत्तां वा भूमिं योपि हरेन्नरः ।
षष्टिवर्षसहस्राणि विष्ठायां जायते क्रुमिरिति ४(+) ॥

इति भूमिदानम् ५(०) ।

—*—

१ (*) 'सर्व्वभूत हिताय च' इत्य साधुः पाठः क्वापि चादर्शे। 'कुलानितारयेद्धीरः' इति भिन्नः पाठः।

२ (†) 'सर्व्व सस्योत्पत्तिः' इति क्वचिदादर्शेऽन्यः पाठः।

३ (‡) 'भूमिदो भूमिमाप्नोति दीर्घायुश्च हिरण्यदः। तिल प्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम्'। इति मानवे धर्म्म शास्त्रे।

४ (+) 'स्वदत्तां परदत्तां वा यो हरेत वसुन्धराम्।
स विष्ठायां क्रमिर्भूत्वा पितृभिः सह मज्जति'॥ इत्यन्याकृतिः।

५ (०) 'सर्व्वेषामेव दानानां भूमिदान मनुत्तमम्।
यो ददाति महीं राजन् विप्रायाकिञ्चनाय वै।
चकुष्ठ नाम मघवा स भवेत् पृथिवीपतिः।
न भूमिदान महद्यं पवित्रमिह विद्यते॥
भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति।
उभौ तौ पुण्यमापन्नौ-नियतं स्वर्गगामिनौ'॥
इति महाभारते, पाण्डोत्तरखण्डे जनपञ्चाशदध्यायेच।

## (१३) अथ गृहदानम् १(*)।

—*—

### 224. कौर्म्मे—

शक्तितः सर्व्ववित्तेन पूर्णं गृहमपि त्रिधा।
सदक्षिणं द्विजे दत्वा ब्रह्मलोकं व्रजेन्नरः॥
सर्व्ववित्तेन-सर्व्वोपस्करणेनेत्यर्थः २(†)।

कांस्य ताम्रादिभाजन-सर्व्वधान्य-घृत-गुड़-शर्करा-गोवलीवर्द्द-दास-दास्युदुखल-मूषल-पीताम्बरादिरूपेण वित्तेन, त्रिधा-पूर्व्ववदुत्तमादि-पक्षत्रयेण सदक्षिणं गृहमिति।

गृहदाता सुखी प्राज्ञो वितृष्णः सर्व्ववस्तुषु ३(‡)।
प्रज्ञा-सुख-वितृड्ढ्यर्थं पात्रे देय मतो गृहम्॥

### 225. गारुड़े,—

ब्राह्मणाय दरिद्राय श्रोत्रियाय कुटुम्बिने।
क्रीड़ित्वा सुचिरं स्वर्गे मानुष्यं लोकमास्थितः॥
भवत्यव्याहतैश्वर्य्यैः सर्व्वकाम-समन्वितः॥
ऐष्टकं दारवं वापि मृन्मयं वापि शक्तितः।
सर्व्वोपस्करणोपेतं यो दद्यात् विपुलं गृहम्॥

### 226. व्यासः—

गृहन्दीप प्रभोद्योत शयनासन भाजनैः।
उपस्करैश्च सम्पूर्णं सर्व्वधान्य-प्रपूरितम्॥
ब्राह्मणाय दरिद्राय सुशीलाय ददाति यः।
तथाध्ययन शीलाय शृणु तस्यापि यत् फलम्॥

---

१ (*) 'यः कारयेन्मन्दिरं केशवस्य, पुण्यान् लोकान् सोऽर्ज्जयेत् शाश्वतान् वै।
दत्त्वारामान् पुष्पफलाभिपन्नान्, भोगान् भुङ्क्ते कामतः श्लाघनीयान्।
आसप्तमं पितृकुलं तथा मातृकुलं नरः।
तारयेदात्मना सार्द्धं विष्णोर्मन्दिरकारकः।
इमाश्च पितरो दैत्यगाथा गायन्ति योगिनः।
पुरतो यदुसिंहस्य ज्यामघस्य तपस्विनः।
अपि नः स्वकुले कश्चित् विष्णुभक्तो भविष्यति।
हरेर्मन्दिर कर्त्ता यो भविष्यति शुचिव्रतः'॥
इति वामन पुराणे शिवाध्याये।

२ (†) स वा अस्ति बहव सम्पत्ति दानपरः सदैव इति।

३ (‡) 'गृहदानात् सुखी' इति आदर्श पुस्तकान्तर पाठः।

देवैः पितृगणैर्युक्तो ब्रह्मर्षिमनुजर्षिभिः १(*) ।
ब्रह्मवर्षशतान्येव दश तिष्ठन्त्यनामयः २(†) ॥
तस्मादिह समागत्य सप्तद्वीपाधिपो भवेत् ॥
बहुप्रदो बहुधनो द्विजोवा वेदपारगः ॥
उपस्कराः—मञ्च-तुलिकोपधान-कांस्य-भाजनादयः ।
सर्व्वधान्यानि-परिभाषायां ज्ञेयानि ॥

### 227. मात्स्य पुराणे—

पक्वेष्टकामयं कृत्वा शैलजं वापि दारुजम् ।
मृन्मयं वापि भवनं शुभलक्षण-संयुतम् ।
मत्तवारणशोभाढ्यं धेन्वाद्यैव समन्वितम् ३(‡) ।
इदानीं गृहनिर्म्माणद्रव्याण्युच्यन्ते—
अर्ज्जुनैः सरलैः रम्यैः शालैश्चैव मनोरमैः ॥
तिलिसैः सर्ज्जवृक्षैश्च कदम्बैः सह वञ्जुलैः ।
शुभस्थान समुत्पन्नै र्वास्तुलक्षण संयुतम् ॥
अत्रार्ज्जुनादि वृक्षोपादानं वास्तु शास्त्रोक्त-४(+)
वृक्षविशेष ग्रहणार्थम् ।
एतैर्द्दारुभिर्भवनं कृत्वेति सम्बन्धः ५(×) ।
स्थापनञ्च यथान्यायं भूमेश्चैवतु शोभनम् ॥
मार्ज्जनं सिञ्चनञ्चैव मण्डनीयेन कारयेद् ६(०) ।
मङ्गल्यानुपहारांश्च वास्तु विद्योदितां स्तथा ॥
देवता पञ्चकं तत्र चत्वारिंशत् समन्वितम् ।
पूजयित्वा यथान्यायं ततोदध्याद् गृहं गृही ॥

---

१ (*) 'ब्रह्मर्षि मनुजर्षिभि' रित्यत्र 'सर्व्वभोगसमन्वित'मिति पादशान्तर धृतः पाठः ।
२ (†) 'ब्रह्मा वर्षशतान्येव दश तिष्ठन्त्यनामयाः' इति हेमाद्रिधृतः पाठः ।
३ (‡) 'मत्तवारणशोभाढ्य' मिति चतुर्वर्गचिन्तामणिधृतः पाठः ।
४ (+) वास्तुशास्त्र'—यथा 'मयमतम्' 'शिल्परत्नम्' 'मनुष्यालयचन्द्रिका' मण्डन सूत्रधारीयम्, श्रीभोजराजीय-समराङ्गन-सूत्रधारम्, विश्वकर्म्मप्रकाशः' 'प्रासादमण्डनं' मूलसन्मग्रन्थश्चेति । एतेषु मयमतं श्रेष्ठम् । एवं बहुधा वास्तु ग्रन्थाश्च वास्तुशास्त्रादीनां दृश्यन्ते ।
५ (×) प्रासाद-भवन-निर्म्माणे के च वृक्षाः शुभदाः केचाशुभदास्तत् सर्व्वं वास्तुशास्त्रे लिखितमस्ति ।
६ (०) वास्तु-मण्डल-निर्म्माणात्-प्राक्भूमेर्मार्ज्जनं सिञ्चनञ्च मण्डनीयेन कारयेदित्यर्थः । अत्र 'मण्डनीयेन' इत्यत्र शान्तनीयेति पाठान्तरमस्ति ।

# अत्र वास्तु मण्डलोद्धार पूजाद्युक्तम् ।

228. **मत्स्यपुराणे—**

एकाशीति पदं कृत्वा रेणुभिः कनकेन च १(+) ।
पश्चात् पिष्टेनानुलिम्पेत् सूत्रेणालोड्य सर्व्वतः ॥

## अथरेखाकरणम्—

दश पूर्व्वापरारेखा दशचैवोत्तरायताः ।
सर्व्ववास्तु-विभागेषु विज्ञेया न कदाचन ॥
एकाशीतिपदं कृत्वा वास्तुवित् सर्व्ववास्तुषु ।
पदस्थान् पूजयेद्देवान् त्रिंशत्पञ्चदशैवतु ॥
द्वात्रिंशद्वाह्यतः पूज्याः पूज्याश्चान्तस्त्रयोदश ।
मध्ये नवपदस्त्वेकः चत्वार स्त्रिपदाः स्मृताः ॥
एवं प्रतिष्ठिता देवाः चत्वारिंशच्च पञ्च च ।
नामत स्तान् प्रवक्ष्यामि स्थानानि च निबोधत ॥
ईशान कोणादिसुरान् पूजयेत् क्रमशो न च २(*) ।

## अत्र नामस्थाने यथा—

शिखी चैवाथ पर्ज्जन्यः जयन्तः कुलिशायुधः ३(†) ॥
सूर्य्यः सत्यो भृशश्चैव आकाशो वायुरेव च ।
पूषाथ वितथश्चैव गृहक्षत यमावुभौ ॥
गन्धर्व्वो भृङ्गराजश्च ४(‡) मृगः पितृगण स्तथा ।
द्वौवारिकोऽथ सुग्रीवः पुष्पदन्तश्च वारुणः ५(+) ॥
असुरः शोष पापौ च रोगोहिर्मुख एवच ६(×) ।
भल्लाटः सोमसुर्य्यौ च अदितिश्च दितिश्च वै ७(||) ॥

---

१ (+) 'एकाशीतिपद-वास्तुमण्डल-करणे प्राग्रेणुभिः कनकेन च सम्पाद्यम्। पश्चात्तण्डुल चूर्णादिना च।

२ (*) एकाशीतिमण्डलं चतुः षष्टिपदमण्डलञ्चेतिद्वयं स्मृति-पुराण-वास्तुशास्त्रेषु प्रसिद्ध तयोरेकाशीतिपदं श्रेष्ठम्। यथान्यः कोष्ठेषु ईशानादिदिक्षु शिखिप्रभृतीनां देवानां विन्यासः। वास्तुमण्डलं परपृष्ठे द्रष्टव्यम्।

३ (†) विभिन्नग्रन्थे मयमतादौ कोष्ठस्थदेवतानां कश्चित् नाम प्रभेदो दृश्यते।

४ (‡) 'भृङ्गराजश्चे'त्यत्र 'भृगुराजश्चे'ति पाठान्तरमस्ति।

५ (+) 'वारुण' इत्यत्र 'जलाधार' इति भिन्न-पाठः।

६ (×) 'असुरश्चैव शोषश्च पापयक्ष्मा च रोगकः' इति हेमाद्रिधृतः पाठः।

७ (||) 'सोम सूर्य्यौ' चेत्यत्र सोमनागौ' चेति हेमाद्रिः।

कलावान् मुख्यभल्लाटौ सोमनागौ तथापरौ ।
अदितिश्च दितिश्चैव स्थाप्याः प्रणव-नामभिः ॥

वहिर्द्वात्रिंशदेतेतु तदन्त श्चतुरः शृणु १(*) ।
आपश्चैवाथ सावित्रो जयो रुद्र स्तथैव च ॥

अर्य्यमा सविता चैव विवस्वान् विबुधाधिपः ।
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् ॥

अष्टमस्त्वापवत्सस्तु परितो ब्रह्मणः स्मृताः ।
आपश्चैवापवत्स् सश्च पर्ज्जन्योऽग्निर्दितिस्तथा ॥

पदिकानान्तु वर्गोऽयमेवं कोणेष्वशेषतः ।
तन्मध्येतु वहिर्विंशं द्विपदास्तेतु सर्व्वतः २(†) ॥

अर्य्यमाच विवस्वांश्च मित्रः पृथ्वीधरस्तथा ।
ब्रह्मणः परितो दिक्षु त्रिपदाश्चैव सर्व्वतः ॥

एतत् पूर्व्वकं गृहारम्भन्तु कुर्य्यादित्युक्तम्—

## तत्रैव—

वास्तौ परीक्षिते सम्यग् वास्तुगेहे विचक्षणः ।
वास्तूपशमनं कुर्य्यात् समिद्भिर्व्वलि-कर्म्मणा ॥
जीर्णोद्धारे तथोद्याने तथाच नववेश्मनि ३(‡) ।
नव प्रासादभवने प्रासाद परिवर्त्तने ॥

—*—

---

१ (*) 'पूर्व्वं मण्डलवहिर्द्देवता द्वात्रिंशत् संख्यकाः शिख्यादय उक्ताः, पश्चान्मण्डलान्तर्द्देवताः आपादयो यथारीत्या उच्यन्ते । अन्यच्चितेऽवलोकनीयम् ।

२ (†) तन्मध्ये-वास्तुमण्डलमध्ये, वहिर्विंशत्—तद्वहिर्द्देवताः द्विपदाः विंशतिसंख्यका ज्ञेयाः । वास्तुशास्त्रमतेच मण्डल-वहिः स्थाः 'कौशिकीच-विदारीच पूतना-पापराक्षसी प्रभृतयः देव्यः सन्ति ।

३ (‡) जीर्णोद्धारे—जीर्णदेवता तदालयादीनां पुनः संस्कारे । ज्योतिः—शास्त्रीय—तन्त्र-शास्त्रोक्त नियमेन शल्योद्धाररीत्या वास्तु विघ्नस्योपशमनं कार्य्यम् । प्राक्ज्योतिषशास्त्ररीत्या वास्तुस्थाननिर्णयः । पश्चात्तन्त्रशास्त्ररीत्या शल्योद्धारो विघ्नापसारणञ्च ।

,, उद्याने—पूतारामेच ।

| | | | | |
|---|---|---|---|---|
| रोगः | अहिः | मुख्यः भल्लाटः सोमः भुजः अदितिः | दितिः | शिखी |
| पापः | भद्रः | | आपः | पर्ज्जन्यः |
| शोषः | राजयक्ष्मा | पृथ्वीधरः | आपवत्सः | जयन्तः |
| असुरः | | | | कुलिशायुधः |
| जलाधिपः | मित्रः | ब्रह्मा | अर्य्यमा | सूर्य्यः |
| पुष्पदन्तः | | | | सत्यः |
| सुग्रीवः | विबुधाधिप | विवस्वान् | सविता | भृशः |
| दौवारिकः | जयः | भृङ्गराजः गन्धर्वः यमः बृहत्क्षतः वितथः | सावित्रः | आकाशः |
| पितृगणः | मृगः | | पूषा | वायुः |

## 229. एकाशीतिपदवास्तुमण्डलम्।

एतन्मत्स्यपुराणोक्तं धर्म्मशास्त्रोक्तञ्च। वास्तुशास्त्रमते परमशायिपदमेतत्। एवं चतुःषष्टिपदं वास्तुमण्डलं यत्तद्—मण्डुकपदम्।

'एकाशीतिपदं लिख्य वास्तुमध्येतु' इत्यादिनात्र प्रयोजनमेतत् सूचितम्। चतुःषष्टिपदवास्तुमण्डलस्यात्र नावसरः १(०)। कोष्ठस्थ-देवतानां नामभेदो नानाग्रन्थे दृश्यते। पुष्कलं शब्दकल्पद्रुमाभिधाने वास्तुशब्देऽस्ति।

१ (०) तत्र मण्डलं सर्व्वदेवगृहादिषु ज्ञेयम्। मध्ये नवपदं ब्रह्मा।

230. **लिङ्गपुराणे—**

'एकाशीतिपदं वास्तु मानुषं प्रति सिद्धिदम् ।
चतुःषष्टिपदं वास्तु सर्व्वदेव-गृहं प्रति' ॥

231. **देवीपुराणे च—**

'प्रासादेतु चतुःषष्टि रेकाशीति पदं गृहे' ।
द्वाराभि वर्त्तने तद्वत् प्रासादेषु गृहेषु च ॥
वास्तूप शमनं कुर्य्यात् पूर्व्वमेव विचक्षणः १(*) ।
एकाशीतिपदं लिख्य वास्तुमध्ये तु पिष्टकैः ॥
होम स्त्रिमेखले कार्य्यः कुण्डे हस्तप्रमाणके ।
यवैः कृष्णै स्तिलै श्चैव समिद्भिः क्षीरवृक्षजैः ॥
पालाशैः खादिरै र्वा पामार्गोदुम्बर सम्भवैः ।
कुशदूर्व्वामयै र्व्वापि मधुसर्पिः समन्वितैः ॥
कार्य्यस्तु पञ्चभिर्व्विप्रै र्विल्ववीजैरथापि वा ।
होमान्ते भक्ष्य भोज्यैस्तु वास्तुदेशे बलिं हरेत् २(†) ॥
तद्विशेष नैवेद्यमिदं दद्यात् ( ध्यात् ) क्रमेणतु ।

**अतः कस्मै मण्डलस्थदेवाय कोवा बलिर्देयस्तदुच्यते—**

ईशकोणे घृताक्तन्तत् शिखिने विनिवेदयेत् ॥
ओदनं सोत्पलं दद्यात् पर्ज्जन्याय घृतान्वितम् ।
जयन्ताय ध्वजं पीतं पैष्टंश्च कूर्म्मञ्च विन्यस्येत् ३(‡) ॥
इन्द्राय पञ्चरत्नानि पैष्टञ्च कुलिश न्तथा ॥

---

१ (*) वास्तुशास्त्रे ;—मयमत-शिल्परत्न-समराङ्गनसूत्रधार-मूलस्तम्भ शास्त्रादिषु वास्तु विघ्नोप-शमन-हवनमस्तीति प्रागपिप्रोक्तम् ।
'एकाशीतिपदं कृत्वा रेखाभिः कनकेनतु ।
पश्चात् पिष्टेन चालिख्य तत् सूत्रेणालोड्य सर्व्वतः' ॥
'एकाशीतिपदं कृत्वा वास्तुवित् सर्व्ववास्तुषु ।
पदस्थान् पूजयेद्देवा स्त्रिंशत् पञ्चदशैवतु ।
द्वात्रिंशद्बाह्यतः पूज्याः पूज्याश्चान्त स्त्रयोदश' ॥
इति मात्स्ये वास्तुनिर्णये सप्तविंशत्युत्तर द्विशततमाध्याये ।

२ (†) वास्तुमण्डलकोष्ठस्थानां शिख्यादि देवानां पूजने क्रमशः स्वस्व पृथक् पृथग् बलिद्रव्य दान-विधिरनेन उच्यते ।

३ (‡) जयन्तादीनां कस्मै कीदृशं बलिं केनवा द्रव्येणानेन तत्तदुच्यते ।

वितानकञ्च सूर्य्याय धूपं शक्तुं तथैव च ।
सत्याय घृत-गोधूमं मत्स्यान् दद्याद्भृशाय च ॥
सष्कुली-श्चान्तरीक्षाय दद्यात् सक्तूं श्च वायवे ।
लाजाः पूष्णे तु दातव्या वितथे वर्णकौदनम् ॥
गृहक्षताय मध्वन्नं यमाय पिशितौदनम् ।
गन्धौदनञ्च गान्धर्व्वे भृङ्गे मेषस्य जिह्विकाम् ॥
दौवारिके दन्तकाष्ठं पैष्टं कृष्णवलिं तथा ।
सुग्रीवे पूपकान्दद्यात् पुष्पदन्ताय पायसम् ॥
मृगाय यावकान्दद्यात् पितृभ्यः कृशरां स्तथा ।
कुशस्तम्बेन संयुक्तं तथा पद्मञ्च वारुणे ॥
पैष्टं हिरण्मय न्दद्यादसुराय सुरासवम् ।
घृतौदनञ्च शेषाय यवान्नैः पापयक्ष्मणे ॥
घृत लड्डुकां स्तु रोगाय नागपुष्पं फणावते ।
भक्ष्यं मुख्याय दातव्यं मुद्गौदन मतः परम् ॥
भल्लाटे स्थानके दद्यात् सोमाय मधु पायसम् १(*) ।
नागाय शालिकं पिष्टं अदित्यै लोपिका स्तथा ॥
दितेस्तु पूरिकान्दद्या दित्येवं वाह्यतो बलिः २(+) ।
क्षीरमापाय दातव्यं आपवत्साय वै दधि ॥
सावित्रे लडडुका न्दद्यात् समरीचं कुशोदकम् ।
सवि तु गुड़पूपांश्च जयाय घृत-चन्दनम् ॥
विवस्वते पुनर्दद्या द्रक्तचन्दन-पायसम् ।
हरितालौदन न्दद्यादिन्द्राय घृत-संयुतम ॥
गुड़ौदनन्तु मित्राय रुद्राय घृत पायसम् ।
आमपक्कं तथा मां सं देयं स्याद्राज-यक्ष्मणे ॥
पृथ्वीधराय मांसानि कुष्माण्डानि च दापयेत् ।
शर्करा-पायसन्दद्या दर्य्यम्ने पानमेवतु ॥
पञ्चगव्यं,यवांश्चैव तिलाक्षत हविश्चरुम् ॥

---

१ (*) 'स्थान क' मित्यपि पाठान्तरमस्ति।

२ (+) —इत्यन्तं वास्तुदेवानां शिख्यादीनां बलिकथनम्। —ते देवा द्वात्रिंशत्संख्यकाः नवकोष्ठे मध्ये ब्रह्मा, तदपि सार्द्धविंशति कोष्ठस्थ-देवानां त्रिधा विभागः।

*भक्ष्यं भोज्यञ्च विविधं ब्रह्मणे विनिवेदयेत् ।*
*एवं सम्पूजिता देवाः शान्तिं कुर्व्वन्ति ते सदा १(*) ॥*

**पुनरपि तृप्त्यर्थं देयद्रव्यमुच्यते—**

सर्व्वेषां काञ्चनं दद्याद् ब्रह्मणे गां पयस्विनीम् ।
राक्षसानां वलिर्देयो मांसौदन समन्वितः ॥
ईशाने नागमातृभ्य श्चरुञ्च विनिवेदयेत् २ (†) ।
मांसौदनं सरुधिरं मत्स्य-खण्डैश्च संयुतम् ॥
पीतरक्तं बलिन्दद्यात पूतना यातु राक्षसी ।
वायव्ये पापराक्षस्यै मत्स्यं मांसं सुरासवम् ।
पायसञ्चापि दातव्यं स्वनाम्ना सर्व्वतः क्रमात् ॥
नमस्कारानुयुक्तेन प्रणवाद्येन सर्व्वतः ।
प्राङ्मांसौदनं स्कन्दाय दक्षिणस्यां तथा परम् ।
कृशरा-पोलिकादान मर्य्यम्ने मूल-मन्त्रतः ॥
मांसं सरुधिरं दद्याच्च जृम्भकाय तु पश्चिमे ३(‡) ।
पोलि—पिठोच्छयेरक्ताक्त-पिष्टानन्तरतोऽपि च ।
भक्ष्यभोज्यैर्दिगीशानां तत्तन्मन्त्रै र्बलिं हरेत् ।
सर्व्वासां पायसं साज्यं यथोक्त वल्यसम्भवे ॥
तदभावे दर्भपुष्पै र्दध्यक्षत-घृतैर्वलिः ४(०) ।
गोमयेनोपलि-प्रायां मण्डलात् पूर्व्वतः क्षितौ ॥
गन्धादि पूर्व्वकं सर्व्वं भौतिकञ्च बलिं हरेत् ।
भूतेभ्योऽथ पितृभ्यश्च राक्षसेभ्यो नमो नमः ॥
पिशाचेभ्योऽथ मातृभ्यो गणेभ्यश्च पृथक् पृथक् ।
दिव्यान्तरिक्ष-भौमेभ्यः प्रणवादिनमोऽन्तकैः ॥
ततः सर्व्वौषधि स्नानं यजमानस्य कारयेत् ।
द्विजांस्तु पूजयेद् भक्त्या ये चान्ये गृहमागताः ॥

१ (*) 'एवं सम्पूजयित्वा' इति आदर्श पुस्तकान्तर पाठः ।
२ (†) 'ईशार्धभागे' इति अन्यादर्शधृतः पाठः ।
३ (‡) इति दिग् देवतानां कोणस्थ देवानां च बलिद्रव्यदानव्यवस्था
" 'पि लि पिच्छये' इति पाठोऽपि अस्ति ।
४ (०) तदभावे,—प्रागुक्तविहितबलिद्रव्याभावे इति ।

एतद्वास्तूपशमनं कृत्वा कर्म्म समाचरेत्।
प्रासाद-भवनोद्यान-प्रारम्भे परिवर्त्तने॥
सु(पु)रवेश्म प्रवेशेच सर्व्वदोषोपशान्तये।
वास्तुपशमनं कृत्वा ततः सूत्रेण वेष्टयेत्॥
रक्षोघ्न—१(+) पावमानेन सूक्तेन भवनादिकम् २(†)।
नृत्य-मङ्गल वाद्यैश्च कुर्य्याद् ब्राह्मण-वाचनम्॥

**इतःपूतकृत्यस्यास्य फलकीर्त्तनम्—**

अनेन विधिना यस्तु प्रति सम्वत् सरं बुधः।
गृहे वायतने कुर्य्यान्न स दुःखमवाप्नुयात्॥
नच व्याधिभयन्तस्य नच बन्धु धनक्षयः।
जीवेद् वर्षशतं स्वर्गे कल्पमेकं वसेन्नरः॥ इति।

**232. गृहादि दान मन्त्रो—ब्रह्मवैवर्त्त पुराणे—**

इदं गृहं गृहाणत्वं सर्व्वोपस्कर संयुतम्।
तव विप्र! प्रसादेन ममास्त्वभिमतं फलम्॥
एव मेकैकशो दत्त्वा प्रणिपत्य समर्पयेत्।
'स्वस्ती'ति ब्राह्मणै र्वाच्यं 'कोऽदादिति' च पूजितैः ३(*)॥
यद् यस्य विहितं पूर्व्वं तत्तस्मै प्रतिपादयेदिति।

**233. मत्स्य पुराणेऽपि—**

ग्रामे दानदिने कार्य्य मैशान्यां हस्तसम्मितम्।
चतुरस्रं समं कुण्ड-मेखला-योनि-भूषितम्॥
पूर्व्वोत्तरे हस्तमिताच वेदी,
गृहादि-देवेश्वर पूजनाय।
अर्च्चार्च्चनं ब्रह्मशिवाच्युतानाम्।
सूर्य्यस्य कार्य्यं फल पुष्पगन्धैः॥

१(+) 'रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्। रक्षोहणो वो वलगहनोऽवनयामि वैष्णवान्। रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवान्। रक्षोहणौ वां वलगहना उपदधामि वैष्णवी। रक्षोहणौ वां वलगहनौ पर्य्यूहामि वैष्णवी। वैष्णवमसि वैष्णवा स्थ।' (शुक्लयजुर्वेदे। ५।२३, ५।२५। परमहंस-परिव्राजकाचार्य्य-श्रीमन्मधुसूदनसरस्वतीनां-श्रीभगवद्गीताव्याख्यायोक्त—'स्थाने हृषीकेश तव प्रकीर्त्या' इत्यादि श्लोकां रक्षोघ्नमन्त्रत्वमभिमत।

२(†) 'पावमानी' सूक्तानि, वैदिकानि पठेत्।

३(*) ॐ स्वस्तीति ब्राह्मणः प्राग्वदेत्। ततः स्वस्तिमन्त्रश्च। ततः 'ॐ कोऽदात् कस्मा अदा' दिति मन्त्रं पठेत्। यस्मैति,—गुरवे, आचार्य्याय, होत्रे, ब्रह्मणे, इति दातव्यम्।

द्वारेषु कार्य्याणि च तोरणानि,
पत्रैरपि क्षीर-वनष्पतीनाम् ।
मध्येच संस्थाप्य च पूर्णकुम्भम् १(†)
स्रग्गन्ध धूपाम्बर रत्न युक्तम् २(‡) ॥

गृह्योक्तेन विधानेन कृत्वा चाग्नि मुखन्ततः ।
गव्येन पयसा दिव्यं स्थालीपाकं चरुं श्रपेत् ॥

ततश्च तच्चैव चरुं जुहोमि, मध्यस्थिताभ्यो गृह-देवताभ्यः ।
बलिञ्च सम्यग् विधिवत् प्रपूज्य, क्षीरेण धाराः परितस्तु दद्यात् ॥

ब्राह्मण मर्च्चयेत् पूर्व्वं परितुष्टं क्षमापयेत् ।
शय्यां दक्षिणभागे तु सोपधानां सदीपिकाम् ॥
सितवस्त्रैश्च सञ्छन्नां लक्ष्मी-नारायणान्विताम् ।

## लक्ष्मीनारायण प्रतिमोक्ता—

पद्मासन गतं कुर्य्या त्तञ्च देवं चतुर्भुजम् ।
दक्षिणाधः करे पद्मं शङ्खमूर्द्ध करे न्यसेत् ॥

वामोर्द्ध्वे च भवेच्चक्रं लक्ष्मीपृष्ठेऽपरः करः ।
वामोत्सङ्गगता लक्ष्मीः रत्नपात्रकरा भवेत ।
दक्षिणस्तु भुजो देव्याः पृष्ठे देवस्य चक्रिणः ॥ इति

सिताम्बरं कुण्डल हेम भूषितम् ,
केयूर-कण्ठाभरणाभि-रामम् ।
पत्नीसमेतश्च करे गृहीत्वा,
दाता पठेन्मन्त्र मिमं गृहस्थः ॥

एह्येहि नारायण दिव्यरूप !
सर्व्वामरैर्वन्दित पादपद्म !
शुभाशुभानन्द सधाम धीर-
लक्ष्मीयुत स्त्वं हिं गृहं गृहाण ३(*) ॥

१ (†) 'रत्नकुम्भम्' इति चादर्श पुस्तकान्तरस्थः पाठः । 'देशांश्च संस्थाप्य' इति पुस्तकान्तरधृतः पाठः ।
२ (‡) प्रागुक्त वस्त्रादीनां लक्षणं तुलापुरुषप्रकरणे उक्तम् । 'वस्त्रयुक्त' मिति क्वचित् सन्दर्भे पाठः ।
३ (*) 'शुभामधीश' इत्यन्यादर्श-पुस्तकधृत. पाठः ।

नमः कौस्तुभनाथाय हिरण्य कवचाय च ।
क्षीरोदार्णव सुताय जगद्धात्रे नमोनमः ॥
नमो हिरण्य गर्भाय जगन्नाथाय वै नमः ।
चराचरस्य जगतो गृहभूताय ते नमः १(*) ॥
भूर्लोक-प्रमुखालोका स्तव देहे व्यवस्थिताः ।
नन्दन्ति यावत् कल्पान्तं तथा तस्मिन् भवान् गृही २(†) ॥
पञ्चयज्ञ-क्रियायुक्तः वसेदाचन्द्रतारकम् ।
एव मुक्त्वातु देवेशं सपत्नीकं द्विजोत्तमम् ॥
तिल प्रस्थोपरिस्थायां शय्याया मुपवेश्य च ।
वदेदिदं ततो वाक्यं सर्वधान्य गुतन्त्विदम् ॥
सर्व्वोपस्कर-संयुक्तं गृहं गृह्य द्विजोत्तम ।
तत्रोपकरणं सर्व्वं दाम्पत्यस्य निवेदयेत् ३(‡) ॥
पादुकोपानहच्छत्र-भूषणासन-भाजनैः ।
सम्पन्नं चार्थसम्पन्नं गृहोपस्कर-भूषणम् ।
सर्व्व-सम्पूर्णमेवास्तु पठित्वैवं निवेदयेत् ॥

234. **एतद्दानफलमपि तत्रैव मत्स्यपुराणे—**

य एवं सर्व्वसम्पन्नं पक्वेष्टं विनिवेदयेत् ।
कल्पकोटि-शतं यावत् ब्रह्मलोके महीयते ॥
शैलजं दारुजं वापि यो दद्याद्विधि पूर्व्वकम् ।
वसेत् क्षीरार्णवे रम्ये नारायण-समीपतः ॥
मृन्मयञ्चैव योदद्याद् गृहञ्चोपस्करान्वितम् ४(*) ।
पुरेषु लोकपालानां प्रीत्या मन्वन्तरं वसेत् ॥

---

१ (*) 'वै नमः' इति पाठान्तरमस्ति ।

२ (†) 'भवने गृही' इति पुस्तकान्तर-धृतः पाठः ।

३ (‡) 'दम्पत्यो र्विनिवेदये' दिति-आदर्शान्तरधृतः पाठः ।

४ (*) गृहच्छाया विवरणं मयमताख्यग्रन्थे शिल्परत्ने प्रासादमण्डने चास्ति-प्रागुक्तमन्यत् ।
मृत्तिका-निर्म्मितगृहं,—रत्नज-धातुज-स्फटिक-शैलज-दारुजादिगृहेभ्यः स्वल्पपुण्यजनकम्,
तद् यदि देवाद्यायतनं स्यादिति ।

कलिकलुष-विमुक्तः पूजितः सिद्ध-सङ्घैः.
अमर-कमलमाला वीज्यमानोऽप्सरोभिः ।
पितृशतमपि बन्धून् पुत्र पौत्र-प्रपौत्रान्,
अपि नरकनिमग्नं तारयेदेक एव ॥ इति

दिव्य भोगां स्ततो भुक्त्वा राजराजो भवेद्भुवि १(†) ।
नारायण-बलोपेतो नारायण-परायणः ॥
नारायण-कथासक्तो जीवेद् वर्षशतं सुखी ।

अथैषां वचनानामेकवाक्यतया गृहदान-प्रयोगः प्रस्तूयते । गृहदानं दित्सुः प्रागुदग् वा समासन्नजला मनुपहता मनुषरां वास्तु-शास्त्रोक्तगुणां विशुद्धां भुवं परिगृह्य, तत्र समे स्थाने गोमयेनोपलिप्ते चतुरस्रदेशे शङ्कुच्छायादिना प्राचीं कल्पयित्वा तत्र सुधादिलिप्तेन २(‡) सूत्रेण समान्तराल-पूर्व्वापरयुत-दक्षिणोत्तरायत-नवकोष्ठात्मक-मेकाशीतिपदं वास्तुमण्डलं विरच्य, तन्मध्ये कोष्ठनवक मेकीकृत्य, तत्र ३(०) ब्रह्माणं विन्यस्य तत् पूर्व्वादि चतुर्दिक्स्थ-कोष्ठत्रयमेकीकृत्य तेषु क्रमादर्यमणं विवस्वन्तं मित्रं पृथ्वीधरं विन्यस्य, तेषामुभय पार्श्वस्थेशानादि कोष्ठेषु चतुष्टये प्रादक्षिण्येनापवत्स-सवितृ-विबुधाधिप राजयक्ष्मणो विन्यसेत् ।

तत्र आपः आपवत्सस्येशान-कोष्ठे सवितु राग्नेय-कोष्ठे सावित्रम्, विबुधाधिपस्य नैऋत्यकोष्ठे जयः. राजयक्ष्मणः वायव्यकोष्ठे भ(रु)द्रं विन्यस्य, अथ वहिरीशानादि-सर्व्वकोष्ठेषु प्रादक्षिण्येन शिख्यादि—दित्यन्तं तान् विन्यसेत् ४(*) ।

एवं संस्थाप्य 'होमस्त्रिमेखले कार्य्यं' इत्याद्युक्त प्रकारेण होमं हुत्वा, ततः 'ईशकोणे घृताक्तन्तत् शिखिने विनिवेदये' दित्याद्युक्त रीत्या सर्व्वेभ्यो बलीन्दद्यात्। प्रतिस्विक कल्पे वा तेभ्यः सर्व्वेभ्यः पायस-बलीन्दद्यात ।

ततः कृताभिषेकः कर्त्ता ब्राह्मणा न्दक्षिणान्नादिभिः सन्तोष्य, तत्र भूमौ वास्तु-शास्त्रानुसारेण ५(†) पक्वेष्टकादिमयं गृहं निर्म्माय, सुधा-धात्वादिभिरलङ्कृत्य गृहोपकरणै-र्गृहं सम्पूर्णं कृत्वा, सति सम्भवे गृहाङ्गने ईशानदिग्भागे मण्डपं कृत्वा, तोरणे वस्त्रादिना

१ (†) 'दिव्यभोगा' नित्यादिना गृहदानफलमुक्तम् ।
२ (‡) सुधाद्यवलेपविशेषः सुदृढः दृढसंवेष्टितोऽयः ।
३ (०) तत्र मध्ये ब्रह्मा चतुः कोष्ठे स्यात्, नवकोष्ठे वा ।
४ (*) एकाशीतिपद वास्तुमण्डलकोष्ठे शिख्यादि दित्यन्तान् क्रमेण, पूजये द्देवान् व्यापयेद्-यथाविधि बलीन्दद्यात् ।
५ (†) मयमत-शिल्परत्न-विश्वकर्म-प्रकाश-प्रासादमण्डनाख्य-ग्रन्थानुसारेण इष्टकादि गृह-निर्म्माणं कार्य्यमेतदपि प्रागुक्तम् । रक्षोघ्न-पवमान-मन्त्राः प्रागुक्ताः ।

समलङ्कृत्य, पूर्व्ववद्वास्तु-पूजा होमौ विधाय कलशोदकेनाभिषिक्तो यजमानो गीतमङ्गल-वाद्यादिभि र्गृहं रक्षोघ्न-पवमानमन्त्रै स्त्रिपु आप्रदक्षिणमावेष्ट्य, परितः क्षीरधारां पातयित्वा तदुपरि प्रस्थमात्रां स्तिलान् प्रक्षिप्य, तत्रोपधानादि-सर्व्वोपस्कर-सहिता-मुपरि-स्थापित-सुवर्ण-नारायण-प्रतीमां (आपो) निधाय, तत्र नारायणं सम्पूज्य, प्रतिग्रहीतारं वृत्त्वा कुण्डल-वस्त्र-मुद्रिका-केयुरादिभिः सपत्नीक मलङ्कृत्य, तं करे गृहीत्वा सुलग्ने मङ्गल-घोषं जायमाने गृहं प्रविशेत १(*)।

एह्येहि नारायण, दिव्यरूपेत्यादि — वसेदाचन्द्र तारकमित्यन्तः पूर्व्वोक्त-मन्त्रः पठनीयः २(†)।

ततः पूर्व्वस्थापितासनस्योपरि उदङ्मुखं सपत्नीकमुपवेश्य द्वयं प्राङ्मुख मुपविश्य कुशतिल जलान्यादायाद्येत्यादि-देश कालादि-संकीर्त्तनान्ते अमुक गोत्रायामुक-वेदाध्यायिनेऽमुक-शर्म्मणे ब्राह्मणाय इदं गृहं (यथोपकरण सहितं) पक्वेष्टकादि रचितं यथाशक्ति-सम्पादित-कांस्यताम्रादि-भाजनं सर्व्वधान्य-लवण शर्करादिरस-गो वलीवर्द्द-दास-दासी-समञ्चक तुलिका-वितानादि-सर्व्वोपस्करण-सहित-सदीप-प्रद्योतं सर्व्वधान्य-दैवतं सकल-कलुष-क्षयानन्तर-सिद्ध सङ्घ-पूजितत्वामर-कर-कलित-चामरवीज्यमानत्व-सहित सम्भा-वित-नरकनिमज्जित-पित्रादि पुरुषशत ३(‡) पुत्र-पौत्रादि-बन्धुतारण पूर्व्वक-मित्यन्ते, पक्वेष्टकारचित गृहदाने कल्पकोटि शतावधि-काल ब्रह्मलोक-महितत्वकाम इति!

शैलज-दारुज गृहदानेतु—

कल्पकोटि शतावधि-समय-नारायण-समीप-क्षीरार्णव निवास काम इति। दातव्य मृन्मयादि ४(०) गृह विशेषानुसारेणोक्त्वा तुभ्यमहं सम्प्रददे—

न ममेति ब्राह्मणहस्ते जलन्दत्त्वा —

इदं गृहं गृहाणत्वं सर्व्वोपस्कर संयुतम्।
तव विप्र प्रसादेन ममास्त्वभिमतं फलम्॥
एव मेकैकशो दत्त्वा प्रणिपत्य समर्पयेत।
स्वस्तीति ब्राह्मणैर्व्वाच्यं कोऽदादिति च पूजितैः॥
गृहं मम विभूत्यर्थं गृहाण त्वं द्विजोत्तम!।
प्रीयतां मे जगद् योनि र्वास्तु रूपी जनार्द्दनः॥

इति मन्त्रं पठेत्।

१(*) 'गृहं प्राविशत्' इति क्वचिद् ग्रन्थान्तरे पाठः।
अत्र सुधाख्यलेपः वज्रलेपः, कषाय इत्यत्वगुरुलेपः, उद्दालकर्षतिन्दुकफल्गुरसलेपाश्च बहवः सन्ति।
एषु वज्रलेपश्च वृहत्संहितायां लिखितः। अन्ये च वास्तुशास्त्रे सन्ति।
२(†) 'एह्येहि' इत्यादि प्रागुक्त पञ्च मन्त्रान् पठेत्।
३(‡) 'पित्रादिपुरुषशत' इत्यत्र 'मित्रादि' इति क्वचित् पाठः।
४(०) अत्र 'मृन्मयादि गृह विशेषानुसारेण' इति क्वचिदादर्श-पुस्तके पाठः।
वह्निपुराणेच—'एवन्दत्वा गृहंराजन् सर्वोपस्करसंयुतम्। नरो विष्णुपुरं याति स्तूयमानोऽप्सरोगणैः।'॥

प्रतिग्रहिता 'देवस्य त्वा' इत्यादि मन्त्रेण प्रतिगृह्य ॐ स्वस्तीत्युक्त्वा यथा शास्त्रम् कामस्तुतिं पठेत। ततः कृतैतद्गृहदान कर्म्म प्रतिष्ठार्थमिदं सुवर्णमग्निदैवतं दक्षिणात्वेन तुभ्यमहं सम्प्रददे, इति सुवर्ण-सहस्रमारभ्यैक सुवर्णावरां दक्षिणां दद्यात्।

तत स्तस्मै पादुकोपानच्छत्र चामरादिकं यथाशक्ति दत्त्वा ततः—

**कृताञ्जलिर्भूत्वा—**

सम्पन्नं वाप्यसम्पन्नं गृहोपस्कर भूषणम्।
सर्व्वं सम्पूर्णमेवास्तु तत्प्रसादाद्द्विजोत्तम ॥ इति

सम्प्रार्थ्य तदनुज्ञया स्वगृहं गत्वा ब्राह्मणान् भोजयित्वा स्वयं भुञ्जीतेति।

इति गृहदान प्रयोगः ॥

—*—

## (६४) अथ मठदानम्।

—*—

235. **स्कन्द पुराणे—**

कृत्वा मठं प्रयत्नेन शयनासन संयुतम्।
पुण्यकाले द्विजेभ्योऽथ यतिभ्यो वा निवेदयेत्।
सर्व्वान् कामानवाप्नोति निष्कामो मोक्ष माप्नुयात ॥

इति मठदानम् १(*)।

---

१ (*) मठः छात्रादि निलयः। मठन्ति वसन्ति छात्रादयो यत्र स मठः। 'मठ मदनिवासयोः'। 'हलश्चेति' घञ्। संज्ञापूर्व्वकत्वान्न वृद्धिः। छत्रशीला विद्यार्थिनश्छात्राः। छत्रेण गुरुसेवा लक्ष्यते। गुरोर्दोषाच्छादनाच्छत्रम्। तच्छीलत्वाच्छात्रः। आदिना परिव्राजक-सन्न्यासि-भिक्षूणां ग्रहः।

ब्रह्मवैवर्त्ते, मार्कण्डेयः—
'यावत्तत्तिष्ठते भूमौ समठे जनसेविते।
तावद् वर्ष प्रमाणेन कर्त्ता च शुभभाग्भवेत्।
भगवतीपुराणे, विजयार्थैवकर्त्तव्यं पुष्पाराम मठादिकम्।
सजनं कारयेत्तस्मान्मठारामादिकं नरः'।

" 'कृत्वा वास गृहन्तस्य देवस्य परमेष्ठिनः'।
राजसूयाश्वमेधानां फलेन सह युज्यते ॥
प्रासादे मृन्मये पुण्यं मयैतत् कथितं द्विजाः।
तस्माद्दारुमये पुण्यं कृते शतगुणम्भवेत् ॥
ततो दशगुणं पुण्यं तथा शैलमये भवेत्।
ततो दशगुणं लौहे ताम्रे शतगुणन्ततः।
सहस्रगुणितं रौप्ये तस्मात् फल मवाप्नुते।
ततः शत सहस्रं मे सौवर्णे द्विज सत्तमाः ॥
अनन्तं फलमाप्नोति रत्न-चित्ते मनोहरे' इति विष्णु धर्म्मोत्तरे तृतीयकाण्डे ॥

# (६५) अथ प्रतिश्रय दानम्।

—*—

236. **भविष्य पुराणे**—

प्रतिश्रये सुविस्तीर्णे कारिते सजलेन्धने।
दीनानाथ-जनार्थाय ततः किं न कृतम्भवेत॥

237. **मार्कण्डेय पुराणेऽपि**—

कुर्य्यात् प्रतिश्रयं गृहं पथिकानां हितावहम्।
निज-गेहैकदेशे वा साधून् पान्थान् निवासयेत्॥
अक्षयं पुण्यमुद्दिष्टं तस्य स्वर्गापवर्गदम्।
सर्व्वकाम समृद्धोऽसौ देववद्दिवि मोदते॥
प्रतिश्रयो धर्म्मशालेति लोके प्रसिद्धः।

238. **यमोऽपि**—

आसनं पादशौचञ्च दीपमन्नं प्रतिश्रयम्।
ददात्येतानि यः पञ्च स यज्ञः पञ्चदक्षिणः॥
अन्नदः प्राणदो ज्ञेयः रूपदो वस्त्रदः स्मृतः।
सहि सर्व्वप्रदो नाम यो ददाति प्रतिश्रयम्॥
अश्वमेध सहस्रस्य राजसूय शतस्य च।
पुण्डरीक-सहस्रस्य फलमाप्नोति मानवः १(*)।

इति प्रतिश्रय दानम् २(†)॥

—*—

१ (*) 'पुण्डरीकः सिताम्भोजे सितच्छत्रे च भेषजे। पुंसि व्याघ्रेऽपि दिङ्नागे कोषकारान्तरेऽपि च' इति मेदिनी।
'योगिश्चवसथी नरः' इति हेमाद्रि-धृतः पाठः।

२ (†) 'रात्रौ दानं न शंसन्ति विना चाभय दक्षिणाम्।
विद्यां कन्यां द्विजश्रेष्ठ दीपमन्नं प्रतिश्रयम्'॥ इति स्मृती—'प्रतिश्रयः सभायाञ्चाश्रयेऽभ्युपगमेऽपि च' इति मेदिनी। 'सभायाञ्च प्रतिश्रयः'। यज्ञशाला, अभ्यागतालयश्च इति जटाधरः।
ओक इति हेमचन्द्रः।

# (६६) अथाश्रम दानम् १(*)

—*—

239 **वाराहे**—

त्रिभौमं वा द्विभौमं वा कुर्य्यादथैकभूमिकम् ।
मठं विचित्रशालाढ्यं विराजन्मत्तवारणम् ॥
ध्यानाध्ययन होमादि-व्याख्यान स्थान भूषितम् ।
सुधया वा शिलाभिर्व्वा सम स(म)क्किम(न्न) भूमिकम् ॥
विन्यस्तपुस्तकाधार-भूतनूतन-सङ्कुलम् (कम्) ।
नानाकला-कुलोद्यान-राजिमण्डल-मण्डितम् ॥
निर्म्मल-स्वादु-पानीय-सुसम्भृत-जलाश्रयम् ।
यतीनां पथिकानाञ्च निवासमुपसंदुषाम् ॥
पादुकौपानहच्छत्र-कौपिनेन्धन-वाससाम् ।
उपयोगि-पदार्थाना-मन्येषामपि लब्धये ॥
ग्रामञ्च विपुलां भूमिं प्रदद्याच्छ्रद्धयान्वितः ।
एवं समाश्रयं कृत्वा तापसानां हितावहम् ॥
अन्येषामपि लोकानां दुःखिना माश्रयार्थिनाम् ।
समाश्रयं प्रयच्छामि प्रीयतां मे जगन्निधिः २(†) ॥
एवं दत्त्वा महाराज ! मविचित्रं समाश्रयम् ।
अश्वमेध सहस्रस्य फल माप्नोत्य संशयम् ३(०) ॥
शिव-विष्णु पुरे स्थित्वा तद्रूप-बल-विक्रम् ।
भोगानपि-बहून भुक्त्वा परं निर्व्वाण मृच्छति ॥
यः कारयेदिति विचित्र-विशाल शाल—
मालाकुलं रुचिर कुड्य वितानयुक्तम् ।
दिव्याङ्गना परिवृताऽथ भवेन्मुरारेः,
पारे भवार्णव-जलस्य स सौख्यमेति ॥

इति विधानपारिजाते आश्रयदानम् ।

---

१ (*) 'आश्रमो ब्रह्मचर्य्यादौ वानप्रस्थे वने मठे, अस्त्रियाम्' इति मेदिनी। मुनीनां निवासो वा। आश्राम्यन्ति अत्रानेन वा। 'श्रमु तपसि'। ततो घञ्। नोदात्तोपदेशस्य इति वृद्धि र्न स्यात्। यद्वा आसमन्तात् श्रमोऽत्र। स्वधर्म्म साधनक्लेशात्'।

२ (†) 'जगत्पति' रिति आदर्शान्तर धृत : पाठ:।

३ (०) 'अश्वमेध मवाप्नोति मोक्षञ्चैवाप गच्छति' इति आदर्शान्तरस्थ: पाठ:।

## (६७) अथ कन्यादानम् ।

—*—

240. **तत्र बृहस्पतिः—**

सहस्रमेध धेनूनां शतञ्चानडुहां समम् ।
दशानडुत् समं यानं दशयान समं हयः ॥
दशवाजि-समा कन्या भूमिदानञ्च तत् समम् १(*) ।
तस्मात् सर्व्वेषु दानेषु कन्यादानं विशिष्यते ॥

241. **भविष्ये—**

कन्यामलङ्कृतां दद्या दनादाय नराधिप ! ।
विद्यार्थिने ब्राह्मणाय कन्यादानं तदुच्यते २(†) ॥
दद्याद् गुणवते कन्यां नग्निकां धर्म्मचारिणीम् ।
अपि नो गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥
कन्या देया श्रोत्रियाय ब्राह्मणाय तपस्विने ।
साक्षादधीत-वेदाय विधिना ब्रह्मचारिणे ॥

इयं कन्या, सम्वर्त्तादिभिर्दशमे कन्यका प्रोक्तेति वयोविशेषयुक्ताऽप्राप्तरजोदर्शनैवं विवक्षिता ३(‡) ।

तस्मादुद्वाहयेत् कन्यां भवेदृतुमतीं यदि । अत्र भवेदिति विशेषोक्तः ।

242. **हेमाद्रौ, सम्वर्त्तः—**४(०)

अष्टवर्षा भवेद् गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥

**वृषली स्वरूपन्तु—**

पितु र्गेहेतु या कन्या रजः पश्यत्य संस्कृता ।
सा कन्या वृषली ज्ञेया तत्पति र्वृषली-पतिरिति ॥

---

१ (*) 'कन्यां ये तु प्रयच्छन्ति यथाशक्त्या स्वलङ्कृताम् ।
ब्रह्मदेया द्विजश्रेष्ठ ब्रह्मलोकं व्रजन्ति ते ॥
कन्यादानन्तु सर्व्वेषां दानानां मुत्तमं स्मृतम्' ॥ इति यमः ।

२ (†) 'दशयान समाकन्या' इति हेमाद्रिः ।

३ (‡) 'द्विजाय वेदविदुषे कन्यादानन्तदुच्यते' इति हेमाद्रिधृतः पाठः ।

४ (०) 'प्राप्तदर्शनैवं' इति पाठान्तरम् । इदृशे पाठे प्राप्तरजसो, रजोदर्शनायाः कन्याया अपि विवाह-सम्भवः । प्राप्ताप्राप्तरजस्कयोः कन्ययोरप्राप्तरजस्का श्रेयसीति विदां मतम् ।

243. **अङ्गिराश्च—**

*अप्राप्ते रजसा गौरी प्राप्ते रजसि रोहिणी ।*
*अव्यञ्जनकृता श्यामा कुचहीना तु नग्निका १(†) ॥*

244. **तदर्थे काश्यपोऽपि—**

सप्तवर्षा भवेद् गौरी दशवर्षातु कन्यका ।
प्राप्तेतु द्वादशे वर्षे कुमारी त्यभिधीयते ॥
रोमकालेतु-सम्प्राप्ते सोमोभुञ्जीत कन्यकाम् ।
रजः काले तु गन्धर्व्वाः शक्रस्तु कुचदर्शने ॥
तस्मादुद्वाहयेत् कन्यां यावन्नर्त्तुमती भवेत् ।
विवाहस्त्वष्ट वर्षायाः कन्यायाः शस्यते बुधैः ॥

245. **याज्ञवल्क्यः—**

वेदं व्रतानि वा पारन्नीत्वाऽप्युभय मेव वा ।
अविप्लुत-ब्रह्मचर्य्यो ल क्षण्यां स्त्रियमुद्वहेत् ॥

१ (†) स्मृतावन्यदस्ति—"अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।
दशमे कन्यका प्रोक्ता अत ऊर्द्ध रजस्वला" ।
'प्राप्ते तु षोड़शे वर्षे कुमारीत्यभिधीयते' इति केचनमुनयःप्राहुः ।
,, श्यामालक्षणन्— 'शीते सुखोष्ण सर्व्वाङ्गी ग्रीष्मेच सुखशीतला ।
तप्त काञ्चनवर्णाभा सा श्यामा परिकीर्त्तिता' ॥
'श्यामायौवन मध्यस्था' इत्युत्पलिनी ।
,, गौरीदानफलमुक्तं विष्णुपुराण-टीकायाम्—
'गौरींददन्नाकलोकं वैकुण्ठं याति रोहिणीम्' इत्यादि ।
अन्यत् रघुनन्दन महाचार्य्य प्रणीतोद्वाहतत्त्वे वीरमित्रोदयेचास्ति ।
कन्यादान फलमुक्तं महाभारते च—
'कूपारामप्रपाकारी तथा वृक्षादिरोपकः ।
कन्याप्रदः सेतुप्रदः स्वर्गमाप्नोत्य संशयम्' ॥
,, भार्गवयपुराणे,— 'एवं यच्छन्ति ये कन्यां यथाशक्त्या स्वलङ्कृताम् ।
विवाहकाले सम्प्राप्ते यथोक्ते सदृशे वरे ॥
क्रमात् क्रमं क्रतु शतमन् पुण्यं लभन्ति ते ।
तुल्याकन्याप्रदानञ्च पितरः पपितामहाः ।
विमुक्ताः सर्व्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते' ॥

### 246. ब्रह्माण्डे—

कन्यान्तु परया भक्त्या अलङ्कृत्य प्रयत्नतः।
कुलीनाय गुणज्ञाय-कन्यां दद्याद् विशेषतः १(*) ॥
कन्यां वरयमाणाय दद्यादेष विधिः स्मृतः।

### 247. स्कन्द पुराणे—

सुरूपां लक्षणोपेतां अव्यङ्गाङ्गीं कुलोद्भवाम्।
कन्यां भ्रातृमतीश्चैव धर्म्मार्थार्थी समुद्वहेत्॥
विशाल नेत्रां सुमुखीं नीलकुञ्चितमूर्द्धजाम्।
आताम्रपाणि पादाग्रां कम्बुग्रीवां सुमध्यमाम्॥
विशाल जघनाश्चारु-नितम्ब-स्थल भूषिताम्।
आस्थूल गुल्फ-दशनां आस्यामधर-तालुकाम् २(०) ॥
अपिङ्गाक्षी मकपिलां अस्फुरच्चरणां शुभाम्।
आस्थूलगण्डफनासाग्रां शस्तामाहुर्म्मनीषिणः ३(+) ॥
उद्वहेत्तादृशीं कन्यां रोगदोष विवर्ज्जिताम् ४(†)।

### 248. महर्षि मनुः—

चतुर्णामपि वर्णानां प्रेत्येह च हिताहितान्।
अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत॥

---

१ (*) 'सुरूपाय गुणज्ञाय' इति हेमाद्रिः।

२ (०) प्रशस्तालक्षणमाह महाभारते—
'अपिचैवस्वपत्नाणां जितज्योत्स्नोपमं शुभम्।
दिव्यांशुरश्मिभिर्युक्तं दिव्यकान्तिमनोरमम्'॥

३ (+) अन्यत् सामुद्रिके पुराणेऽपि स्त्री पुंसोः शुभलक्षणम्। अत्र 'नासायाम्' इति पादर्शान्तर-स्थित-'नासायाम्' इति च आदर्शान्तर धृतः पाठः।

४ (†) 'सवर्णासु सवर्णा ये जायन्ते वै सजातयः' इति स्मृतिः।
'नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम्।
नालोमिकां नातिलोमां न वाचालां न पिङ्गलाम्'॥
इति अन्यत् श्रीमद्रघुनन्दनीयोद्वाहतत्त्वे ज्योतिषशास्त्रे च विद्यते।

पैठीनसिः—गान्धर्व्वासुरौ राजन्यस्य राक्षसो वैश्यस्य पैशाचः शूद्रस्य, सर्व्वेषामार्षः प्रमाणम्।

अन्यत् प्रचेताः—पैशाचः संस्कृतप्रमतानां प्रतिलोमजातानाञ्च।

ब्राह्मो दैवस्तथाचार्षः प्राजापत्यस्तथासुरः ।
गान्धर्व्वो राक्षसश्चैव पैशाच श्चाष्टमोमतः ॥
चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः ।
राक्षसं क्षत्रियस्यैव मासुरं वैश्यशूद्रयोः ॥
पञ्चानाञ्च त्रयोधर्म्म्या द्वावधर्म्यौ स्थिताविह ।
पैशाचश्चासुरश्चैव न कर्त्तव्यः कथञ्चन ॥
एतेषां ब्राह्मादीनां लक्षणम्—१(*)

यथोक्तगुणवते वरायालङ्कृत्य कन्या यत्र दीयते स ब्राह्मः ।

249. **मनुः—**

यज्ञे तु वितते सम्यक् कर्म्म कुर्वति ऋत्विजि ।
अलङ्कृत्य सुतादानं दैवं धर्म्मं प्रचक्षते ॥
एकं गोमिथुनं द्वेवा वरादादाय धर्म्मतः ।
कन्या प्रदानं विधिव दार्षो धर्म्मः स उच्यते ।
अनया सह धर्म्मश्चर्य्यतामित्युक्त्वा यत्र कन्यादीयते सप्राजापत्यः ।
छद्मादिना यत्र कन्याऽपह्रियते स पैशाचः ।
राक्षसो युद्धहरणाद् गान्धर्व्वः समयान्मिथः ॥
द्रविणादानाद् यत्र कन्या दीयते स आसुरः ।

250. **वसिष्ठः—**

सर्व्वेषामेव दानाना मेक-जन्मानुगं फलम् ।
हाटक-क्षिति-गौरीणां सप्तजन्मानुगं फलम् ॥
अष्टानां विवाहानां फलं विवाहप्रकरणे द्रष्टव्यम् ।

१ (*) चवाष्टविध-विवाहलक्षणमित्यम्—

भार्य्यात्व सम्पादक ग्रहणम् । तस्य स्वीकार रूपस्यान विशेषस्य समवायविषयतयोर्भेदाद वरकन्ययोर्विं कर्त्तृत्वे-कर्म्मत्वे । सचाष्टविधः ।—(१) वरमाहूय यथाशक्त्यालङ्कृता कन्या यत्र दीयते स ब्राह्मः । (२) यज्ञस्थायर्त्विजे कन्यादानं सवै दैवः । (३) यत्रवराद गोद्वयं गृहीत्वा तेनैव सह कन्यादानं स आ (४) यत्तानया सह धर्म्मं चरतामिति नियमं कृत्वा कन्यादानं स प्राजापत्यः । (५) यत्र धनं गृहं कन्यादानं चासुरः । (६) यत्र कन्यावरयोरन्योन्यानुरागात् त्वं मे भार्य्या स्यात् त्वं मे पतिरिति नियः गान्धर्व्वः । (७) यत्र बलात्कारेण कन्याहरणं स राक्षसः । (८) यत्र सुप्तायां मत्तायां प्रमत्तायां कन्यायां निर्ज्जने गमनं स पैशाचः ।

ग्रन्थगौरवभयान्नात्र प्रयत्यते ।

—*—

251. **पैठीनसिः—**

सवर्णायाः करौ ग्राह्यौ पाणिग्रहण कर्म्मणि ।
शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया ।
वसनस्य दशा ग्राह्या शूद्र योत् कृष्टवेदने १(*) ॥

252. **ऋष्यशृङ्गः—**

वरगोत्रं समुच्चार्य्य प्रपितामह-पूर्व्वकम् ।
नाम संकीर्त्तयेद्विद्वान् कन्यायाश्चैवमेवहि ॥

253. **यमोऽपि—**

नान्दीश्राद्धे विवाहेच प्रपितामह पूर्व्वकम् ॥
तिष्ठन् पूर्व्वमुखो दाता वरः प्रत्यङ्मुखो भवेत् ।
मधुपर्कार्च्चिताच्चैना न्तस्माद्दद्यात् सदक्षिणाम् २(†) ॥
उदपात्रं तथोद् गृह्य मन्त्रेणानेन दापयेत् ।
गौरीं कन्या मिमां विप्र ! यथाशक्ति विभूषिताम् ॥
गोत्राय शर्म्मणे तस्मै दत्तां विप्र समाश्रयाम् । इति
दान प्रतिष्ठा सिद्धयर्थं सुवर्णं दक्षिणान्ददेत ।
वरस्य यस्य या शाखा तच्छाखा गृह्यचोदिता ३(‡) ॥
मधुपर्कः प्रदातव्योऽप्यन्य-शाखेच दातरि ।

254. **व्यासः—**

भुक्त्वा समुद्वहेत् कन्यां सावित्री-ग्रहणन्तथा ।
उपोषितः सुतां दद्या दर्च्चिताय वराय तु ॥

---

१ (*) 'शूद्रयोत्क्ष स्ववेदने' इति पादर्शान्तरधृतः पाठः ।

२ (†) 'तस्मै दद्यात् सदक्षिणाम्' इति क्वचिदादर्शे पाठः ।

" कन्या पुत्र विवाहे, नवगृहप्रवेशादौ चनान्दीश्राद्धमवश्यं कर्त्तव्यम् । तस्मिन् प्रपितामह-पूर्व्वकं चनुश्राद्धौ नामोल्लेखः-कार्य्यः ।

३ (‡) स्व-स्वगृह्यानुसारेणेत्यर्थः। यच्छन्दोगानां गोभिलीय गृह्यमतम् । यजुषां पारस्कर-गृह्यमतम् , ऋग्वेदिनामाश्वलायनगृह्य मतम् ।
स्वकं स्वकं वेद-शाखा-ब्राह्मण-गृह्यसूत्रं स्व स्व श्रौत-स्मार्त्त कार्य्ये सदैव विधेयम् ।

255. **बृहस्पतिः—**

चतुष्पादं गृहं कन्यां दासीं च्छत्रीं रथं तरुम् ।
तिष्ठन्नेतान् द्विजो दद्याद् भूम्यादावनुपवेश्य च १(*) ॥

256. **याज्ञवल्क्यः—**

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्व्वनाशे प्रकृतिस्थः परः परः ॥

257. **स्कान्दे—**२(:) ।

पिता दद्यात् स्वयं कन्यां भ्राता वानुमतः पितुः ।
मातामहो मातुलश्च सकुल्यो बान्धवस्तथा ॥
माता त्वभावे सर्व्वेषां प्रकृतौ यदि वर्त्तते ।
तस्यामप्रकृतिस्थायां दद्युः कन्यां स्वजातयः ॥

258. **स्कान्दे—**

आत्मीकृत्य सुवर्णेन परकीयान्तु कन्यकाम् ।
धर्म्मेण विधिना दातु मसगोत्रोऽपि युज्यते ॥

259. **अनु दानानि, लिङ्गपुराणे—**३(०) ।

भूमिं गाश्चैव दासीश्च वासांसिच स्वशक्तितः ।
महिष्यो वाजिनश्चैव दद्यात् स्वर्ण-मणीनपि ॥

---

१ (*) इति कन्यादाने नियमः ज्ञेयः ।

२ (:) अथ प्रदाने कन्याया विहिताधिकारी कथ्यते ।

३ (०) सम्प्रदानात् परं यानि गो भूमि-हिरण्य-दास-दासी-तैजसाम्बरादीनि देयानि तान्येवानु-
दानानि कथ्यन्ते ।
अथ० माङ्गल्यद्रव्याणि यथा, प्रशस्तिपाते,···
मही, गन्धः शिला-धान्यं दूर्व्वा-पुष्पं फलं दधि-
घृतं सिन्दुरं स्वस्तिकं शङ्खः कज्जलः रोचना-
सिद्धार्थं काञ्चनं रौप्यं ताम्रं दीपश्च दर्पणम्' इति ।
कौतुकाख्यद्रव्याणि परिभाषायामस्य हेमाद्रौ वसन्ति ।
यथा शक्ति देयानि तानि, न तु वित्ताधिक्यादन्यानि, वित्तशाठ्येनवेति ।
,, 'प्रभुः प्रथमकल्पस्य योऽनु कल्पेन वर्त्तते ।
न साम्परायिकन्तस्य दुर्म्मते विंदति फलम्' इतिश्रुतौ ।

ततः स्वगृह्यविधिना होमाद्यं कर्म्मकारयेत् ।
यथाचारं विधेयानि माङ्गल्यं कुसुकानि च ॥

260. **हेमाद्रौ, दक्षः—**

अप्रजायान्तु कन्यायां न भुञ्जीत क दाचन १(*) ।
दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि ॥

नास्ति सत्त्वाच ते भीतिर्नास्ति ते नारकाद्भयम् ।
तीर्णस्त्वं सर्व्व दुःखेभ्यः परं स्वर्गमवाप्स्यसि ॥

दौहित्रस्य मुखदर्शनेन नन्दन्ति पितरः सप्त ।
यत् किञ्चित् कुरुते दानन्तदानन्त्याय कल्प्यते ।
दत्त्वा कन्यां न शोचेत क्षुधिता वाड़ितापि वा ॥

नाना दुःखाभिभूतावा तथैवाशरणा कृशा ।
कुर्य्यान्मन्युं न चैवास्या आगताश्चैव पोषयेत् ॥

शोचन्ति यामयो यत्र विनश्यन्त्याशु तत् कुलम् ।
तस्मादेताः सदाभ्यर्च्च्या भूषणाच्छादनाशनैः २(†) ।
भूतिका मै-नरैर्नित्यं सुता पुत्रश्च सर्व्वदा ।
सन्तुष्टः स्यात्तथा पूज्यः स श्राद्धेषूत्सवेषु च ॥

यस्मिन्नेवं कुले नित्यं कल्याणन्तत्र वै ध्रुवम् ।
इह कीर्त्तिर्भवेत् स्वर्गः परत्र द्विज-सत्तम ! ॥

तिलराशिः कृतो यावद्दिवाकर-समुच्छ्रितः ३(‡) ।
वर्षान्ते गृह्यते तस्मा त्तिल एकस्तु यावता ॥

सोऽक्षयं लभते तावद् ब्रह्मलोकं सनातनम् ।
शत गव्यूति मानेन सञ्चितं वृषरोमभिः ॥

---

१ (*) दौहित्रोत्पत्तेः प्राक सम्प्रदानात् परं कन्या गृहे भोजन निषेध मात्रा प्रजाया मित्यादिना ।

२ (†) 'भूषणाच्छादनादिभि'रिति हेमाद्रौव: पाठः ।

३ (‡) 'दिवाकर समं कृतः' इति चाहवीनश्च: पाठः ।
एव कन्ययोर्बंधप्रदाने शास्त्रोक्तं फलमपवर्ग, यथा—
'भूतिकामैर्नरै र्नित्यं सुतापूजय सर्व्वदे' त्यादिना ।

विशीर्य्यते तुवा लोकं वर्षे पूर्णे सुताप्रदः १(*)।
तावत् स्वर्गं लभेत् सोऽपि सर्व्वलोकान्तु संक्षयः॥
महीदातुश्च गोदातुः कन्यादातुश्च ये रथाः।
कन्यादानानुगाः पश्चात् समं यान्ति त्रयो रथाः॥
अयाचित प्रदातुश्च सत्यवादिन एवच।
नित्यं स्वाध्यायशीलस्य समं यान्ति त्रयो रथाः॥
सुकुदश्चाश्वमेधी च प्राणदाता द्विजेषु च २(†)।
समं यान्ति रथा ह्येते त्रयो वै नात्र संशयः॥

261 **काश्यपः—**

अग्निष्टोमाति-रात्राणां शतं शतगुणं कृतम् ३(§)।
लभते कन्यकान्दत्त्वा मन्त्र होमैरलङ्कृताम्॥
अनडुहां सहस्राणां दशानां धूर्यवाहिनाम्।
सुपात्रे विधिवद्दानं कन्यादानञ्च तत्समम्॥

**साक्षात् कन्यादानासम्भवे, सम्वर्त्तः—**

वैवाहिक प्रदानं वा यो ददाति दया परः ४(‡)
विमानेन विचित्रेण किङ्किणी-जाल-मालिना।
महेन्द्र भवनं याति सेव्यमानोऽप्सरोगणै ५(°)॥

इति कन्यादानम्॥

—*—

१ (*) अन्वयार्थप्रतीतिः क्लिष्टा।
सूरिवर हेमाद्रिमते 'कुकुदः' इति पाठः।
तथैव तैर्व्याख्यातता 'अलङ्कृत्य कन्याप्रदाता-ककुद' इति।

२ (†) 'सुकुद' इति—सु-शोभनं परमं वा। कुः पृथिवी। तां ददातीति सुकुदः पृथिवीदाता, भूमिदाता वा इत्यर्थः। अत्र 'कुकुद' इत्यपि पाठान्तरमस्ति।

३ (§) इत्यत्र 'शतं शतगुणं शतम्' इति हेमाद्रौ पाठः।

४ (‡) 'दयापरः' इति क्वचित् पुस्तके पाठः।

५ (°) 'सेव्यमानाप्सरोगणैः' इति आदर्श ग्रन्थान्तर-धृतः पाठः।

## (६८) अथ द्विजस्थापनम् ।

—*—

262 **हेमाद्रौ**---

**तत्र दक्षः**

मातापितृ-विहीनन्तु संस्कारोद्वहनादिभिः ।
यः स्थापयति तस्येह पुण्यसंख्या न विद्यते ॥

263 **कालिकापुराणे**—

कारयित्वा तथोद्वाहं श्रोत्रियाणां कुलेषु च ।
वेदवि(व)च्छील वृत्तेषु द्विजेष्वेकादशस्तथा ॥
अथो गृहाणि रम्याणि कुर्य्यादेकादशैव तु १(*) ।
कारयित्वा तु धान्यैश्च विविधैश्च प्रपूरयेत् ॥
दासी गो महिषीश्चापि शयनासन-पादुकाः ।
भाजनानि विचित्राणि ताम्र मृण्मयकानि च ॥
पात्राणि भोजनार्थे च कृत्स्नञ्चोपस्करञ्च यत् ।
लोहञ्च कनकञ्चैव वस्त्राणि तु विशेषतः ॥
सम्भृत्यैतं सुसम्भारं तद्गृहेषु नियोजयेत् ।
योजयेच्चैव वृत्त्यर्थं शक्तितो वा शतं शतम् ॥
पृथक् पृथग् लाङ्गलानां निवर्त्तन-शतार्द्धतः २(†) ।
विषयं ख(क)र्वटं खेटं ग्रामं ग्रामार्द्धमेव वा ॥
योजयेत् सोममूर्त्तिश्च चिन्तितेषु द्विजेषु वै ।
एकादशैव तास्तत्र दम्पत्यो मोहनात्मकाः ३(○) ॥
विचिन्त्य परया भक्त्या तद्गृहेषु प्रवेशयेत् ।
ग्राहये दग्निहोत्राणि प्रवेश्यैत्यान् द्विजोत्तमान् ॥
विधिपूर्व्वं यथान्यायमात्मनः श्रेयसे नरः ।
अनुष्ठ कुलजानाञ्च विधिरेषां चिरन्तनः ॥

---

१ (*) 'दाता गृहाणि' इति हेमाद्रिः। अत्र दाता इति वा पाठः स्यात्।

२ (†) अत्र—निवर्त्तनं भूपरिमाणं परिभाषायामुक्तम्। एवं ग्राम-खेट-खर्व्वट-विषय-पत्तन-मण्डल—लक्षणं वास्तुशास्त्रे उक्तम्।

३ (○) दम्पत्यो मोहनात्मकाः' इति आदर्श ग्रन्थान्तरे पाठः। अत्र हेमाद्रीयः पाठश्च 'दाम्पत्योर्मङ्गलात्मकाः' इति।

शिवभक्त्या विभक्तानां द्विजानां कारयेत् सदा ।
यश्च प्रेष्यान् द्विजान् मूढो योजयेद्धव्यकव्ययोः ॥
न भवेत्तत् फलं तस्य वैदिकीयं श्रुतिर्ध्रुवा १(*) ।
यज्ञो दानं व्रताद्यञ्च तीर्थयात्रादिकञ्च यत् ।
यस्त्वेवं कारयेद् जन्तुं(:) तेन सर्व्वमनुष्ठितम् ॥
स यात्यर्क्क-समानाभं विमानं रत्नमालिनम् ।
आरुह्य तत्पदं पुण्यं सुरस्त्रीभिरलङ्कृतम् ॥
विमानैश्चापरैर्दिव्यैः सहस्रैः परिवारितः ।
सर्व्वलोकगताम् भोगान् भुक्त्वा तस्मिन् प्रपद्यते ॥
ज्ञात्वा स्व वित्तसामर्थ्यं एकं चोद्वाहयेद् द्विजम् ।
तेन प्राप्नोति तत् स्थानं शिवभक्तो नरो ध्रुवम् ।
स्थाने न २(†) स्थान सम्प्राप्तिं र्विधिवत्तेन जायते ।
इति द्विजस्थापनम् ॥

—*—

## (६६) अथ राज्यस्थापनम् ३(‡) ।

—*—

### 264. आदित्यपुराणे—

भूमिपालं च्युतं राज्याद् यस्तु संस्थापयेत् पुनः ।
तस्य वासो मुनीन्द्रेह नाकपृष्ठे न संशयः ॥

---

१(*) 'द्विदिकीयं श्रुतिं' रिति पुस्तकान्तर-धृतः पाठः ।

२(†) चवानेन इति कुत्रचिदादर्शे पाठान्तरमस्ति ।

३(‡) राज्यलक्षणानि यथा,—शब्द रत्नावल्याम् ।
—'परस्वैरोपकारोऽर्द समाङ्गं राज्य मुच्यते ।
अमात्य राष्ट्र-दुर्गाणि कोषो दण्डश्च पञ्चमः ।
एताः प्रकृतयस्तद्वद्विजिगीषोरुदाहृताः ।
एताः पञ्च तथा मित्रं सप्तमं पृथिवीपतिः ।
सप्त प्रकृतिकं राज्य मित्युवाच बृहस्पतिः' ।
वार्हस्पत्यसूत्रे, मानवे तद् व्याख्याने च ।
अन्यत्र— 'लक्षाधिपत्यं राज्यं स्यात् साम्राज्यं दशलक्षके ।
शतलक्षे महेशानि महासाम्राज्यमुच्यते' । इति वरदातन्त्रे च ।
अन्यदर्थशास्त्रे, शुक्रनीतौ, कामन्दकीये, राजधर्म कौस्तुभेऽपि ।

265. विष्णुधर्म्मोत्तरेऽपि—

भूपालं यं च्युतं राज्यात् स्वकराज्ये स्थापयेत् पुनः ।
स याति शक्र सालोक्यं यावच्छक्राश्चतुर्दश १(*) ॥
ततो मानुष्यमासाद्य राजा भवति धार्म्मिकः ।
तस्माद्दानं श्रीविहीने दातव्यं भूतिमिच्छता २(†) ॥

इति राज्यस्थापनम् ॥

—*—

## (१००) अथ कपिला धेनुदानम् ३(०) ।

—*—

266. तत्र व्यासः—

रुक्मशृङ्गीं रौप्य खुरां वस्त्र-कांस्योपदोहनाम् ।
सवत्सां कपिलान्दत्वा वंशान् सप्त समुद्धरेत् ॥
यावन्ति तस्या रोमाणि सवत्साया भवन्ति हि ।
सुरभी लोकमासाद्य रमते तावतीः समाः ॥

---

(*) इत आरभ्य श्लोकद्वयं पंक्तित्रयात्मकं हेमाद्रौ विशेषो दृश्यते ।
" राज्यतत्त्व मन्यत्, शान्तिपर्व्वणि राजधर्म्मे, मानव धर्म्मशास्त्रे पुष्कलमस्ति ।
२ (†) अत्र 'श्रीविहीने'—स्वीयराज्यहीने इति ।
यश्चभूमिपालः दौर्भाग्यादशौर्य्याच्छत्रु-प्राबल्याद्वा, स्वराज्यं त्यक्तवान् तस्मिन्पुनः तद्राज्यस्वामित्वदाने शास्त्रोक्तं तत् फलं स्यादेवेति ।
३ (०) प्राक् कपिलादान मन्वमात्र मुक्तम् । सम्प्रति—तत् पुष्कलतया उच्यते—
'अथातः संप्रवक्ष्यामि कपिलां धेनुमुत्तमाम् । यत् प्रदानान्नरो याति विष्णुलोकमनुत्तमम् ।
पूर्व्वोक्तेन विधानेन दद्याद्धेनुं सवत्सकाम् । सर्व्वालङ्कार संयुक्तां सर्व्वरत्नसमन्विताम्' ।
धेनुर्दशविधा यथा—
'यास्तु पापविनाशिन्यः पठ्यन्ते दश धेनवः । तासां स्वरूपं वक्ष्यामि नामानि च धनाधिप' ।
(१) गुड़धेनुः, (२) घृतधेनुः, (३) तिलधेनुः, (४) जलधेनुः, (५) क्षीर धेनुः, (६) मधु धेनुः, (७) शर्कराधेनुः, (८) दधिधेनुः, (९) रसधेनुः, (१०) स्वर्णधेनुः, सामान्यधेनुर्वा । तत्तद् द्रव्य-निर्म्मिता धेनुस्तत्तदाख्याधेनुर्दानार्हा भवति ।
इति मत्स्यपुराणे—७६ अध्याये ।

267. **अस्या दानमन्त्रो मात्स्ये---**

कपिले सर्व्वभूतानां पूजनीयासि रोहिणि ।
तीर्थं देवमयी यस्मा दतः शान्तिं प्रयच्छ मे ॥ इति ।

268. **महर्षि यमोऽपि—**

रुक्मशृङ्गीं रौप्य खुरां मुक्तालाङ्गुल-भूषिताम् ।
कांस्योपदोहनां धेनुं वस्त्रच्छन्नामलङ्कृताम् ॥
दत्त्वा द्विजेन्द्राय नरः स्वर्गलोके महीयते ।
दशधेनु-प्रदानेन तुल्यैका कपिला मता ॥

269. **आदित्य पुराणे—**

सहस्रं यो गवां दत्त्वा कपिलाञ्चापि सुव्रत ! ।
सममेव पुरे प्राह ब्रह्मा ब्रह्मविदाम्वरः ॥

270. **कौर्म्मे—**

दश सौवर्णिके शृङ्गे खुराः पञ्च पलान्विताः ।
पञ्चाशत् पलिकन्ताम्रं कांस्यञ्चैतावदेवतु ॥
वस्त्रन्तु त्रिगुणं धेन्वा दक्षिणा च चतुर्गुणा ।
एतैरलङ्कृतां धेनुं घण्टाभरण-भूषिताम् ॥
कपिलां विप्रमुख्याय दत्त्वा मोक्ष मवाप्नुयात् ।
द्विगुणोपस्करोपेता महती कपिला स्मृता ॥
दत्ता सा विप्रमुख्याय स्वर्गमोक्ष फल प्रदा ।
सप्त जन्मकृतात् पापान्मुच्यते दश संयुतः ( न् ) ॥
दशभिः पुरुषैः संयुत इत्यर्थः ।
यानन्यान् प्रार्थते कामां स्तां स्तान् प्राप्नोति मानवः ।
अन्ते स्वर्गापवर्गौ च फल माप्नोत्य संशयम् ॥
पञ्च पलान्वितेति रूप्यस्य परिमाणम् ।

वस्त्र दक्षिणयोस्त्रैगुण्यादिकं गोदान-सामान्योपकल्पवस्त्राद्यपेक्षयेति ज्ञातव्यम् ।

विधिस्तु गोदान प्रयोगे च वक्ष्यते ।
इयमेव वर्णभेदेन दशधोक्ता १(*) ।

271. **वराहपुराणे—**

सुवर्ण कपिला पूर्व्वा द्वितीया गौर पिङ्गला ।
तृतीया चैव रक्ताक्षी चतुर्थी गुड़पिङ्गला ॥
पञ्चमी बहुवर्णा स्यात् षष्ठीच श्वेतपिङ्गला ।
सप्तमी श्वेत पिङ्गाक्षो अष्टमी कृष्णपिङ्गला ॥
नवमी पाटला ज्ञेया दशमी पुच्छ पिङ्गला २(†) ।
एता दश समाख्याताः कपिला स्ते वरानने ! ॥
सर्व्वा ह्येता महाभागा स्तारयन्ति न संशयः ।
सङ्गमेषु प्रशस्ताश्च सर्व्वं पाप प्रणाशनाः ॥

इति श्रीमद्विद्वज्जन कृपापात्रीभूत श्रीमन्नागदेवतनयश्रीमदनन्ताचार्य्य-
विरचिते विधान पारिजाते सुवर्णादि-
दशमहादान-विधानम् ॥

—*—

१(*) एकादश-प्रकार-कपिलालक्षणम्,—यथा वाराहे,—
'सुवर्ण कपिला पूर्व्वा द्वितीया गौरपिङ्गला इत्यादि+एकादश खुरश्रृङ्गा एतासां सर्व्वलक्षणा' इत्यन्तम् । अत्र मूले तु दशविधा इत्युक्तम् । वराह पुराणेतु एकादशविधा उक्ता । एकादशविधाना मेतासां दाने फलमपि एकादशविधं स्यादिति ।

२(†) अत्र पुराणानां पाठभेदाद् दशविधा इत्युक्तम् ।
शब्दकल्पद्रुमेतु तत्पुराणोक्त वचनाद्धारे कपिला प्रसङ्गे एकादश विधेति समभिहितम् ।
वराह पुराणे—
'एकादशी खुरश्रृङ्गा एतासां सर्व्वलक्षणा ।
सर्व्वलक्षण संयुक्ता सर्व्वालङ्कार सुन्दरी ॥
ब्राह्मणाय च दातव्या सर्व्व मुक्ति प्रदायिनी ।
भुक्ति मुक्ति प्रदा तेषां विष्णुमार्ग प्रदायिनी' ॥ इति

## (१०१) अथातिदानम्।

—*—

272. **भविष्यपुराणे—**

त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती।
नरकादुद्धरन्त्येव जप वापन-दोहनैः १(*)।
तत्रादौ गोदानानां निरूपणम्।

273. **महाभारते—**

दानानामिह सर्व्वेषां गवां दानं विशिष्यते।
गावः श्रेष्ठाः पवित्राश्च पावना जगदुत्तमाः २(†)॥
ऋते दधि घृताभ्याञ्च नेह यज्ञः प्रवर्त्तते।
तेन यज्ञ विशेषञ्च गोमूलं सम्प्रचक्षते॥

274. **लिङ्गपुराणे—**

अग्न्यागाराणि विप्राणां देवतायतनानि च।
पूज्यन्ते संस्कृता यासां किं देयमधिकम्भवेत्॥

275. **हारीतश्च—**

बहुक्षीराश्च यो गा वै ब्राह्मणायोप पादयेत्।
उत्तारयेत् स आत्मानं सप्त सप्त कुलानि च॥

276. **देवलः—**

सुशीलां लक्षणवती युवतिं वत्स संयुताम्।
बहुदुग्धवतीं स्निग्धां धेनुं दद्या द्विचक्षणः॥

277. **महाभारते—**

प्रासादा यत्र सौवर्णाः शय्या रत्नोज्ज्वला स्तथा।
वरा श्चाप्सरसो यत्र तत्र गच्छन्ति गोप्रदाः॥

---

१ (*) जप अपः सरस्वत्याः। बीजादिवापनं पृथिव्याम्। दोहनं धेनूनाम्।

२ (†) प्रत्यहं गवां पालनं पूजनं ग्रासदानं प्रदक्षिणचार्यैः कार्य्यम्। यतः सा 'माता रुद्राणां दुहिता वसूनां स्वसादित्यानाम् अमृतस्य नाभिः' इत्यादि श्रुतौ पठिता,। 'आपःयायतां ध्रुवा अस्मिन् गोपतौ स्यात बह्वीः' ... शुक्ल, यजुः, अः ११, १९ मः

278. **जाबालिः—**

होमार्थ मग्निहोत्रस्य यो गां दद्यादयाचिताम्।
त्रि-वित्त-पूर्णा पृथिवी तेन दत्ता न संशयः॥

279. **आत्रेयः—**

अकुलीनाय मूर्खाय लुब्धाय पिशुनाय च।
हव्य कव्य व्यपेताय गौ र्न देया कथञ्चन॥

280. **व्यासः—**

न कृशां पापवत्सां वा बन्ध्यां रोगान्वितान्तथा।
न व्यङ्गा मपरिश्रान्तां दद्याद् गां ब्राह्मणाय वै १(*)॥

281. **विश्वामित्रः—**

नैक श्रृङ्गाञ्च निः श्रृङ्गां स्फुटिताक्षीं स्खलत्-खुराम्।
न दद्यान्निस्तनीञ्चैव गां शुभामेव दापयेत्॥

282. **महाभारते—**

एकां गां दशगुर्दद्याद्दश दद्याच्च गोशतः।
शतं सहस्रगुर्दद्यात् सर्व्वे तुल्यफलाः स्मृताः॥

283. **नन्दि पुराणे—**

विधिना तु यदा दद्यात् पात्रे धेनुं सदक्षिणाम् २(+)।
तदा तारयते जन्तून् कुलानामयुतैः शतैः॥

—*—

## (१०२) अथ गोदान विधिः ३(०)।

—*—

284. **विश्वामित्रः—**

प्राङ्मुखीं गामवस्थाप्य सवत् सान्तां सु पूजिताम्।
पुच्छ देशेतु दाता वै स्नातो बद्धशिखो भवेत्॥

---

१ (*) 'पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः।
अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत्'॥ काठोपनिषत्। १—१।

२ (+) दाता योग्या गा चाह, यतः—'
'पीतोदका जग्धतृणां दुग्धदोहां निरिन्द्रियाम्।
उच्यतामद्य चौनाथ बलवत्तां महायशाम्'॥
'वृद्धा कृशा दुर्बला व्याधिताश्च, न दातव्या याश्च मूल्यै रदत्तैः।
क्लेशैर्विप्रं या फलैः संयुनक्ति, तस्या वीर्याधमाश्चापि लोकाः'॥

३ (०) अन्यो गोदानाख्यः संस्कारः। इदमद्दानरूपं कार्य्यम्। 'अनडुहः श्रियं पुष्टिं गोदी-प्रभस्य विष्टपम्' इति मनुः। अत्र तु परमं पुण्यार्थं गोदानम्।

उदङ्मुखस्तु विप्रः स्यात् पात्रलक्षण-लक्षितः ।
आज्यपात्रं करे कृत्वा कनकेन समन्वितम् ॥

निःक्षिप्य पुच्छं तस्मिंस्तु घृतदुग्धं प्रगृह्य च ।
सतिलं विप्रपाणिन्तु प्रागग्रञ्च निधापयेत् ॥

सतिलं सकुशञ्चापि गृहीत्वा दानमाचरेत् ।
अनेनैवतु मन्त्रेण पात्रहस्तो जलं क्षिपेत् ।

यज्ञ साधनभूता या विश्वस्याघ प्रणाशिनी ।
विश्वरूपः परोदेवः प्रीयतामनया गवा ॥

अनुव्रज्य तु तां धेनुं ब्राह्मणेन समन्विताम् ।
गोमतीन्तु ततो विद्यां प्रजपेत् प्रयतः शुचिः ॥

उद्दिश्याथ वासुदेवं प्रीयतामिति चानघ ।
जलशायी ब्रह्मपिता पद्मनाभः सनातनः ।
अनन्त भोगशयनः प्रीयतां परमः पिता ॥

## 285. गोमती विद्या, भारते—१(†)

गावो मामुपतिष्ठन्तु हेमशृङ्ग्यः पयोमुचः ।
सुरभ्यः सौरभेयाश्च सरितः सागरा यथा ॥
सुरभ्यः सौरभेयाश्च सरितः सागरा यथा ।
गाश्च पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा ॥

---

१ (†) श्रीमच्छूलपाणिकृत प्रायश्चित्त विवेके च—
एषा तु गोमतीविद्या गोवधसदृशे प्रायश्चित्तान्ते च पाठ्या ।
'सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः ।
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्य-मातरः' ॥
'गावो मे मातरः सर्वा गोवृषाः पितरो मम ।
ग्रास ग्रासं मया दत्तं प्रतिगृह्णन्तु मातरः ॥'
'पञ्चभूते शिवे पुण्ये पवित्रे सूर्यसम्भवे ।
प्रतीच्छेमं मया दत्तं सौरभेयि ! नमोऽस्तु ते' ॥

286. **यमः—**

गावोऽस्माकं वयं तासां यतोगाव स्ततो वयम् १(†) ।
गावः सुरभयो नित्यं गावोगुग्गुल गन्धिकाः ॥
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ।
अन्नमेव परं गावो देवानां हविरुत्तमम् ॥
पावनं सर्व्वभूतानां रक्षन्तिच वहन्तिच ।
हविषा मन्त्र पूतेन तर्पयन्त्यमरान् दिवि ॥
सर्व्वेषामेव भूतानां गावः शरण मुत्तमम् ।
गावः सर्व्वस्य लोकस्य गावो धन्याः सवाहनाः ।
नमो गोभ्यः श्रीमतीभ्यः सौर भेयीभ्य एव च ॥
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमोनमः ।
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् ।
एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति ॥ इति ।

287. **दक्षिणामाह, वशिष्ठः—**

सुवर्णं दक्षिणामाहु र्गोप्रदाने महाफले ।
सुवर्णं परमंह्याहु र्दक्षिणार्थे न संशयः २(‡) ॥
गोप्रदानन्तारयते सप्त पूर्व्वान् नवां स्तथा ।
सुवर्णं दक्षिणान्दत्त्वा तावद्द्विगुण मुच्यते ॥
सुवर्णं परमन्दानं सुवर्णं दक्षिणा परा ।
सुवर्णं पावनं प्राहुः परिमाणं परन्तथा ॥
अत्र परिमाणं परमिति परिमाण विशेषोक्तः
ऐच्छिक-परिमाणान्तरं व्यावर्त्त्यते ।

एतच्च शक्तविषयम् । अशक्तस्यतु 'यजमानस्ततो दद्याद् यथाशक्त्यातु दक्षिणा मिति ब्रह्मवैवर्त्तोक्तेः सुवर्णपरिमाणा दल्पस्याप्यननुज्ञानादिति दानद्योतकृत् ।

---

१ (†) महाभारते—
'एवं रात्रौ दिवा वापि समेषु विषमेषु च ।
महाभयेषु च नरः कीर्त्तयन्मुच्यते भयादिति' ॥

२ (‡) अत दक्षिणाकाले सुवर्ण-रजतादि-परिमाणं परिभाषायामुक्तम् ।

### गोदानमात्रे प्रार्थना-मन्त्रानाह—

घृतक्षीरप्रदा गावो घृतजन्या घृतोद्भवाः ।
घृतनद्यो घृतावर्त्ता स्ता मे सन्तु सदा गृहे ॥
घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम् ।
घृतं मे सर्व्वतश्चैव घृतं मे मनसि स्थितम् ॥
गावो ममाग्रतो नित्यं गावः पृष्ठत एव च ।
गावो मे सर्व्वतश्चैव गवां मध्ये वसाम्यहम् ॥ इति १(*) ।
अत्र केचिद् गोपुच्छोदकेन देवर्षि पितृ तर्पणमिच्छन्ति २(†) ।

इति वशिष्ठोक्त गोदान विधानम् ॥

—*—

## (१०३) अथ मत्स्यपुराणोक्त-गोदानम् ३(०) ।

—*—

यो गां सुपरिपूर्णाङ्गीं हेमशृङ्गी मकोपनाम् ।
सुशीलां राजतैः पादैश्चित्र वस्त्र-सुसम्वृताम् ॥
सलोहपात्रां कुतुपे निविष्ट-चरणान्तथा ।
कुतुपोऽत्र नेपालकम्बलः । करणाधिकरणत्वात् ।
सदक्षिणां प्रदद्याद् गां सोऽक्षयं स्वर्गमाप्नुयात् ।
गवि रोमाणि यावन्ति स प्रसूति-कुलस्थितौ ॥

---

१ (*) 'इत्याचम्य जपन् सायं प्रातश्च पुरुषः सदा ।
यदह्ना कुरुते पापं तस्मात् स परिमुच्यते' ॥

२ (†) अथ तर्पण रीतिः, गोपुच्छः निर्गलितोदकेन कुश तिलादियुतेन—
'स्वधापितृभ्यो मातृभ्यो बन्धुभ्यो वापि तृप्तये ।
मातृपक्षाश्च ये केचिद् ये केचित् पितृपक्षकाः ।
गुरु-श्वशुर-बन्धूनां ये कुलेषु समुद्भवाः ।
ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः ।
वृषोत् सर्गेण ते सर्व्वे लभन्तां प्रीतिमुत्तमाम्' ॥
—इति वृषोत् सर्गतत्त्वे आर्त्तरघुनन्दनाः ।

३ (०) नन्दिपुराणेऽप्येव मेवोक्तम् । इदञ्च कनकशृङ्गी गोदानमपरम् ।

तावतोऽब्दान् निवसति स्वर्गे दाता न संशयः।
स प्रसूतिरिति। प्रसूतिस्तत् सहिता कुलस्थितिः---
कुल-परम्परा यस्याः सा तस्या मित्यर्थः।
एतच्छतगुणं पुण्यं कपिलादानतः स्मृतम्।
दश सौवर्णिके शृङ्गे खुराः पञ्च पलान्विताः १(+)॥
पञ्चाशत् पलिकं कांस्यं ताम्रञ्चापि-तथैवच।
दाता च स्वर्गमाप्नोति यावदाभूत संप्लवम्॥
कांस्यं—दोहनपात्रम्, ताम्रं—पृष्ठ देशाच्छादकम्।
दक्षिणा तु सूवर्णमित्युक्तं प्राक्॥

इति मत्स्य पुराणोक्त गोदान विधानम्॥

—*—

## (१०४) अथ समानवत्सा दानम् २(*)।

—*—

### 288 महाभारते—

समान वत्सां कपिलां धेनुन्दत्वा पयस्विनीम्।
सुशीलां वत्ससम्पन्नां ब्रह्मलोके महीयते॥

अत्र समानवत्सां—समानवर्णवत्सामित्यर्थः।

रोहिणीन्तुल्यवत्साञ्च धेनुं दद्यात् पयस्विनीम्।
सुव्रतां वस्त्रसम्वीतां इन्द्रलोके महीयते॥

सुव्रतां सुशीलाम्।

समानवत्सां श्वेताञ्च धेनुन्दत्वा पयस्विनीम् ३(†)।
सुव्रतां वस्त्रसम्वीतां सोमलोके महीयते॥
समानवत्सां कृष्णान्तु धेनुन्दत्वा पयस्विनीम्।
सुव्रतां वस्त्रसम्वीतां अग्निलोके महीयते।

---

१ (+) दशसौवर्णिके शृङ्गे भवतः। रौप्यस्यपञ्च पलमयाः खुराः इ(?)। वासोयुग्ममाच्छादनार्थम्।

२ (*) इति नाना ग्रन्थोक्त-नानाविध कपिलादान-प्रकारः 'सुव्रता वत्ससम्पन्ना सुशीला वस्त्र संवीताम्' इति हेमाद्रि-धृतः पाठः।

३ (†) अत्र 'श्वेता'मित्यत्र-'अवर्णा' मिति हिमाद्रीय पाठः। अवर्णां कर्बुरामित्यर्थः।

वातरेणु सुवर्णान्तु सवत्सां कामदोहिनीम् ।
प्रदाय वस्त्रसम्वीतां वायुलोके महीयते ॥
समान वत्सां धूम्रान्तु धेनुन्दत्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंयुक्तां यमलोके महीयते ॥
अर्घ्यां हेमसुवर्णान्तु सवत्सां कामदोहनाम् ।
प्रदाय वस्त्रसम्वीतां वारुणं लोकमश्नुते १(*) ॥

'अत्रार्घ्या गौः २(‡) ।

'आप्यायध्वमर्घ्या' इति श्रुतेः ।

हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कामदोहनाम् ।
प्रदाय वस्त्रसम्वीतां कौबेरं लोकमाप्नुयात ॥

इति समानवत्सा-गोदानम् ॥

—*—

## (१०५) अथ दशवर्ण धेनुदानम् ।

—*—

गान्दद्याद्वेद पूर्णाय विप्राय गृहमेधिने ।
सुवर्णालङ्कृतां शृङ्गीं वस्त्रघण्टा-समन्विताम् ॥
प्रत्यग्रां त्रिसमृद्धन्तु-ललाट-तट तर्पणाम् ॥
राजतच्छन्न चरणां मुक्तालाङ्गुल भूषिताम् ॥

अत्र त्रिसमृद्धां—त्रिभिः शील-क्षीर-सन्तानैः समृद्धां युक्तामिति ।

कांस्योपदोहां तृप्ताञ्च लवणादि तृणोदकैः ।
गवां पुच्छं गृहीत्वा च ससुवर्णेन पाणिना ॥
गृहस्थो वेदविद्विप्रो दापयेत्तत् प्रतिग्रहम् ।
भोगसौख्यप्रदा श्वेता गोमाता पापनाशिनी ॥
कृष्णा स्वर्गप्रदा ज्ञेया गौरी च कुलवर्द्धिनी ।
रक्ता रूपप्रदा ज्ञेया पीता दारिद्र्यघातिनी ॥

---

१ (*) अत्र 'वारुण' मित्यत्र 'कौबेर' मिति चादर्श-पुस्तकान्तरस्थः पाठः ।

२ (‡) अर्घ्या पूज्या महामूल्या इति ।

पुत्रप्रदा कृष्णसारी नीला-धर्म्मविवर्द्धिनी।
कपिला सर्व्वपापघ्नी नाना वर्णाच मोक्षदा ॥
इति दशवर्णं धेनुदानम् ॥

289 **विष्णुधर्म्मोत्तरे च—**

हेमशृङ्गीं रौप्यखुरां मुक्ता लाङ्गुल-भूषिताम्।
आहताम्बर-सम्बीतां तथा कांस्योप दोहनाम् ॥
त्रिरात्रं स्थण्डिल मुखः त्रिरात्रं गोरसाशनः १(*)।
तृप्तान्तु तर्पिते दत्वा वाससां सम्बीते द्विजे ॥
त्रिरात्रं स्थण्डिलमुखः त्रिरात्रं गोरसैस्ततः।
प्राणसंहरणं कृत्वा गवां लोके महीयते ॥
यावन्ति धेनुरोमानि तावद् वर्षाणि मानवः।
दत्त्वैवं कपिला विप्र! प्राप्नोत्यभिमतं फलम् ॥
एवमनेक पुराणेषु गोदानमुक्तम्।

—*—

## (१०६) अथ देवताभ्यो गोदानम्।

—*—

290 **तत्रैव २(*) वशिष्ठ उवाच—**

पुण्यन्दिन मथासाध्य सुसन्तर्प्य पितॄंस्तथा।
कृतोपवासः सम्प्राश्य पञ्चगव्यं नरेश्वर! ॥
घृत-क्षीराभिषेकञ्च कृत्वा विष्णोः शिवस्य च।
तमभ्यर्च्च्य यथान्यायं पुष्पादिभिरनुत्तमम् ॥
उदङ्मुखीं प्राङ्मुखीं वा गृष्टिं कृत्वा पयस्विनीम्।
गृष्टिः—सकृत् प्रसूता गौरित्यर्थः ३(†)।

---

१ (*) अत्र 'स्थण्डिलमुखा' इति आदर्श-पुस्तकान्तरस्थः पाठः।
" स्थण्डिलमुखः-स्थण्डिलसमीपेशयानः यज्ञस्थिरारतः। गोरसाशनः—गो-क्षीर-घृतादि भोजनरतः हविष्याशी इत्यर्थः। प्राणसंहरणं-प्राणायामः।
२ (*) विष्णुधर्म्मोत्तरस्य इति।
३ (†) 'घृष्टि रित्यत्र गृष्टि रिति पाठः साधुः। गृह्णातीति क्तिच्। पृषोदरादित्वात् साधुः। घृष्टि—शूकरी न तु गौः। घृष्टिः स्त्री वर्षबन्धयां विष्णुक्रान्तासु ना किरी' इति मेदिनी। 'अथ गृष्टिः सकृत् प्रसूता गवी बदरयोः स्त्रियाम्' इति मेदिनी। अन्यानि नानाविधानि गोदानानि हेमाद्रौ दानखण्डे निगदितानि।

सुपुत्रां वत्ससम्प्रीतां सितयज्ञोपवीतिनीम् ।
स्वर्णशृङ्गीं रौप्यखुरां सुवर्णोपरि संस्थिताम् ॥
शक्तितो दक्षिणायुक्तां ब्राह्मणाय निवेदयेत् ।
गावोममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः ॥
गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥
गावो मे हृदये सन्तु गवां मध्येवसाम्यहम् ।
प्रदक्षिणं ततः कृत्वा धेनुं द्विजवरञ्च तम् ॥
इमां नः प्रतिगृह्णीष्व धेनुर्दत्ता मया तव ।
स मे पापापनोदाय गोविन्दः प्रीयतामिति ॥

### 291. मन्त्रान्तरं वह्निपुराणे—

या धेनुः काश्यपस्यासी दत्ते र्वा गोतमस्य च ।
साभिकामफला देवी इहलोके परत्रचेति १(*) ॥
एवमुच्चार्य्य तं विप्रं गोविन्दं नृप ! कल्पयेत् २(†) ।
शृङ्गमूले ब्रह्मविष्णू आवाहयामि ३(‡) ।

---

१ (*) 'सर्व्व कामफला' इति आदर्श-ग्रन्थान्तर-धृतः पाठः ।

२ (†) अत्र गोविन्द मूर्त्तिं सहिते वाचयेत् इति पुस्तकान्तर धृतः पाठः ।

३ (‡) गो-शरीरे देवता विशेषो यथा ग्रन्थान्तरे,—
'दन्तेषु मरुतो देवा जिह्वायान्तु सरस्वती ।
खुरमध्येतु गन्धर्व्वाः खुराग्रेषु तु पन्नगाः ॥
सर्व्व सन्धिषु साध्याश्च चन्द्रादित्यौ तु लोचने ।
ककुदि सर्व्वनक्षत्रं लाङ्गुले धर्म्म-माश्रितः ॥
अपाने सर्व्व तीर्थानि प्रस्रावे जाह्नवी नदी ।
नानाद्वीप समाकीर्णा श्चत्वार सागरास्तथा ॥
ऋषयो रोमकूपेषु गोमये पद्मधारिणी ।
रोमेषु सन्ति विद्याश्च त्वक् केशेष्वयनद्वयम् ॥
धैर्य्यं धृतिश्च शान्तिश्च पुष्टि र्वृद्धिस्तथैव च ।
विद्याशान्तिर्मतिश्चैव सन्ततिः परमा तथा ॥
गच्छन्ती मनुगच्छन्ति एता गां वै न संशयः ।
यत्र गावो जगत्तत्र देवदेवः पुरोगमाः, इत्यादि ॥—इति वराह पुराणे ।

शृङ्गाग्रे सर्व्वतीर्थानि, शिरोमध्ये महादेवम् ।
ललाटाग्रे देवान् , नासाग्रे शेष वासुकी ।
नासापुटयोः कम्बलाश्वतरौ । कर्णयो रश्विनौ ।
नेत्रयोः शशिभास्करौ । दन्तेषु वायून् ।
जिह्वायां वरूणम् । हुँङ्कारे सरस्वतीम् ।
गण्डयोः मासपक्षौ । ओष्ठयोः सन्ध्याद्वयम् ।
ग्रीवायां इन्दुम् । कुक्षौ रक्षांसि ।
उरसि साध्यान् । जङ्घयो धर्म्मम् ।
खुरमध्ये गन्धर्व्वान् । खुराग्रेषु पन्नगान् ।
खुरपश्चिमाग्रेऽप्सरोगणान् । पृष्ठे एकादश रुद्रान् ।
सर्व्वसन्धिषु वसून् । दध्नि नर्म्मदाम् ।
सर्पिषि हुताशनम् । रोमसन्धिषु देवकोटीन् ।
उदरे पृथ्वीम् । स्तनेषु चतुः सागरान् ।
आवाह्य यथाशक्त्या सम्पूजयेत् , उपकल्पयेच्च ।
अनुव्रजेत्तु गच्छन्तं पदान्यष्टौ नराधिप ! ।
अनेन विधिना धेनुं यो विप्राय प्रयच्छति ॥
सर्व्वकाम समृद्धात्मा विष्णुलोकं स गच्छति ।
शिवाय विष्णवे वापि यस्तु दद्यात् पयस्विणीम् ॥
धेनुं स्नानोपहारार्थं परं ब्रह्म स गच्छति ।
सूर्य्यं वा शक्तिमुद्दिश्य दद्याद्ब्राह्मणपन्तथा ॥
इति देवाताभ्यो गोदानम् ॥

—*—

## (१०७) अथ वृषभैकादश गोदानम् ।

—*—

292. **स्कान्दे,—**

गावः सर्व्वप्रयत्नेन देया एता प्रयत्नतः ।
धेनवो यो न शक्तः स्यादेका देया प्रयत्नतः ॥

सर्व्वेषामेव रुद्राणां प्रीत्यर्थं सुप्रसन्नधीः ।
दशगावः सवृषभा वृषभैकादशी स्मृता ॥
शिवाय विनिवेद्येयं विशुद्धेनान्तरात्मना ।
रुद्रैकादश तुल्यात्मा बलभोगादिभिर्गुणैः ॥
शिवादि सर्व्वलोकेषु यथेष्टं मोदते वशी ।

293. **भविष्येतु—**

दशगावः सवृषभा वृषभैकादशाश्च ताः ।
सूर्य्याय विनिवेद्येह यत् फलं लभते शृणु ॥
द्वादशादित्य तुल्यात्माऽणिमादिगुणैर्युतः ।
सौरादि सर्व्वलोकेषु यथेष्टं मोदते दिवि १(*) ॥

—*—

## (१०८) अथ वृषभाधिक, गोशत-दानम्, २(†) ।

—*—

294. **शिवधर्म्मे,—**

वृषभं गोशतन्दद्याच्छिवायातीव शोभनम् ।
त्रि सप्तकुलजैः सार्द्धं शृणु यत् फलमाप्नुयात् ॥
सूर्य्यकोटि-प्रतीकाशै र्विमानैः सर्व्वकामिकैः ३(०) ।
अनेक यानसंख्यानैः सुरासुर सुपूजितैः ।
शतरुद्रबलोपेतो वीरभद्र इवापरः ॥
गत्वा शिवपुरन्दिव्यं अशेषाधिपति र्भवेत् ।

295. **भविष्यपुराणे—**

सवृषं गोशतं दत्वा भास्कराय नराधिपः ।
त्रिसप्तकुलजैः सार्द्धं सूर्य्यलोके महीयते ॥
सूर्य्यकोटि-प्रतीकाशो दिवाकर इवापरः ।
गत्वा दित्यपुरं रम्यं क्रीड़ते सूर्य्य-वत्नृपः ॥

---

१ (*) 'मोदते यथोति' पादचंपुस्तकान्तर धृतः पाठः ; ।
२ (†) चच गोशतं तैः सार्कं इषभच दद्यात् ।
३ (०) 'सर्व्वकामिकैः' रित्यच सर्व्वभौमिकैः इति हेमाद्रीय-पाठः ।

मुक्त्वातु विपुलान् भोगान् प्रलये सर्व्वदेहिनाम्।
मोहकञ्चुक मुत्सृज्य विशत्यादित्य मण्डलम्।
सर्व्वज्ञः सूर्य्य-परमः शुद्धः स्वात्मनि संस्थितः।
सर्व्वगः परिपूर्णत्वात् सूर्य्यवद्दीप्तिमान् भवेत्॥
इति शिवधर्म्मोक्त-वृषभाधिक गोशतदानम् १ (‡)॥

—*—

## (१०६) अथ स्वरूप गोदान-वचनानामेक वाक्यतया २ (*)। प्रयोगः प्रस्तूयते।

—*—

सकल सम्भारान् सम्भृत्य कृतनित्यक्रियो यजमानः पर्व्वकाले गणेशं स्मृत्वा कुश-तिल-यव जलान्यादायाद्येत्यादि सङ्कीर्त्य कामनानुसारेण सङ्कल्प्य श्रीपरमेश्वर-प्रीत्यर्थं गोदानमहं करिष्ये, तदर्थं ब्राह्मणपूजनं वरणञ्च करिष्ये इत्युक्त्वा ब्राह्मणं सम्पूज्य तुभ्यमहं गां सम्प्रददे, ददस्वेति प्रत्युक्ते तद्धस्ते जलन्दद्यात्।

ततः कर्त्तव्येऽस्मिन् गोदानकर्म्मण्येभि श्चन्दनाक्षत-ताम्बुल-पुगफलालङ्कार-वासोभिः अमुक गोत्रममुक शाखाध्यायिन ममुकशर्म्माणमेवम्विधोऽहं सम्प्रदानत्वेन त्वां वृणे, वृतोऽस्मीत्युक्ते "व्रतेन दीक्षा" ३ (†)मिति पठेत्। ततो गवामङ्गेष्विति मन्त्रेण ४(+) 'सोमोधेनुमिति ५(०) वा सवत्सांगां पूजयेत गन्धादिभिः।

**तत्र मन्त्रः—**

आच्छादनं मया दत्तं शुद्धं चैव सुनिर्म्मलम्।
सुरभे! वस्त्रदानेन प्रीयतां परमेश्वरः॥ इति।

---

१ (‡) 'इति देवताभ्यो गोदानम्' इत्यवशानोक्तिर्दृश्यते इयमपि साध्वीस्यात्।
" 'वृषोऽसि भगवान् धर्म्म चतुष्पादः प्रकीर्त्तितः।
वृणोमि तमहं भक्त्या समां रक्षतु सर्व्वतः'। इति वृषमन्त्रः।

२ (*) प्रागुक्तनानाविधगोदान वचनानामित्यर्थः।

३ (†) 'व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते'। शुक्ल यजुः १९।३०

४ (+) एते मन्त्राः प्रागुक्ताः।

५ (०) 'सोमोधेनुं सोमोऽर्व्वन्तमाशुं सोमो वीरं कर्म्मण्यं ददाति। सादन्यं विदथ्यं सभेयं पितृ श्रवणं यो ददाशदस्मै'। तत्रैव १०······३४।२१।

सुरभे त्वं जगन्माता देवी विष्णुपदे स्थिता ।
ग्रासं गृह्ण मया दत्तं गोमात स्त्रातुमर्हसि ॥ इति

अनेन गोग्रासं दत्वा १(*) गावोमे अग्रतः सन्तु २(×) इत्यादि मन्त्रैर्गां प्रदक्षिणी कृत्य प्राङ्मुख-स्थित-गोः पुच्छे प्राङ्मुखस्तर्पणं कुर्य्यात् । स्व स्व शास्त्रोक्त-विधिना देवर्षि पितृतर्पणं कृत्वा मन्त्रान् पठन् प्रसिञ्चेत् ।

## तन्मन्त्रास्तुः—

'आब्रह्मणो ये पितृवंशजाताः' इत्यारभ्य 'तेभ्यः स्वधा तोयमिदं ददामि' इत्यन्तः 'पितृवंशे मृता येच' इत्यारभ्य 'धर्म्मतोयं मयादत्तं अक्षय्यमुपतिष्ठताम्' ।

उच्छिन्न बान्धवा येच लुप्त-पिण्डोदकक्रियाः ।
ते तृप्तिमखिलां यान्तु गोपुच्छोदक तर्पणात् ॥
ब्रह्माद्या देवताः सर्व्वाः ऋषयो मुनयस्तथा ।
असुरा यातुधानाश्च मातरश्चण्डिका स्तथा ॥
दिक्पाला लोकपालाश्च गृहदेवाधिदेवताः ।
ते सर्व्वे तृप्तिमायान्तु गोपुच्छोदक-तर्पणात् ।
विश्वेदेवा स्तथादित्याः साध्याश्चैव मरूद्गणाः ।
क्षेत्र पीठोपपीठानि नदनद्याश्च सागराः ।
पाताला नागकन्याश्च नागाश्चैव सपर्व्वताः ॥
पिशाचा गुह्यकाः प्रेता गन्धर्व्वोरग राक्षसाः ।
पृथिव्यापश्च तेजश्च वायुराकाश मेवच ॥
दिवि भूव्यन्तरिक्षेच ये च पातालवासिनः ।
शिवः शिवा तथा विष्णुः सिद्धिर्लक्ष्मीः सरस्वती ॥
तपोवनानि भगवानव्यक्तं परमेश्वरः ।
क्षेत्रौषधि-लतावृक्षः वनानां पतिदेवताः ॥

१ (*) 'ग्रास मुष्टिं परगवे साग्रं दद्यात्तु यः सदा ।
अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति' इति स्मृती ।

२ (×) एते मन्त्रा प्रागुक्ता गोदान विषये ।

कपिलः शेषनागश्च तक्षकोऽनन्त एवच १(*) ।
आप्या जलचरा जीवाः असंख्याता स्त्वनेकशः ।
चतुर्द्दश यमाश्चैव येचान्ये यमकिङ्कराः ॥
सर्व्वेऽपि यक्षराजानः पक्षिनः पशव स्तथा ।
स्वेदजोद्भिज्ज जीवाश्च अण्डजाश्च जरायुजाः ॥
अन्येऽपि वनजा जीवा दिवानिशि विहारिणः ।
अजा-गो महिषरूपाश्च येचान्ये पशवस्तथा ॥
शान्तिदा शुभदास्ते स्युः गोपुच्छोदक तर्पणात् ।
आब्रह्मस्तम्भ पर्य्यन्त मित्यारभ्येदमस्तु विलोदकमिष्यताम् ।
पञ्चगावः समुत्पन्ना मथ्यमाने महोदधौ २(†) ।
तासां मध्येतु या नन्दा तस्यै देव्यै नमोनमः ॥
पृष्ठे ब्रह्मा गले विष्णुर्मुखे रुद्रः प्रतिष्ठितः ।
मध्ये देवगणाः सर्व्वे रोमकुपे महर्षयः ॥
नागाः पुच्छे खुराग्रेषु ते चाष्ट कुलपर्व्वताः ।
मूत्रे गङ्गादयोनद्यो नेत्रयोः शशिभास्करौ ।
एते यस्यां स्थिता देवाः सा धेनुः वरदाऽस्तु मे ।
गावः श्रेष्ठाः पवित्राश्च पावना जगदुत्तमाः ॥
ऋते दधिघृताभ्याञ्च नेह यज्ञः प्रवर्त्तते ।
अन्या गाराणि विप्राणां देवतायतनानि च ॥
पूयन्ते संस्कृता ३(‡) यासां किन्देयमधिकम्भवेत् ॥ इति

---

१ (*) 'अनन्तो वासुकिः पद्मो महापद्मश्च तक्षकः ।
कर्कोटः कुलीरः शङ्खः ( शङ्कुः ) ह्यष्टौ नागाः प्रकीर्त्तिताः । इति पुराणे ।
जीवाश्चतुर्विधा यथा—
जरायुजा-अण्डजोद्भिज्ज-स्वेदजाः । इति सांख्यदर्शने वैद्यकेच । देवानां देवमनसा
मानसजाश्च । यथा—ब्रह्मणः सनकादयः मानसतनयाः ।
अत्र यमादि-चित्रगुप्तान्ताश्चतुर्द्दश यमाः शास्त्र प्रसिद्धाः ।
'आब्रह्म स्तम्बपर्य्यन्तं जगदप्यायताम्' इति ।
अन्यत्र 'आब्रह्मस्तम्ब पर्य्यन्तमिदमस्तुतिलोदकैः' इति स्मृतिः ।
गोपुच्छ निर्गतोदकतर्पणमुपागुक्तम्।
२ (†) समुत्पन्न इत्यत्र 'समुत्पन्ना' इति पाठः साधुः ।
गवा मुत्पत्ति गोंपुच्छितदेवानां नामोल्लेखं ऋषयः विदधति ।
३(‡) 'पूयन्ते सत्कृता' इत्यत्र 'संस्कृताः' 'सुकृताः' इतिच सम्यक् पाठः ।

## (११०) अथ गो-प्रार्थना ।

—*—

या लक्ष्मीः सर्व्वभूतानां या च देवेष्व वस्थिता ।
धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥
विष्णोर्वक्षसि या लक्ष्मी र्या लक्ष्मीर्धनदस्य च ।
लक्ष्मी र्या लोकपालानां साधेनुर्वरदा स्तु मे ॥
स्वधां त्वं पितृयज्ञानां स्वाहा यज्ञ भूजान्तथा ।
सर्व्वपापहरा धेनु स्तस्माच्छान्ति प्रयच्छ मे १(†) ॥

एभिर्मन्त्रैरणुमन्त्र्य पुष्पाञ्जलीन्दत्वा कुशतिलयवतुलसी जलान्यादायाद्येत्याद्युक्त्वा इमां गां रुद्र दैवत्यां सुवर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठां मुक्तापुच्छां वस्त्राच्छादितां कांस्य-दोहामेतां अमुकगोत्रायेत्यादि पूर्व्ववच्चतुर्थ्यन्तं प्रयुज्य स्वगोत्रादि ग्रहण पूर्व्वक ममुक-शर्म्माहं तुभ्यमहं सम्प्रददे नममेति तद्धस्ते जलन्दद्यात् ।

यज्ञ साधन भूता या विश्वस्याधि-प्रणाशिनी ।
विश्वरूपधरो देवः प्रीयता मनया गवा ॥
गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्द्दश ।
यस्मात्तस्माच्छिवं मेस्यादिहलोके परत्र च ॥
जलशायी ब्रह्मपिता पद्मनाभः सनातनः ।
अनन्तभोगशयनः प्रीयतां परमो हरिः ॥
इमान्त्वं प्रतिगृह्णीष्व धेनुर्दत्तां मया तव ।
स नः पापापनोदाय गोविन्दो भवतु प्रभुः २(‡) ॥

---

'पूजन्ते सततंता' इत्यत्र 'संस्कृताः' इति च पाठः सम्यक् रोचते ।
१ (†) गोदानकाले ऽर्चनानन्तरं साञ्जलिः सन् प्रार्थनमिदं कुर्य्यात् ।
२ (‡) क्वचिदादर्शे चान्ये प्रार्थनमन्त्राः दृश्यन्ते ।—
'ॐ देवस्या याच रुद्राणी शङ्करस्य च या प्रिया ।
धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु ॥
ॐ सर्व्वदेवमयीं दोग्ध्रीं सर्व्वदेवीमयीन्तथा ।
सर्व्वलोक निमित्ताय सर्व्वलोक मयीं स्थिराम् ॥
प्रयच्छामि महाभागामक्षयाय शुभाय ताम्' ।
अपरश्चाप्युक्तम्—
'ॐ चतुर्मुखस्य या लक्ष्मीः स्वाहा याच विभावसोः ।
चन्द्रार्क शक्र लक्ष्मी र्या धेनुरूपास्तु सा-श्रिये' ॥
'गोविन्दो भवतुद्विज' इति पाठान्तरं सन्दर्भान्तरे ।

इति पठित्वा प्रणमेत् १(*)।

ततः प्रतिग्रहीता स्वस्तीत्युक्त्वा 'देवस्यत्वेति' पठित्वा २(†) प्रतिगृह्णामीत्युक्त्वा 'कोऽदा' दिति ३(‡) कामस्तुतिं पठेत्। ततः कर्त्ता कृतैतद् गोदान प्रतिष्ठार्थं मिमां सुवर्णदक्षिणामग्निदैवतातुभ्यमहं सम्प्रददे नममेति सुवर्णं दद्यात। ततो गो सहितं व्रजन्तं विप्रमनुव्रज्य गोमतीं पठेत्। सा यथा—

गावोऽस्माकं वयं तासां यतो गावस्ततो वयम्।
ब्राह्मणाश्चैव गावश्च कुलमेकं परं मतम्॥

ततो 'गावः सुरभयो नित्यमित्यादि—पवित्राभ्यो नमोनम'—इत्यन्तं पठित्वा 'गावोममाग्रतः सन्त्वि'ति गां प्रदक्षिणीकृत्य द्विजं विसृज्य भूरिदक्षिणामन्येभ्यो दत्वा ब्राह्मणान् गुरुं सूर्य्यञ्च नमस्कृत्य यथाशक्ति ब्राह्मणान् भोजयित्वा 'यस्य स्मृत्वा'चेति फलमीश्वराय समर्प्य बन्धुभिः सह भुञ्जीत।

गौरेकस्यैव दातव्यता।

गौरेकस्यैव दातव्या श्रोत्रियाय विशेषतः।
सा तारयति परान् पूर्व्वान् सप्तसप्त दशैव तु ४(०)॥
नैका बहुभ्यो दातव्या यतोदोषकरी भवेत्॥
इति हेमाद्रावाङ्गिरसोक्तेः।

इति प्रत्यक्षगोदान प्रयोगः॥

—*—

१ (*) भविष्यपुराणे—
'गामालभ्य नमस्कृत्य कृत्वा चैव प्रदक्षिणम्।
प्रदक्षिणी कृता तेन सप्तद्वीपा वसुन्धरा'॥

२ (†) देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्।
पुष्णोहस्ताभ्याम्॥ शुक्ल यजुः १।२४।

३ (‡) 'कोऽदात्कस्मा अदात्कामोऽदात् कामायादात्।
कामोदाता कामः प्रतिग्रहीता कामैतत्ते'॥ शुक्ल यजुः ७।४८।

४ (०) गो प्रणामे ब्रह्मपुराणम्—
'सदा गावः प्रणम्यास्तु मन्त्रेणानेन पार्थिव।
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एवच।
नमो ब्रह्म सुताभ्यश्च पवित्राभ्यो नमोनमः॥
मन्त्रस्य स्मरणादेव गोदान फलमाप्नुयात्'।

## (१११) अथोभयतोमुखी गोदानम्।

—*—

296. **मात्स्ये—**

रुक्मशृङ्गीं रौप्यखुरां मुक्तालाङ्गुल भूषिताम्।
कांस्योपदुहनां राजन् सवत्सां द्विजपुङ्गवः॥
प्रसूयमानां योदद्याद्धेनुं द्रविण संयुताम् १(*)।
यावद् वत्सोयोनिगतो यावद्गर्भो न मुञ्चति॥
तावद्गौः पृथिवी ज्ञेया सशैल वनकानना॥
अत्र द्रविणसंयुतामिति द्रविण मत्र (न्त्र) दक्षिणात्मकम्।
ज्ञातव्या द्विपला मध्ये पलास्यात् कनीयसी मता २(†)।

297. **वाराहेतु—**

यश्चोभयमुखीं दद्यात् प्रभूत-कनकान्तिताम्।
तद्दिने पायसाहारः पयसा वापि वाहयेत॥
सुवर्णस्य सहस्रेण तदर्द्धेनापि वा पुनः ३(‡)।
तस्याप्यर्द्धं शतं वाथ पञ्चाशद्वा तदर्द्धकम्॥
यथाशक्त्याऽपि दातव्यं वित्तशाठ्यं विवर्जितम्।
इति परिमाणान्तरमुक्तम्।
इमां गृहाणोभयमुखीं भवां ख्याता ममाऽस्तु वै।
मम वंश-विशुद्धेश्च सदा स्वस्ति करी भव॥
'ईरावती धेनुमतीहि'४(०) जप्त्वा 'देवस्यत्वा'तदनन्तरम्।
प्रतिगृह्णामि त्वां धेनुं कुटुम्बार्थे विशेषतः॥

---

१ (*) 'सावितारः परी पूर्ब्बास्' इति ग्रन्थान्तर-धृतः पाठः।
—पञ्च प्रसूयमानां' इति ग्रन्थान्तरस्थः पाठः। द्रविणं सोपस्कर धनमवज्ञेयम्।

२ (†) अनेन द्रविण-परिमाणमुक्तम्। तत्र प्राक् परिभाषायामवादि।

३ (‡) 'नापि तामिति' हेमाद्रि-धृतः पाठः।

४ (०) इरावती धेनुमती हि भूतं सूयवसिनी मनवे दशस्या।
व्यस्कभ्ना रोदसी विष्णवे ते दाधर्थ पृथिवी मभितो मयूखैः स्वाहा। शुक्ल यजुः ५।१६।

स्वस्ति भवतु मे नित्यं रुद्रमातर्नमोनमः ॥
'द्यौस्त्वा ददा'त्विति वदेत् 'पृथिवी त्वा प्रतिगृह्णातु' १(*) ।
'कइदं कस्माऽदात्' जपेन्मन्त्रं वसुन्धरे २(†) !
विसृजेद् ब्राह्मणं देवि ! गाञ्च तस्य गृहं नयेत् ॥

## 298. मात्स्ये—

प्रसूयमानां योदद्यात् धेनुं द्रविणसंयुताम् ३(‡) !
ससमुद्रा गुहाभूमिः सशैलवन कानना ॥
चतुरन्ता भवेद्दत्ता पृथिवी गोत्र संशयः ।
यावन्ति धेनुरोमाणि वत्सस्यच नराधिप ! ॥
तावत् संख्यामुपगणान् देवलोके महीयते ।
पितॄण् पितामहांश्चैव तथैव प्रपितामहान् ॥
उद्धरिष्यत्यसन्देहो नरकाद्‌भूरिदक्षिणः ।
घृतक्षीरवहाः कूल्या दधिपायस कर्द्दमाः ॥
यत्र यत्र गतिस्तस्य भवेदीप्सित कामदः ।
गोलोकः सुलभस्तस्य ब्रह्मलोकस्य (श्च)पार्थिवः ।
स्त्रियश्च तं चन्द्रसमानवक्त्राः,
प्रतप्त जाम्बुनद-तुल्यवर्णाः ।
महानितम्ब-स्तनमध्यवृत्ताः,
भजन्त्यजस्रं नलिनाभनेत्राः ॥
यावत् वत्सस्य पादौ द्वौ मुखं योन्याश्च दृश्यते ।
तावद्द्यौः पृथिवी ज्ञेया यावद्‌गर्भं न मुञ्चति ॥
सर्व्वतः शुक्लवर्णा या पादेषु च विशेषतः ।
कपिला सातु विज्ञेया सर्व्वपाप-प्रणाशिनी । इत्यादि ।

---

१ (*) 'द्यौ त्वं प्रति ददामि, पृथिवी ते प्रतिगृह्णामीति' हेमाद्रि-दानखण्डे ।
२ (†) 'क इदं कस्माऽदात्, इति कृष्ण-यजुर्व्वेदे ।
३ (‡) 'मथ प्रसूयमाना' मित्यर्थः । -प्रसवमानमिति क्वचिदादर्शे मन्यं पाठः ।
* 'कपिलासातु' इत्यत्र एषा कपिला भातीति ।

## अथैतत्-प्रयोगः ।

299. **तदाह महाच्यवनः—**

एतस्याः प्रदानकालः प्रसवकालोनान्यं कालं प्रतीक्षते । व्यतीपात-विषुवायन-षडशीति-मुख-विष्णुपदी ग्रहणान्ताः सर्व्व एव पुण्यकालाः, तदैव यत्र चार्द्धप्रसूता तत्र स्नातो ब्राह्मणं श्रुत-शील-सत्य-शौचवृत्तजातिक्रियाद्यैर्गुणैरुपेत माहुय प्रणिपत्य ब्रुयात् ।

भगवन्नतिचार्त्तोऽहं भीतोऽस्मादगाधादपराधात् संसारार्णवात् समुत्तरयामि दशपरान् दशपूर्व्वानात्मानञ्च, स्वामिन् भवन्तं दानपात्रमासाद्य तन्मय्यनुग्रहोऽस्तु बुद्धेर्मम (मां) गां गृहाण नार्थलिप्सया, तेन तथाऽस्त्वित्युक्त्वा देशकालादि संकीर्त्य-पुराणोक्त-फलकामो विष्णुप्रीतिकामो वा उभयतोमुखी गोदानमहं करिष्ये इति सङ्कल्प्य प्रवराद्युच्चारणपूर्व्वकं ब्राह्मणं वृत्वा तस्मै एतानि दत्वा सन्तोष्य सुवर्णशृङ्गा—

रौप्यखुर ताम्रपृष्ठ (कांस्य क्रोड़) कांस्यदोह—मुक्ताफल वस्त्रादिकं गोः समीपे स्थापयित्वा तामनुमन्त्रयेत् —

'त्वमहीमवनिर्व्विश्वधेन्वा'मिति मन्त्रं पठित्वा 'आगावोऽग्रएजभद्रमक्रन्निति' गोसूक्तेन गां पूजयेत् ।

ततो वत्समुखे निर्गते घृत सुवर्णयुत कांस्यपात्रे गोपुच्छं निक्षिप्य घृताक्तं कृत्वा प्राङ्मुखोदाता सपत्नीकः, उदङ्मुखावस्थित ब्राह्मणाय तद् गोत्राद्युच्चारण पूर्व्वकं नाम-संकीर्त्य स्वनामोत्कीर्त्तन पूर्व्वक मिमामुभयतोमुखीं सुवर्णशृङ्गीं रौप्यक्षुरां ताम्रपृष्ठां कांस्यदोहनाद्युपेतां रूद्रदैवतां श्रीविष्णु प्रीतये तुभ्यमहं गां सम्प्रददे न ममेत्युक्त्वा प्राङ्मुखावस्थित-गोपुच्छं तिलकुश जलयुतं ब्राह्मणहस्ते निक्षिपेत् ।

अत्रैतान् मन्त्रान् साञ्जलिः पठेत्—

यज्ञ साधनभूता या विश्वस्याघ १(*) प्रणाशिनी ।
विश्वरुप धरोदेवः प्रीयतामनया गवा ॥
जलशायी ब्रह्मपिता पद्मनाभः सनातनः ।
अनन्त-भोग शयनः प्रीयतां प्रत्तयाऽनया ।
इमां गृहाणोभयमुखीं भवांस्त्राता ममास्तु वै ॥
ममवंश विशुद्धस्य सदा स्वस्ति करी भव ।

---

१ (*) पत्र 'विश्वस्याघ प्रणाशनी'ति इतिपाठः पाठः ।

तत 'इरावती धेनुमतीहि' इति जप्त्वा 'देवस्येत्वे'ति चोक्त्वा-प्रतिगृह्णातु भवानिति वदेत् ।
ततः प्रतिग्रहीता—धेनुस्त्वां प्रतिगृह्णामि कुटुम्बार्थे विशेषतः ।

स्वस्ति भवतु ते (मे) नित्यं रुद्रमात र्नमोऽस्तुते ॥

इति मन्त्रं पठित्वा 'देवस्यत्वे' त्यन्ते १(*) प्रतिगृह्णामीत्युक्त्वा 'क इदं' कस्माऽदा'-दिति २(†) कामस्तुतिं पठेत् । 'द्यौ स्त्वा ददातु' 'पृथिवी त्वा प्रतिगृह्णा'त्विति दातृ-प्रतिग्रहितारौ क्रमेण पठेयाताम् ।

ततः कृतैतदुभयतो मुखीं गोदान प्रतिष्ठार्थं शक्त्यनुसारेण कलत्रयादि परिमितं सुवर्णं दक्षिणात्वेन सम्प्रददे न ममेति-दक्षिणान्दत्वा सति विभवे रौप्यरत्नानि ग्राम-क्षेत्रं धान्यानि वस्त्रानि रसांश्च यथाशक्ति दद्यात् । ततः प्रतिग्रहीता 'गर्भोऽस्यौषधीना'-मिति ३(‡) मन्त्रं पठन् दक्षिण पाणिना वत्समाकर्षयेत् ।

अथ निर्गते वत्से, कर्त्ताऽग्निमुपसमाधाय गोपुच्छे 'ये देवा स्ते दिवीति' देवां-स्तर्पयेत् । 'सहस्तोमां इति ऋषीन् ४(+) 'उशन्त स्त्वे' ५(×) ति पितॄन् । 'इयं मे गङ्गे' इति नदीः ६(ऽ) 'अद्रिक्षिः सुतोमति ७(ऽऽ) रिति पर्व्वतान् । 'वनस्पते शतवल्शा' ८(०) इति वनस्पतीन् । 'समुद्रः ज्येष्ठानाम्' ९(००) इत्युदधीन् । 'अहिरिव-भोगैः पर्य्येति' इति १०(||) नागान् ।

---

१ (*) देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पुष्णोऽस्ताभ्याम् ।
आददे नार्य सीदमहं रक्षसां ग्रीवा अपि कृन्तामि बृहन्नसि बृहद्रवा बृहती मिन्द्राय वाचं वद' । शुक्ल यजुः ५।२२ ।

२ (†) कृष्णयजुस्तैत्तिरीयब्राह्मणे २ काण्डे, २ प्रपाठके, २ अनुवाके ।

३ (‡) 'गर्भो अस्योषधीनां गर्भोवनस्पतीनाम् ।
गर्भो विश्वस्य भूतस्याग्ने गर्भो ऽपामसि' : शुक्ल यजुः १२।३७ ।

४ (+) ऋग्वेदे ८।८।२२, १०।१६।१२ ।

५ (×) 'उशन्तस्त्वानिधीमह्युशन्तः समिधीमहि । उशन्नुशत आवह पितॄन् हविषे अत्तवे' ।
शुक्ल, यजुः १९।७० ।

६ (ऽ) ऋग्वेदे १।१८।७, यजुर्व्वेदे ३।२८।२, ४।१४।५ ।

७ (ऽऽ) ऋग्वेदे १।१८।७, ३।२०।२, अथर्व्ववेदे ५।२०।१०, ८।१२।१६ ।

८ (०) ऋग्वेदे १०।१३०।७ ।

९ (००) ऋग्वेदे ३।४।१०, ६।४७।२६, १।१३।११ ।

१० (||) ऋग्वेदे १।१२।५, यजुर्व्वेदे २९।५१, ५।४।११६ ।

" "अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमांसं परिपातु विश्वतः ।"
शुक्ल-यजुः, अः २९, मः, ५१ ।

'मधुवाता ऋतायते' १(*) इति औषधीः । 'तदनुपृथ्वीभि' २(†) रिति पृथिवी । 'इले द्यावा पृथिवी मही द्यौः' । 'उर्वीन जगत्तृप्यतु' इति तर्पयेत् ३(‡) ।

ततः आचम्य स्वगृह्योक्त प्रकारेणाज्यभागान्तं कृत्वा 'गोरीभिर्मायेति' ४(+) मन्त्रेण चतुरशीत्याज्याहुतीर्हुत्वा होमशेषं समाप्य यथाशक्ति ब्राह्मणभोजनं कारयित्वा सङ्कल्प्य स्वस्त्ययनं वाचयीत ।

अथास्यकर्म्मणो व्यु (व्य) ष्टि मुदाहरन्ति ।
अभक्ष्यभक्ष्यमपेय पायिनं ब्रह्मघ्नं सद्य एव पुणाति ।
उपाध्यायीं स्वसुतां स्वामि-भार्य्यां मातरं ५(×) ॥
मातृस्वसारं मातुलानीं भगिनीं भागिनेम्
शिष्यजायां धात्रीं मनागप्यगम्यां ६(०) गत्वोभय-
शिरसं सपरिवारं ब्राह्मणाय दद्यात् ।

---

१ (*) 'मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः मधुनक्त—मुतोषसो मधुमत् पार्थिवं रजः । मधुद्यौरस्तुनः पिता ।' इत्यादि-शुक्ल यजुः १३।२७—२८.

२ (†) अथर्व्ववेदे ४।२'४. ४।२६।१२ ।

३ (‡) ऋग्वेदे १।११२।१, ३।१।१५, ४ ३।३ ।

४ (+) ऋग्वेदे—२।३।२२,, १।१६४।४१, ८।१२।३, अथर्व्ववेदे ९।२६।२१ ।

५ (×) अगम्या अमैथुनार्हा स्त्री । अत्र यम उवाच,—
'या या गम्या नृणामेव नि बोध कथयामि ते ।
स्व स्त्री गम्याच सर्व्वेषां इति वेद निरूपिता ।
अगम्या च तदन्या या इति वेदविदो विदुः ।
सामान्यं कथितं सर्व्वं विशेषं शृणु-सुन्दरि ! ।
अगम्याश्चैव या याश्च निबोध कथयामि ताः ॥
शूद्राणां विप्रपत्नी च विप्राणां शूद्र कामिनी ।
अत्यगम्याच निन्द्या च लोके वेदे पतिव्रते ॥
गुरुपत्नीं राजपत्नीं सपत्नीमातरं प्रसूम् ।
सुतां पुत्रवधूं श्वश्रूं सगर्भां भगिनीं सतीम् ॥
सोदरभ्रातृजायाच भगिनीं भ्रातृकन्यकाम् ।
शिष्याच शिष्यपत्नीञ्च भागिनेयस्य कामिनीम् ॥
भ्रातृ पुत्रप्रियाश्चैवात्यगम्या-माह-पद्मजः' । इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे २७ अः ।

६ (०) 'समागम्यामम्या'मिति क्वचिदन्यत्र पाठः । स च साधुरिति प्रतीतिः ।

परिकरोऽस्याः सुवर्ण रत्न रूप्याणि क्षेत्राणि ग्राम-धान्यानि वस्त्राणि रसान् लवणाद्यां श्चन्दनाद्यान् गन्धान् शतं गवां तदर्द्ध-तदर्द्ध वा सर्व्वस्वं वा सहतया ब्राह्मणाय दद्यान्महापातक विमुक्त्ये इति ।

अथ ब्राह्मणं विसृज्य तेनसह गच्छन्तीं गामनुव्रज्य ततोगोमती विद्यां पठेत् १(*) :

सा यथा—गावः सुरभयो नित्यं गावोगुग्गुल गन्धिकाः २(†) ।
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥
अन्नमेव परं गावो देवानां हविरुत्तमम् ।
पावनं सर्व्वभूतानां क्षरन्ति च वहन्ति च ॥
हविषा मन्त्रपूतेन तर्पयन्त्यमरान् दिवि ।
ऋषिणामग्निहोतॄणां गावो होमे प्रतिष्ठिताः ॥
सर्व्वेषामेव देवानां गावः शरणमुत्तमम् ।
गावः सर्व्वस्य लोकस्य गावो धन्याः सनातनाः ।
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ॥
नमो ब्रह्म सुताभ्यश्च पवित्राभ्यो नमो नमः ।
घृत क्षीर प्रदा गावो घृतयोन्यो घृतोद्भवाः ॥
घृतनद्योघृतावर्त्ता स्ता मे सन्तु सदा गृहे ।
घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम् ॥
घृतं मे सर्व्वतश्चैव घृतं मे मनसि स्थितम् ३(‡) ।
गावोममाग्रतः सन्तु गावः पृष्ठत एव ॥

---

१ (*) गोमती विद्यापाठस्तु प्राग्गोदानविधौ यम म्न्युक्तः समुल्लिखितः, गोदान प्रयोगप्रसङ्गे । अत्र तु पुनरुभयतोमुखी गोदान प्रस्तावे उच्यते, अयं विषय भिन्नत्वान्न दोषः ।

२ (†) गोमतीविद्या १७५ पृः ।

३ (‡) गोदुग्ध सेवन कालः तत् फलञ्चाह—
'गवां प्रत्युषसि क्षीरं गुरुविष्टम्भि दुर्जरम् ।
तस्मादभ्युदिते सूर्य्ये यामं यामार्द्धमेव वा ।
समुत्ताप्य पयोयाह्यं तत् पथ्यं दीपनं लघु ।
विवत्सा बालवत्सानां पयोदोषलमीरितम्' ।
इति गोः पयोगुणाः । तद्घृतगुणाश्च—
'शस्यञ्च धी-कान्ति-स्मृति-बल-मेधा-पुष्ट्यग्निवृद्धि-गुरुवपुःस्थौल्य-कारित्वम् । वातश्लेष्म-श्रम-पित्तनाशित्वम् । विपाके मधुरम्' इति राजनिर्घण्टे ।

गावो मे सर्व्वतः सन्तु गवां मध्ये वसाम्यहम् ॥ इति ।
ततः स्वगृहमेत्य ब्राह्मणान् भोजयित्वा १(*)
स्वयं क्षीराहारः पायसाहारो वा तद्दिने भवेदिति ।
इत्यमर रत्नोक्त-उभयतोमुखी गोदान प्रयोगः ॥

—*—

## (११२) अथ वैतरणी धेनु दानम् २(†)

—*—

300. **ब्रह्मवैवर्त्ते, युधिष्ठिरं प्रति मार्कण्डेयः—**

या सा वैतरणी नाम यमद्वारे महानदी ।
तस्याः प्रमाणं रूपञ्च शृणु सर्व्वं भयावहम् ॥
शतयोजन-विस्तीर्णा पृथुत्वे सा महासरित् ।
अगाधानन्तरूपा सा दृष्टमात्राद्भयावहा ॥
पूयशोणित तोया सा मांस कर्द्दम निर्म्मिता ।
कृमिभिः सङ्कुलं भयं वज्रतुण्डैरयो मुखैः ॥
शिशुमारैश्च मकरैः वज्र कर्त्तरि संयुतैः ।
अन्यैश्च जल-जैर्घोरै र्युक्ता सा मर्म्मभेदिभिः ॥

---

१ (*) अत्र ब्राह्मणान् जापयित्वा (जपित्वा) चेति ग्रन्थान्तर धृतः पाठः ।

२ (†) वैतरणीदानमन्त्रो यथा—
'यमद्वारे महाघोरे तप्ता वैतरणी नदी ।
ताञ्च तर्त्तुं ददाम्येनां कृष्णां वैतरणीञ्च गाम्' ॥
'नदी वैतरणी नाम दुर्गन्धा रुधिरा वहा ।
उष्णतोया महावेगा अस्थिकेश तरङ्गिणी' ॥
इति प्रायश्चित्तविवेके, यमदग्निः ।
कृष्णां वैतरणीं धेनुं यः प्रयच्छेद्धि जायते ।
सर्व्वपाप विनिर्मुक्तः वैतरणीन्तरते सुखी ॥
ब्रह्मपुराणे ।
श्रीमद् रघुनन्दनस्य, (स्वीय) मुद्रितत्वेऽप्यत्र पुनरुक्तमस्ति । कूर्म्मपुराणे द्वादशाध्याये, कालिकापुराणेऽष्टादशाध्याये च तद्वृत्तान्तमुपवर्णितमस्ति । पूर्व्वं सामान्यतः वैतरणी-गवीदान प्रयोगउक्तः । सम्प्रति पुनश्च तद्वक्ष्यन्ते ।

पतन्ति तत्र वै मर्त्याः क्रन्दमानाः सुदारुणाः ।
हा भ्रातः पुत्र तातेति प्रलपन्तो मुहुर्म्मुहुः ॥

चिरमन्तर्निमज्जन्ति ग्लानिं गच्छन्ति देहिनः ।
चतुर्व्विधैः प्राणिगणै र्द्रष्टव्या सा महानदी ॥

तरन्ति तस्या दानेन अन्यथा तु पतन्ति ते ।
धार्म्मिका दानशीलाश्च तां तरन्ति नरोत्तम ! ॥

सानुकुला भवेद्येन नदी वैतरणी नृणाम् ।
तच्छृणुस्व नर व्याघ्र ! कथ्यमानं युधिष्ठिर ! ॥

अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ।
अन्येषु पुण्यकालेषु दीयते दानमादरात् ॥
पाटलामथवा कृष्णां कुर्य्याद् वैतरणीं शुभाम् ।
स्वर्णशृङ्गीं रौप्यखुरां कांस्यपात्र-सुदोहनाम् ॥
कृष्णवस्त्र युगच्छन्नां सप्तधान्य समन्विताम् ।
कार्पास-द्रोणशिखरे आसीनान्ताम्र भाजने ॥
यमं हैमं प्रकुर्य्याद्वै लोहदण्ड-समन्वितम् ।
महामहिषमारूढ़ं शूलपाशाङ्कुरे परे १(*) ॥
इक्षुदण्डमयं वद्ध्वा उडुपं पट्टबन्धनैः ।
उडुपोपरि तां धेनुं सूर्य्यदेहसमुद्भवाम् ।
कृत्वा प्रकाशयेद् विद्वान् च्छत्रोपानहसंयुताम् ।
अत्रोपयोगि-सप्तधान्यानि परिभाषायामुक्तानि ।

उडुपः-प्लवः २(†)। ततो यममुडुपगतां धेनुञ्च वासोगन्धादिभिः सम्पूज्याधिवासयेदित्यर्थः ।

इममुच्चारयेन्मन्त्रं संगृह्योदक मण्डलम् ।
यमद्वारे महाघोरे दृष्ट्वा वैतरणीं नदीम् ॥

---

१ (*) अत्र 'मूढ़ पाशं करे' इति क्वचिदादर्श पुस्तके पाठः ।
२ (†) 'उडुपस्तु भेलयो'रिति धरणिः ।
काष्ठ-वंश-तृणादिनिर्म्मित-नद्यादि तरण साधन द्रव्यस्वरूपः ।

तत्तुं कामो ददाम्येनां कृष्णां वतरणीञ्च गाम् १(*) ।
इत्यधिवासनमन्त्रः ।
अत्रैव, प्रतिग्रहीतुर्विप्रस्य वस्त्रालङ्कारादिभिर्वरणं कार्य्यम् ।

तद्वरण मन्त्रो यथा—

ॐ विष्णुरूप द्विजश्रेष्ठ भूदेव पङ्क्ति पावन ।
सदक्षिणा मया तुभ्यं दत्त्वा वैतरणीत्वियम् ।
धर्म्मराजञ्च विप्रञ्च धेनुं वैतरणीन्तथा ।
सर्व्वं प्रदक्षिणीकृत्य ब्राह्मणाय निवेदयेत् ॥
पुच्छं संगृह्य तद्धेनोरग्रे कृत्वा च ब्राह्मणम् ।
धेनुके त्वं प्रतीक्षस्व यमद्वारे महालये ॥
उत्तितीर्षुरहं देवि ! वैतरण्यै नमोऽस्तु ते ।

ततोऽनुव्रजन मन्त्र :—

अनुव्रजेच्च गच्छन्तं सर्व्वन्तस्य गृहे नयेत् ।
अनुव्रजे 'धेनुके त्व'मिति मन्त्रः पूर्व्वोक्तः ।

301. **उक्तकालेषु दानासम्भवे ; व्यासः—**

आसन्नमृत्युना देया गौः वत्सा च पूर्व्ववत् ।
तदभावे च गौरेका नरकाद्वारणाय वै २(†) ॥
तदा यदि न शक्नोति दातुं वैतरणीञ्च गाम् ।
शक्तोऽन्योऽरुक् तदा दत्त्वा श्रेयोदद्यान्मृतस्य च ३(‡) ॥
तदा मरणात् पूर्व्वकाले, अरुक-रोगरहितः पुत्रादिः ।

**ब्रह्मवैवर्त्ते च—**

एवं कृते महीपालः ! सा सरित् सुखदा भवेत् ।
तरते च त्वया धेन्वा वा सरिज्जल वाहिनी ॥

---

१ (*) 'तां तर्त्तुं गां ददाम्येनां तुभ्यं वैतरणीं महाम्' इति पुस्तकान्तरधृतायुक्तः पाठः । अत्रवाक्य-विरचनमित्थम्—
" अद्येत्यादि सर्व्वपापविनिर्मुक्ति पूर्व्वक यमद्वारावस्थिततप्त-वैतरणीनदी सुखसन्तरणकामो यथोक्तालङ्कृतां गां वैतरणीमिमां रुद्रदैवताकां यथोक्त गोधनार्घं ब्राह्मणायाऽन्ददानि। इति ।

२ (†) 'नरकोत्तारणायवै' इति क्वचिदादर्शे ग्रन्थे पाठः ।

३ (‡) पूर्व्ववदिति—हेमशृङ्गादिना । अत्र मृतस्येति श्रवणादेकादशाहेऽपि वैतरणीदानाचारः इति सूचितव्यं ।

सर्व्वाह्लादानवाप्नोति ये दिव्या ये च मानुषाः १(*)।
रोगीतु रोगनिर्मुक्तः तथैवोपरते स्मृतिः २(†)॥

इतीदमुक्तं तवधर्म्मसूनोः,
पुण्यं मया वैतरणी प्रदानम्।
शृणोति भक्त्या पठतीह सम्यक्;
स याति विष्णोः पदमप्रमेयम्॥

इति वैतरणी धेनुदानम् ३(‡)।

—*—

## (११३) अथ प्रसङ्गाद् वृषभदान मुच्यते ४ (+)।

—*—

302· **भविष्योत्तरे—**

वृषदानफलं दिव्यं शृणुष्व कथयामि ते।
पवित्रं पापनश्चैव सर्व्वं दानोत्तमोत्तमम्॥
दशधेनुसमोऽनड्वान् एकश्चैव धुरन्धरः।
दशधेनु प्रदानाद्धि वृषएको विशिष्यते॥
वृषभश्चापि युष्टाङ्गोह्यरोगः पाण्डुनन्दन!।
युवा शुद्धः सुशीलश्च सर्व्वदोष विवर्ज्जितः ५(०)।
धुरन्धरः स्थापयति ह्येक एव कुलं महत्॥
त्राता भवति संसारा न्नात्र कार्य्या विचारणा।
अलङ्कृत्य वृषं शान्तं पुण्येऽह्नि समुपस्थिते॥

---

१ (*) अत्र 'तरन्ते' इत्यत्र 'तीर्य्यन्ते' इति पाठान्तरमस्ति। दिव्या-अमराः। मानुषाः-मर्त्याः।

२ (†) 'तथैवापदि संस्थितः' इति क्वचिदादर्शे पाठः।

३ (‡) 'नारका जन्तवः प्रेता नदी वैतरणी स्मृता' इति भरतः।

४ (+) 'अव्यङ्गो जीव वत्सायाः पयस्विन्याः सुतोवृषः।
एकवर्णो द्विवर्णो वा यो वा स्यादष्टकासुतः।
यथा दृष्ट तरोः अन्न-समोवानीत एव वा।
समावगात् समपरात् ततत्सटमारयेद्बुधः' इति कात्यायनः।

५ (०) 'मृदु' इत्यत्र 'भद्र' इति हेमाद्रिधृतः पाठः।
चाङ्गुल इत्यत्र—चाङ्गल इति क्वचिद्दृश्य पाठः।

अलङ्कृत्य-स्वर्णशृङ्ग वस्त्रादिना ।
रौप्यमाङ्गुल संयुक्तं ब्राह्मणाय निवेदयेत् ।
मन्त्रेणानेन राजेन्द्र त्वं शृणुष्व वदामि ते ॥

### मन्त्रश्च—

धर्म्मस्त्वं वृषरूपेण जगदानन्द-कारकः ।
अष्ट मूर्त्तेरधिष्ठान मतः पाहि सनातनः ॥
दत्त्वैवं दक्षिणायुक्तं प्रणिपत्य विसर्ज्जयेत् ।
सप्तजन्मकृतं पापं वाङ्मनः-काय-कर्म्मजम् ॥
तत् सर्व्वं विलयं यान्ति गोदान सुकृतेन वै ।
यानं वृषभसंयुक्तं दीप्यमानं सुशोभनम् ॥
आरुह्य कामकं दिव्यं स्वर्लोकमधिरोहति ।
यावन्ति तस्य रोमाणि वृषभस्य महीपते ! ॥
तावद्वर्ष सहस्राणि गवां लोके महीयते ।
गोलोकादवतीर्णस्तु इहलोके द्विजो भवेत् १(*) ।
सत्र याजी महातेजाः सर्व्वब्राह्मण पूजितः ।

### 303. यमः—

दान्तं धुरन्धरं दत्त्वा छत्रोपानह संयुतम् २(†) ।
दशधेनु प्रदानाद्य यत् फलं तत् समश्नुते ॥

### 304. महाभारते—

युवान मिन्द्रियोपेतं शतेन सहयुथपम् ।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्ग-मलङ्कृतम् ॥
वृषभं ये प्रयच्छन्ति श्रोत्रियाय परन्तप !
ऐश्वर्य्यं तेऽभिजायन्ते जायमानान् पुनः पुनः ३(‡) ॥
तत्र शतेन—स्त्री गवीनामिति शेषः ।

इति प्रत्यक्ष वृषभदानम् ॥

—*—

१ (*) 'द्विजायते' इति पाठश्चान्तर भूतः पाठः ।
२ (†) 'दान' मिति क्वचिद ग्रन्थे पाठः ।
३ (‡) 'जायन्ते' इत्यत्र 'जायेत' इति क्वचिदादर्शग्रन्थे पाठः ।

## (११४) अथ हेमरौप्य वृषभदानम् १(*) ।

— * —

305. **वह्नि पुराणे, वशिष्ठः—**

यो नश्वरो हरिद्रो वा करोति विधिना नृपः ।
दानं सर्व्वगुणोपेतं तच्छृणुष्व यथा तथा २(†) ॥

युतं धेन्वाथवा दद्याच्छक्तितो नृपसत्तम !
या मया धेनवः प्रोक्ता वृषास्तावन्त एवहि ॥

हरये ता नियोज्याः स्यु र्हरये च तथा वृषाः ।
सर्व्वभावात्ततो राजन् तिलपात्राणि नित्यशः ॥

सर्व्वपाप विनाशाय दीयते नृप सत्तमः ।
गोमयेन समालिप्ते पट्टवस्त्र समावृते ॥

वृषं हेममयन्तत्र रौप्यं वा रत्नसंयुतम् ।
तस्य नीलमये शृङ्गे मौक्तिके चक्षुषी रदाः ३(‡) ॥

द्वात्रिंशच्छुभवस्त्राणि विद्रुमोऽष्ठौ च नासिका ४(+) ।
मरकतं विनिर्द्दिष्टं कर्णौ वै हरिताश्मके ॥

पद्मरागस्य वै पादाः खुरा रौप्य मया शुभाः ५(०) ।
राजतानि च रोमाणि क्षौमवस्त्रेण कम्बलम् ॥

पादेन पुच्छमुद्दिष्टं सर्व्वेषा-मप्ययं विधिः ।
वृषणौ स्फटिकस्यापि लिङ्गे मणिः प्रकीर्त्तितः ॥

तथा धेनुर्यथाऽनड्वान् सुवर्णस्य तु कारयेत ।
अभीष्ट देवता पूजां कुर्व्वीत तदनन्तरम् ॥

---

१ (*) स्वर्णेण रजतेन निर्म्मितो वृषः रौप्य वृषः । तद्दानं सामान्य वृषदानात् फलाधिक्यम् । 'योवेश्वरो दरिद्रो' इत्यपि पाठान्तर-समस्ति ।

२ (†) 'वदामिते' इति आदर्श पुस्तकान्तर धृतः पाठः ।

३ (‡) 'शुभवस्त्राणि' इत्यत्र शुक्लवस्त्राणि' इति पाठान्तरमस्ति ।

४ (+) 'वस्त्र' इत्यत्र 'तस्येति' पाठान्तरमस्ति ।

५ (×) अत्र विद्रुम-मरकत-पद्मरागादीनां लक्षणं श्रीमद्-भोजराजकृत-युक्तिकल्पतरौ समुपलभ्यते ।—अत्र 'शुभाः' इत्यत्र 'कृताः' इति पाठभेदोऽस्ति ।

मन्त्रेणानेन राजेन्द्र ! तं द्विजाय निवेदयेत् ।
यो वृषो यज्ञदानेऽभूच्छशानीकस्य निष्कलः १(*) ।
जातरूपमयं सोऽयं तारिता मां न संशयः ॥
एतस्य विभवाद्दानं भक्त्या यः प्रतिपादयेत् ।
पृथुले वाऽप्यशक्ते वा तदनन्त-फलं स्मृतम् ॥
निःस्वेवा प्येवमेवंहि कृत्वा दान मतन्त्रितः ।
तत् फलं समवाप्नोति स्वल्पदानान्न संशयः ॥
इति सुवर्णरौप्य-वृषदानम् ।

—*—

## (११५) अथ गुड़ादिधेनुदान विधानम् ।

—*—

अथात्र धेनुशब्द साधारण्यात् 'प्रथमा गुड़धेनुः स्या' दित्यारभ्य 'दशमी स्या स्वरूपतः' इत्यन्तेन वाक्येन स्वरूप गोसहपाठाद् गुड़धेन्वादि प्रदानानि निरूप्यन्ते ।

306. **तदुक्तं मात्स्ये**—

यास्तु पाप विनाशिन्यः पठ्यन्ते दशधेनवः ।
तासां स्वरूपं वक्ष्यामि नामानि च नराधिप ! ।
प्रथमा गुड़धेनुः स्याद् घृत धेनु स्तथा परा ।
तिल धेनुस्तृतीया च चतुर्थी जल संज्ञिता ॥
क्षीरधेनुश्च विख्याता मधु धेनुस्तथा परा ।
सप्तमी शर्करा धेनु र्दधिधेनु स्तथाष्टमी ॥
रसधेनुर्नवमी स्या-द्दशमी स्यात् स्वरूपतः । इति ।
कुम्भा घृतादि धेनूना मितरा सान्तु राशयः ।
वक्ष्यमाणप्रकारेण घृतादि धेनूनान्तथा २(†) ॥
अत्र राशीकरणात्तु राश(स)य इति विवेकः ३(‡) ।

---

१ (*) अत्र 'यो' इत्यत्र-'गो' इति आदर्श पुस्तकान्तरस्थः पाठः ।
,, अत्र दानफलं विहितं निर्धन-सधनयोस्तुल्यमेव ज्ञेयम् ।
२ (†) 'धेनूनां कुम्भाः' इति आदर्श पुस्तकान्तरस्थः पाठः ।
३ (‡) एतस्य विवरणं पश्चात् स्वयमेव वक्ष्यति ।

सुवर्णं धेनुमप्यत्र कचिदिच्छन्ति मानवाः १(*)।
नवनीतेन तैलेन तथान्येपि महर्षयः॥

307. **एतद्विधानमपि तत्रैव, मात्स्ये—**

गुड़धेन्वादि दानस्य यद्रुपमिह यत् फलम् २(†)।
तदिदानीं प्रवक्ष्यामि सर्व्वपाप विनाशनम्॥
कृष्णाजिनं चतुर्हस्तं प्राग्ग्रीवं विन्यसेद् भुवि ३(‡)।
गोमयेनोपलि प्तायां दर्भानास्तीर्य्य सर्व्वतः॥
लघ्वेणकाजिनं तद्वद्वत्सस्य परिकल्पयेत्।
प्राङ्मुखीम्प्रापयेद्धेनु मुदक्पादां सवत्स सकाम्॥
अत्रैणकाजिनं बालकृष्णाजिनम्।
प्राङ्मुखीं-प्राक् शिरसम्॥
सवत्सकां-उत्तरभागस्थित वत्स सहिताम्।
उत्तमा गुड़धेनुः स्यात् स(य) दाभार मनुत्तमम्॥
वत्स भारेण कुर्व्वीत भाराभ्यां मध्यमः स्मृतः।
अर्द्धभारेण वत्सः स्याद्गृह वित्तानुसारतः ४(+)॥
भारः फल सहस्रद्वयमिति परिभाषायामुक्तम्।
चतुर्थांशेन वत्सः स्याद्गृह वित्तानुसारतः॥
धेनुवत्सौ घृतस्यैतौ सित सूक्ष्माम्बरावृतौ।
शुक्ति कर्णाविक्षुपादौ शुचि मुक्ताफलेक्षणौ॥
सित सूत्र शिरा लौ तौ सित कम्बल कम्बली ५(०)॥
अत्र द्वितीय कम्बल शब्दः— गलवाची।
ताम्रगंड़ुकपृष्ठौ तौ सितचामर रोमकौ॥

---

१ (*) अत्र 'क्वचित्' इत्यत्र केचिदिति पुस्तकान्तरधृतः पाठः।

२ (†) 'गुड़धेनु विधानस्य'ेति हेमाद्रीयः पाठः।

३ (‡) अत्र 'प्राग्ग्रीव'मित्यत्र सुग्रीवमिति क्वचित् पाठान्तरं विद्यते।

,, हस्ति-व्याघ्र-मृगाजिनेषु कृष्णमृगाजिनं पूतं विहितम्।

४ (+) 'कनिष्ठा भारकेन तु' इति-पादर्शान्तर धृतः पाठः।

५ (×) 'सित कम्बल लम्बिनी' इत्यं पाठभेदोऽस्ति। तेन गलकम्बल वाचकत्वं तस्य प्रतीयते।—
'कम्बलो नागराजे स्यात् सास्ना प्रावारयोरपि।
कृमावप्युत्तरासङ्गे सलिले न नपुंसकम्' इति मेदिनी।१।
'कम्बलः— कृमिसास्नयोः। नागप्रभेदे प्रावारे वैकल्ये कम्बलं जले' इति हैमः।

अत्र गड्डुकं—ककुत्स्थानम् १(*) ।

पृष्ठं—स्पष्टार्थम् ॥

एतौ द्वौ ताम्रमयौ कार्य्यौ । एव मन्यत्रापि विज्ञेयम् ।

विद्रुमभ्रु गुगोपेतौ नवनीत स्तनान्वितौ ॥

क्षौमपुच्छौ कांस्यदोहा विन्द्रनीलक-तारकौ ।

अत्र 'तारकाक्षणः कणीनिकाः' २(†) ॥

सुवर्ण शृङ्गाभरणौ राजतक्षुरसंयुतौ ।

अत्र क्षुर शब्दः—खुर पर्य्यायः छेदनसाम्यात् ३(‡) ॥

नानाफल मयैर्दन्तै र्घ्राणगन्धकरण्डकौ ।

(स) गन्धकरण्डः-कर्पूरादि परिमित पात्रविशेषः ४(§) ॥

तत्रानुक्त परिमाणानां सुवर्णादीनां सारतः परिमाणतश्च फल विशेष-

इति न्यायाद् यथाशक्ति ग्रहणम् ।

इत्येवं रचयित्वातु धूपदीपैरथार्च्चयेत् ॥

अत्र धूपदीपग्रहणं—पूजा साधारणीय लक्षणम्, तेन पूजा पूर्णा स्यात ।

दद्याद् गुड़मयीं धेनुं मन्त्रानेतानुदीरयेत ॥

मन्त्रांश्चानु मन्त्रणेन ते स्युः ।

'एवमामन्त्रये दित्यग्रे वक्ष्यमाणत्वात् ॥

तद् यथा—

ॐ या लक्ष्मीः सर्व्वभूतानां या च देवेष्ववस्थिता ।

धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु ५(०) ॥१॥

---

१ (*) 'ककुदत् ककुदं श्रेष्ठे वृषाङ्के राजलक्ष्मणि' इति विश्वः ।

अत्र—गड्डुकं-तत्तु घाटामस्तकयोर्मध्ये मांसवृद्धिः ।

गडुस्तु-विषम ग्रन्थि—यथा-किमन्तर्गडु नाकालेनेति' तत्त्वकौमुदी ।

काव्य प्रकाशे च—तदेत् काव्यान्तर्गडुभूतमिति । नास्यभेद लक्षणं कृतम् इति । गड्डः

हृष्टगुड़ कुले' इति विश्वः ।

२ (†) 'कणीनिका तारकेऽक्ष्णः स्यात् कनिष्ठाङ्गुलावपि' इति मेदिनी ।

३ (‡) 'क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे' इति विश्वः ।

'खुरः शफे कोकदले' इति हेमः ।

४ (§) 'करण्डो मधुकोषासिकारण्डव दलाढ्के' इति मेदिनी ।

करण्डो 'हि ताम्बुलाधारः । यथा ताम्बुल-करण्ड वाहिनी"ति कश्चित् ।

५ (०) पूर्व्वं तिलघृतादि धेनुदानप्रसङ्गे एते मन्त्रा उक्ता अपि-पुनः कार्य्यगौरवाय विशेषतो

हि उच्यन्ते । अत्र-'ममपापं व्यपोहतु' इति हेमाद्रीयः पाठः।

देहस्था या च रुद्राणी शङ्करस्य सदा प्रिया ।
धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥२॥
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः ।
चन्द्रार्क शक्रलक्ष्मी र्या धेनुरूपास्तु सा श्रिये ॥३॥
चतुर्म्मुखस्य या लक्ष्मीर्यालक्ष्मी-र्धनदस्य च ।
लक्ष्मीर्या लोकपालानां सा धेनुर्वरदाऽस्तु मे ॥४॥
स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभूजान्तथा ।
सर्व्व पापहरा धेनुः तस्माच्छान्ति प्रयच्छ मे ॥५॥
एव मामन्त्र्य तां धेनुं ब्राह्मणाय निवेदयेत् ।
विधान मेतद्धेनूनां सर्व्वासामिह पठ्यते १(*) ॥
सर्व्वासां—पूर्व्वोक्त तिल-घृतादि धेनूनाम् ।
स्वरूप धेनोस्तु पूर्व्वोक्त शृङ्गादि कल्पनमेव ।
एतदेव विधानं स्यात्तएवोपस्कराः स्मृताः ।
मन्त्रावाहन संयुक्ताः सदा पर्व्वणि पर्व्वणि ॥
यथाश्रद्धं प्रदातव्या भुक्ति मुक्ति फल प्रदाः ।
अशेष यज्ञफलदाः सर्व्वपापहराः शुभाः ॥
अयने विषुवे पुण्ये व्यतीपातेऽथवा पुनः ।
गुड़धेन्वादयो देया उपरागादि पर्व्वसु २(†) ॥
अत्र घृतादि-धेनुषु द्रव्यपरिमाणमपि गुड़धेनूक्तमेव स्यात् ।
'विधानमेतद्धेनूना' मित्युक्तत्वात्, विधानमिति कर्त्तव्यम् ।
उपस्कराः—घृतवस्त्र शुक्तीक्षु क्षौमवासः प्रभृतयः । विशेषस्तत्र वक्ष्यते ।
इति गुड़धेन्वादि सामान्य विधानम् ॥

—*—

---

१ (*) अत्र 'पठ्यते' इत्यत्र 'आयते' इति पाठान्तर धृतः पाठः ।
२ (†) उपरागः—सूर्याचन्द्रमसोराहुणा ग्रहणम् ।
'उपरागस्तु पुंसि' स्यात् राहुग्रस्तेऽर्कचन्द्रयोः ।
,, दुर्नये व्यसनादौ च व्यसनेऽपि निगद्यते । इति रभसः ।
पर्वादि पदेन—मन्वन्तर-संक्रान्ति प्रभृति पुण्यकाल-संचयः ।

## (११६) अथ गुड़धेन्वादि दशक-प्रयोगः १(*)।

—*—

कर्त्ता विषुवादि-पूर्व्वोक्तकाले पुण्यदेशे वर्त्तमानो देशकालादि संकीर्त्त्य मम सकल दुरितक्षयपूर्व्वकाशेष यज्ञ जन्यफल समफल-प्राप्त्युत्तर मुक्तिप्राप्ति कामोऽमुक-धेनुदानमहं करिष्ये इति सङ्कल्प्य, गणेशपूजन पुण्याहवाचने कृत्वा, यथोक्त-लक्षणमाचार्य्यं यथाशक्ति वस्त्र-मुद्रिका कुण्डलादि भूषितं कृत्वा वृणुयात् ।

ततो गोमयोपलिप्तायां कुशास्तृतायां भुवि चतुर्हस्तं प्राग्ग्रीवमुपरि लोमकं-कृष्णाजिनं प्रसार्य्य, तत्र भारचतुष्टय २(†) परिमितेन गुड़ादिनोत्तमम् ।

भारद्वय परिमितेन मध्यमम् । एकभार परिमितेनाधममिति शक्त्यनुसारेण सम्पादित गुड़ादिना प्राक्शिरसमुदक् पादां धेनुं कल्पयित्वा ३(‡) वक्ष्यमाणद्रव्यै-रङ्गाणि परिकल्पयेत् । तद् यथा—

मुखं घृतपूर्णपात्रेण, शुक्तिभ्यां कर्णौ ४(०), इक्षुदण्डैः पादान्, मुक्ताफलाभ्यामीक्षणे, इन्द्रनीलाभ्यान्तारके, ५(ऽ) सितसूत्रैः शिराः, सितकम्बलैः गलकम्बलम्, ताम्रेण ककुत्पृष्ठञ्च, सितचामरैरोमाणि, विद्रुमैर्भ्रूयुगम्, नवनीतेन स्तनान्, क्षौमेन पुच्छम्, सुवर्णेन शृङ्गे, रौप्येण खुरान्, नानाफलैर्दन्तान्, गन्धकरण्डिकेन घ्राणम्,— कल्पयित्वा, कांस्यदोहन पात्रवतीं सितसूक्ष्मवस्त्रावृताञ्च धेनोरुत्तरे देशे लघुकृष्णाजिने धेन्वर्थोपकल्पित गुड़ादिद्रव्यचतुर्थांशेन वत्सं कृत्वा, मुखादिस्थित घृतादिद्रव्यैः सहितं कुर्य्यात् । मुक्तादीनां चतुर्थांशत्वान्मूल्यतो ज्ञेयम् ।

ततो धेनुं सवत्सामावाहनाद्युपचारैः प्रतिष्ठापूर्व्वकं 'गुड़धेन्वै सवत्सायै नमः' इत्यादि मन्त्रैः यथाविधि अभ्यर्च्य गृहीत कुसुमाञ्जलिः ६(ऽऽ) सवत्सां धेनुं प्रदक्षिणी-कृत्य, 'या लक्ष्मीः सर्व्वभूताना'मित्यादि—तस्माच्छान्ति प्रयच्छमे' इत्यन्तेन ७(००)

---

१ (*) प्रागगुड़धेन्वादीनां विधानमुक्तं सम्प्रति तेषां प्रयोगपद्धतिरुच्यते ।

२ (†) अत्र 'भारचतुष्टय' मित्य साधुः पाठः क्वचिदस्ति।

३ (‡) अत्र धेनुकल्पनं गुड़ादि धेनूनां तत्तद्द्रव्यैः उक्त प्रणाल्या विरचनमिति ज्ञेयम् ।

४ (०) अत्र 'कर्णौ' मित्यत्र 'कर्णे' इति पाठ—भेदोऽस्ति ।

५ (ऽ) अत्रेन्द्र नीलयोर्न्न युक्तिकल्पतरावनुसन्धेयम् ।

६ (ऽऽ) अत्र गृहीत पुष्पाञ्जलिर्यजमान इत्यर्थः ।

७ (००) 'या लक्ष्मी' रित्यादि पञ्चमन्त्राः प्रागुक्ताः ।

—अत्र धेनोः परिकल्पन सामग्री घृतादि द्रव्यसुक्तम् ।

तच्छ्लोक पञ्चकेनानुमन्त्र्य, पुष्पाञ्जलिं धेनोरुपरि विकीर्य्य नमस्कृत्य धेनोः पश्चाद्भागे प्राङ्मुख उपविश्य, कुश-यव-तिलानादाय ॐ अद्येत्यादि सम्यगुक्त्वा अमुक-गोत्रायामुक शर्म्मणेऽमुक वेदान्तर्गतामुक शाखाध्यायिने ब्राह्मणाय, सकल पापक्षय-पूर्व्वकाशेष यज्ञजन्यफल समफल-प्राप्ति सहित मुक्तिपूर्व्वक(परममुक्ति) काम इमामेतावत्-परिमित गुड़ादिद्रव्यकल्पितताममुकधेनुं घृतास्यां शुक्तिकर्णां इक्षुपादां (शुक्ति) मुक्ताफलेक्षणामिन्द्रनीलतारकां सितसूत्रशिरां सितकम्बल-गलकम्बलाम्, ताम्र मय-ककुत् पृष्ठां सित चामर रोमिकां विद्रुम भ्रूयुगाम्, नवनीतस्तनीम्, क्षौमपुच्छां कांस्यदोहाम्, सुवर्ण शृङ्गीं, रौप्य क्षुराम्, नानाफलमयदन्तां गन्धकरण्डकघ्राणां, सित-सूक्ष्माम्बरावृतामेतद्धेन्वर्थे तत्तद्द्रव्यचतुर्थां शोपकल्पितवत्सां तुभ्यमहं सम्प्रददे नममेति स्वगोत्रोच्चारण पूर्व्वकं पुच्छदेशे दद्यात्। अथ प्रतिग्रहीता सावित्रेण यजुषा प्रतिगृह्य ॐ स्वस्तीत्युक्त्वा कामस्तुतिं पठेत् १(†)।

ततोदाता, अद्येत्यादि कृतैतद्गुड़धेनुदान कर्म प्रतिष्ठार्थमिदं सुवर्णमग्निदैवतं दक्षिणान्तुभ्यमहं सम्प्रददे इति दक्षिणान्दत्त्वा, दीनानाथपङ्गन्धादीन् यथाशक्ति तोषयित्वा आचार्य्यं क्षमाप्य यथाशक्ति ब्राह्मणान् भोजयित्वा परमेश्वराय सर्व्वं समर्पयेत २(‡)।

इति गुड़धेन्वादि दशक प्रयोगः ३(+)॥

—*—

यत्तु वह्नि पुराणादावितोऽपि न्यूनपरिमाण द्रव्येण घृतादि धेनु कथनं तदेतद्धेन्व-पेक्षया प्रकारान्तरम्। मत्स्यपुराणे त्वेकादशधेन्वामेव मन्त्रान्तरमुक्तम्।

---

१ (†) कोऽदात् कस्मा अदात् कामोऽदात् कामायादात्।
कामोदाता कामः प्रतिग्रहीता कामैतत्ते ॥ प्रागपि एष मन्त्रः प्रोक्तः शुक्ल, यजुः ।८.४८।

२ (‡) यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥ इति परमेशार्पणं प्रोक्तं भगवद्गीतायाम्।

३ (+) मातृकापुस्तकद्वये 'गुड़धेन्वादि दश प्रयोगः'—इत्य' पाठोऽस्ति, परन्तु गुड़धेन्वादि दश
धेनुदान प्रयोग इति पाठः समीचीनः स्यात्।

## (११७) अथ तिल धेनु प्रकरणम्।

—*—

308. **विष्णु धर्म्मोत्तरे—**

तिलाश्च पितृदैवत्या निर्म्मिता श्चेह गोसवे १(*)।
ब्रह्मणा तन्मयीं धेनुन्दत्वा प्रीणातु केशवमिति ॥
ततः प्रदक्षिणं कृत्वा पूजयित्वा प्रणम्य च।
सदक्षिणा मया तुभ्यं दत्येत्युक्त्वा विसर्ज्जयेत् ॥
अनेन विधिना दत्त्वा तिलधेनुं नराधिप!।
सर्व्वपाप-विनिर्म्मुक्तः परं ब्रह्माधिगच्छति ॥
यश्च गृह्णाति विधिवद्दीयमानां प्रमोदयेत्।
दीयमानां प्रपश्यन्ति ये च संहृष्टमानसाः ॥
तेऽप्येषाघविनिर्म्मुक्ताः प्रयान्ति परमां गतिम्।
प्रशान्ताय सुशीलाय देव-व्रतधराय च ॥
धेनुन्तिल मयीन्दत्त्वा नशोचति कृताकृते।
त्रिरात्रं यस्ति लाहार स्तिलधेनुप्रदो भवेत् ॥
एकाह मथ तानत्ति तद्व्रतेनान्तरात्मना।
दानाद्विशुद्ध पापस्य तस्य पुण्य कृतो नृप ॥
चान्द्रायणादप्यधिकं कथितं तिलभक्षणम्।
इति विष्णु धर्म्मोतरोक्ततिल धेनुदानम् ॥

—*—

309. **अथ तत्र वराह पूराणे—**

तिलधेनुं रसधेनुं जलधेनुश्च पार्थिव।
देहि शीघ्रं येन भवान् क्षुत्तृषावर्ज्जितोदिवि ॥

---

१ (*) वह्निपुराणेऽप्ययं मन्त्रोऽस्ति।
" तत्रैव वाराहे च—
तिलधेनुं जलधेनुं रसधेनुश्च पार्थिव ।।
देहि शीघ्रं येन भवान् क्षुत्तृषावर्ज्जितोदिवि ॥
इत्यादि पचाद वक्ष्यति।

रमते यावदादित्यः तृप्यते दिवि चन्द्रमाः।
एवमुक्त स्ततोराजा विधानं पृष्टवा निदम्॥
यथाभवेत्तिल धेनोस्तच्छृणुष्व नराधिप!।
चतुर्भिःसेतिकाभिस्तु पश्य एकः प्रकीर्त्तितः १(*)॥
तैः षोड़शैर्भवेद्धेनु श्चतुभिर्वत्सको भवेत्।
इक्षु-दण्डमयाः पादा दन्ताः पुष्पमयाः शुभाः॥
नासा गन्धमयी तस्या जिह्वा गुड़मयी तथा।
पुच्छे स्त्रक्कल्पनीया स्याद् घण्टा भरण भूषिता॥
ईदृशीं कल्पयित्वातु स्वर्णशृङ्गीं प्रकल्पयेत्।
कांस्यदोहां रौप्यखुरां पूर्व्वधेनुविधानतः॥
तिल धेनुन्ततोदत्वा द्वादश्यां नियतः शुचिः।
आत्मानन्तारयेदुर्गा न्नरकान्नात्रसंशयः २(†)॥

अत्र सेतिकाः—कुड़वः। मेथिकेति-कचित्पाठः।
कुड़वश्च—द्वादश प्रसृति परिमितः ३(‡) तेषामुशतेः षोड़षभिरित्यर्थः।

## 310. महाभारते च—

सुदक्षिणां काञ्चन चारुशृङ्गीम्,
कांस्योपदोहां द्रविणोत्तरीयाम्।
धेनुन्तिलानान्ददतो द्विजाय,
लोका वसूनां सुलभा भवन्ति॥

---

१ (*) चच पञ्च प्रस्थ रिति रिति क्वचित् चादर्श पाठः।
२ (†) 'नरकात् कामभागभवेदिति' ईत्यादीव: पाठः।
३ (‡) कुडव-मानं परिभाषायामुक्तम्। तेषां प्रसृतैः षोड़षभि रिविधा चादर्शान्तरस्थः पाठः। चन्यत् परिभाषाप्रकरणे प्रागुक्तम्।' तत्र चतुर्थस्तबकारम्भे।
" पलं प्रकुचकं मुष्टिः कुड़वस्तचतुष्टयम्।
चत्वारः कुड़वा प्रस्थः चतुः प्रस्थमथाढ़कम्॥
चष्टाढ़कोभवेद्द्रोणोद्विद्रोणः शूर्पं उच्यते।
सार्द्धसूर्पोभवेत्खारी द्वि द्रोणो गोण्युदाहृता।
ता मेव भारं जानीयाद्‌ वाहो भारचतुष्टयम्॥
'भारःस्याद्‌ विंशते विंशो पलानां विंशतावते'।

**तथा—**

धेन्वाः प्रमाणेन सम-प्रमाणम्,
धेनुन्तिलानामपि सम्प्रदाय ।
पानीय वापीश्च यमस्य-लोके,
न यातनां कांचिदुपैति मर्त्यः ॥

**तत्रैव—**

गोमत्या विद्यया धेनुं तिलानामभि मन्त्र्य यः ।
रस-रत्नमयीन्दद्याद् नापि शोचेत् कृताकृते ॥

**गोमती विद्यातु —**

गोमतींकीर्त्तयिष्यामि··· इत्यादि 'गावो मा' मित्यन्ता प्रागुक्ता १(*) ।

गावो मामनुतिष्ठन्तु हेमश्रृङ्गयः पयोमुचः ।
सुर-भ्यः-सौरमेयश्च सरितः सागरास्तथा ॥
गावश्च पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा ।
गावोऽस्माकं वयन्तासां यतोगाव स्त तो वयम् ॥
एवं रात्रौ दिवा वापि समेषु विषमेषु च ।
महाभयेषुच नरः कीर्त्तयन्मुच्यते भयादिति ॥
इति लिङ्गपुराणोक्त तिलधेनुदानम् ॥

—*—

## (११८) अथ विश्वामित्रोक्त-सप्तव्रीहि धेनुदानम् २(†) ।

—*—

सप्तव्रीहि मयाः सप्त धेनवः परिकीर्त्तिताः ।
यथा तिलमयी धेनुर्गोधूमा स तिला यवा ॥
माससुद्गमयीचैव सप्रियङ्गुश्च सप्तमी ।
इत्युक्ते यवादि प्रत्येकं प्रकृतिः ॥

---

१ (*) गोमती विद्यातु प्रागुक्तगवयसूक्ता गोदानप्रसङ्गे ।

२ (†) एतासां धेनूनां दानप्रकारभेदस्तु विभिन्नफलदत्वेन ज्ञेयः । फलबाहुल्यं तत्तारतम्य० धेनुदानप्रकारभेदे हेतुः ।

उपस्करन्तु सर्व्वासु तिलधेनुवदीरितम्।
एतासामेव धेनूना मङ्गानि तिलधेनुवत्॥
सप्तव्रीहि मयाः सप्त योददातीह मानवः।
स याति परमं स्थानं वायुभूतः स मूर्त्तिमान्॥
ब्रह्महाच सुरापश्च तस्करो गुरुतल्पगः।
धेनुदानेन पूतोऽसौ याति विष्णोः परं पदम्॥

अत्र 'सप्तव्रीहिमयाः' इति पदे व्रीहिब्दादूयवादि शब्दो ऽध्याहार्य्यः १(*)॥

इति विश्वामित्रोक्त व्रीह्यादि सप्तधेनुदानम्॥

—*—

## (११६) अथ घृतधेनु दानम्।

—*—

### 311. तदाह महर्षि वशिष्ठः—

तिलाभावे तथा दद्याद् घृत धेनुं दृढ़व्रतः।
येन भूप विधानेन तदिहैक मनाः शृणु॥
वासुदेवं जगन्नाथं घृतक्षीराभिषेचनात्।
सम्पूज्य पूर्व्ववत् पुष्पै र्गन्ध धूपादिभिर्नरः॥
अहोरात्रोषितो नाम्ना अभिष्टुय घृतार्च्चिषम् २(†)।
'घृतार्च्चिषे जगन्नाथाय देवाय नमः' इति नाम्ना स्त्युत्वेत्यर्थः॥
गव्यस्य सर्पिषः कुम्भः पुष्पमालादि भूषितम् ३(‡)।
कांस्य-पिधानसंयुक्तं सित वस्त्रयुगेन च॥

---

१ (*) दक्षिणाचार्य्य-ऋत्विगादेः। एतदुक्तं कालिके—
पूर्व्ववन्मण्डपं कृत्वा कुर्य्याद्वै मण्डलान्वितम्।
तत्तत्पूजाञ्च होमञ्च स्नपनाद्यन्तथैव च॥
पश्चात्सुवर्णं पञ्च निष्कं यावत् प्रकल्पयेत्।
दक्षिणां पूर्व्ववद् दद्या दद्युक्तां पूर्व्ववन्नवेदिति॥

२ (†) श्रीभगवद्वासुदेवनाम्ना-नामोच्चारणपूर्व्वकं सम्पूज्य स्तवं कृत्वा पश्चाद्दानम्। नाम्ना इत्यत्रकापि ग्रन्थे 'साम्ना' इति पाठः।

३ (‡) 'गव्यस्य सर्पिषः' इत्यनेन माहिष्यादि सर्पिर्निषिद्धम्। यथाहि-गव्यघृतं घृत श्रेष्ठम् इति।

हिरण्य गर्भसहितं मणिविद्रुम-मौक्तिकैः ।

अत्र पलसहस्रपरिमाणः कुम्भः १(*) ।

द्वादशपलाधिक पञ्चपल-शतपरिमाण इति केचित् ।

हिरण्य गर्भेति-मध्यवर्त्तिहिरण्य सहितं ब्रह्ममूर्त्तिसहितं वा, मणिविद्रुममौक्तिकैरिति सहार्थे तृतीया ।

इक्षु यष्टि मयान् पादान् खुरान् रौप्यमयांस्तथा ।
सौवर्णे चाक्षिणी कुर्य्याच्छृङ्गे चागरुकाष्ठजे ॥

अत्र सुवर्णादि-यथाशक्ति परिमाणाज्ज्ञेयम् ।

सप्तधान्य मये पार्श्वे पादोर्णेन च कम्बलम् २(†) ।
कुर्य्यात्तुरस्क कर्पूरैर्घ्राणं फलमयां स्तु तान् ॥
तद्वच्छर्करया जिह्वां गुड़क्षीरमयं मुखम् ।

तुरस्कः-सिह्लकः सुगन्धिद्रव्य मित्यर्थः ३(‡) ।

क्षौम सूत्रेण लाङ्गुलं रौमाणि सितसर्षपैः ।
ताम्रपात्रमयं पृष्ठं कुर्य्याच्छ्रद्धा-समन्वितः ॥
ईदृक्स्वरूपां सङ्कल्प्य घृत धेनुं नराधिप ! ।
तद्वत् कल्पनया विद्वान् घृतवत्सं प्रकल्पयेत् ॥

तद्वद्—घृतधेनुवत् । कल्पनया—चतुर्थांशेन ।

तञ्च विप्रं महाभागं मनसैव घृतार्च्चिषम् ॥
एतां ममोपकाराय गृहीष्व त्वं द्विजोत्तम ! ।
प्रीयतां मम देवेशः घृतार्च्चिः पुरुषोत्तमः ॥
इत्युदाहृत्य विप्राय दद्याद्धेनुं नराधिप ! ।

**तत्रायं मन्त्रः—**

312. **स्कान्दे—**

घृतं गावः प्रसूयन्ते घृतं भूम्यां प्रतिष्ठितम् ।
घृतमग्निश्च देवाय घृतं मे सम्प्रदीयताम् ४(+) ।

---

१ (*) एवमेव हेमाद्रौ पलसहस्र परिमाणः कुम्भ उक्त । प्राग् उपवर्णितं परिभाषा प्रकरणे ।

२ (†) पद्मोर्णेनच कम्बल मिति हेमाद्रौ पाठः । पद्मोर्णं धौतकौषेयम् ।

३ (‡) "तुरस्कः सिह्लके म्लेच्छ जातौ देशान्तरेऽपिच" इति विश्वः ।—तुरस्कदेशजात-सिह्लकः गन्धद्रव्यविशेषः ।

४ (+) विष्णुमित्रः—घृत मग्निश्च मं सोमः तन्मयाः सर्व्वदेवताः ।
घृतधेनु प्रदानेन सर्व्वास्तुष्यन्ति देवताः ॥ इति

" 'घृतं मेऽस्त्वपि गच्छतां' इति पुस्तकान्तर-घृतः पाठः ।

दक्षिणाचात्र सौवर्णी, साचैक सुवर्णादिः यथा शक्ति वा। देवी पुराणेऽप्येवंविध-घृतधेनुमुक्त्वा, देवताविशेष उक्तः।

313. **यथा—**

स्नापयित्वा भवानीञ्च घृतक्षीरैर्यथाविधि।
पूजयेत् पुष्पमालाभिर्नैवेद्यैः सुमनोहरैः॥
तद्भक्ताय प्रदातव्या मङ्गल्या शास्त्रपारगे।
इमां ममोपकाराय गृह्णीष्व च द्विजोत्तम!॥

314. **स्कान्दे—**

प्रीयतां नन्दिनी देवी मङ्गला चर्च्चिका उमा।
इत्युक्त्वा चार्च्चयेद्धेनुं कृत्वानन्दां मनोऽनुगाम्॥
अनेन विधिना देया सर्पिषो धेनुरुत्तमा।
हिरण्यरत्नधेनुश्च प्रदेया विधिनाऽमुना॥
मुच्यते सर्व्वपापेभ्यः सर्व्वान् कामानवापुयात्।
यत्र क्षीरवहा नद्यो यत्र सपिर्वहा ह्रदाः॥
पायसाःकर्द्दमा यत्र तस्मिन् लोके महीयते।
तेषां स्वामित्वमाप्नोति मुदाऽ भ्रमयोयतः॥
दश पूर्व्वापरां स्तार्य्यं आत्मानं त्वेकविंशकम्।
भूयः पृथ्वीशतं याति इहलोके स मानवः॥
सकामानामियं व्युष्टि र्धेनोस्तावदुदाहृता।
देव्यालोकमवाप्नोति निष्कामो घृत धेनुदः॥ इति
देवी पुराणे वासिष्ठोक्त घृतधेनु दानम्॥

—*—

## (१२०) आदित्य पुराणे त्वेवमेवघृत धेनुरुक्ता।

—*—

**यथाह—**

आदित्यन्तु जगन्नाथं घृतक्षीराभिषेचनैः।
सम्पूज्य पूर्व्ववत् पुष्पै र्गन्धधूपादिभि र्नरः॥

अहोरात्रोषितोभूत्वा अभिप्लुत्य घृतार्चिषा ।
गव्यस्य सर्पिषः कुम्भं पुष्पमाला विभूषितम् ॥

इमां ममोपकाराय गृहीष्व त्वं द्विजोत्तम ! ।
प्रीयतां मम देवेशो घृतार्चिभिरिहोत्तमः १(*) ॥

इत्युदाहृत्य विप्राय दद्याद्धेनुं नरोत्तम ! ।
दत्त्वैकरात्रं स्थित्वाच घृताहारो नराधिप ! ॥
मुच्यते सर्व्वपापेभ्यः तस्य दानफलं शृणु २(†) ।
घृत क्षीरवहानद्यो यत्र पायसकर्दमाः ॥
तेषु लोकेषु नित्यं सः सुपुण्येषु प्रमोदते ।
पितुरूदूर्ध्वं नयेत् सप्त पुरुषान् तस्य येऽप्यधः ॥

इति आदित्य पुराणोक्त-घृतधेनु दानम् ॥

—*—

## (१२१) अथ नवनीत धेनु दानम् ३(‡) ।

—*—

### 315. भविष्ये—

घृतधेनु विधानेन नवनीत मयी शुभा ।
दातव्या नृपते ! धेनुर्न्यूनाधिक्य विवर्जिता ॥

मन्त्रः स एव निर्दिष्टः घृतधेनौ च यः स्मृतः ।
शृणु पार्थ महावाहो ! प्रदान-फलमुत्तमम् ४(+) ॥

---

१ (*) 'रविः तिमिरनाशनः' इति चादर्श ग्रन्थान्तर धृतः पाठः ।

२ (†) पितॄन् ब्रह्मपुरं नयेत्' इति पुस्तकान्तर धृतः पाठः ।

" अत्र "कांस्योपधान संयुक्तं सितवस्त्रयुगेन च—इत्यारभ्य कल्पयित्वा ततश्चैनं प्रयतः प्रतिपादयेत्" इत्यन्ता धेनुदानोपकरणसूचकाः समन्त्रोक्ताः हेमाद्रौ विद्यन्ते ।

३ (‡) अत्र प्रागुक्त घृतधेनुविधान वन्नवनीतधेनुदानविधानं ज्ञेयम् ।

" हेमाद्रौ तु कात्यायनोक्तं अपरं घृतधेनुदान विधानमस्ति ।

४ (+) 'पार्थम्' इति क्वचित् पुस्तक धृतः पाठः ।

घृत क्षीर वहा नद्यो यत्र पायस कर्द्दमाः ।
घृतधेनु प्रदोयाति यत्र कामैः प्रपूजितः १(*) ॥
पितुरूर्द्ध्वं नयेत् सप्त पुरुषां स्तस्य येऽप्यधः ।
तान् श्रेष्ठेष्विह लोकेषु स नयत्यस्त कल्मषान् ॥
सकामा ना मियं व्युष्टिः कथिता नृपसत्तमः ? ।
निष्कल्मषं पदं यान्ति निष्कामा स्तत् प्रदायकाः २(†) ॥

इति नवनीत धेनुदानम् ॥

—*—

## (१२२) अथ जल धेनुदान प्रकारः ।

—*—

316. **विष्णुधर्म्मोत्तरे—**

**तथाच—**

जलधेनुं प्रवक्ष्यामि प्रीतये दत्तया यया ।
देवदेवो हृषीकेशः सर्व्वगः सर्व्वभावनः ३(‡) ॥
जलकुम्भं नरव्याघ्र ! सुवर्ण रजतान्वितम् ।
रत्नगर्भं विशेषैस्तु ग्राम्यैर्धान्यैः समन्वितम् ।
सितवस्त्र युगच्छन्नं दूर्व्वापल्लव शोभितम् ॥
कुष्ठ-मांसी-मुरोशीर-बालकामलकैर्युतम् ।
प्रियङ्गु पत्र सहितं सितवस्त्रोपवीतिनम् ।

---

१ (*) 'प्रपूरितः' आदर्शवन्यान्तरधृतः पाठः ।
२ (†) 'प्रदायिनः' इति क्वचित् ग्रन्थधृतः पाठः ।
३ (‡) 'सर्व्वग' इति आदर्श पुस्तकान्तर धृतः पाठः ।
" कात्यायनः प्राह—गवामलाभे यथा विधि घृत धेनुन्दद्यात् ।
घृतालाभे तिलधेनुं दद्यात् ।
तिलालाभेतु जलधेनुः प्रदेया ।
घृतधेनुं नरोदद्यात्तिल धेनुं यथाक्रमम् ।
जलधेनुं तथा चैव [illegible] दिवः ॥ इत्यादि ।

सच्छत्रं स उपानत्कं दर्भ विष्टर संस्थितम् ।
चतुर्भिः सम्वृतं भूप ! तिलपात्रैश्चतुर्द्दिशम् ।
स्थापितं दधिपात्रेण घृत क्षौद्र वता मुखे ॥
उपोषितः समभ्यर्च्यथ वासुदेवं जलेश्वरम् ।
पुष्पधूपोपहारैश्च यथा विभवमादृतः ॥
सङ्कल्प्य जलधेनुञ्च कुम्भन्तमभि पूज्य च ।
पूजयेद्वत्सकन्तद्वत् कुम्भं जलमयं बुधः ॥
एवं सम्पूज्य गोविन्दं जलधेनुं सवत्सकाम् ।
सित वस्त्र धरः शान्तो वीतरागो विमत्सरः ॥
दद्याद्विप्राय राजेन्द्र ! प्रीत्यर्थं जलशायिनः ।
जलशायि-जगद्योनिः प्रीयतां मम केशवः ॥
इति चोच्चार्य्य भूनाथ ! विप्राय प्रतिपाद्यताम् ।
अपक्वाशिना स्थेय महोरात्रमतः परम् ॥
अनेन विधिना दत्त्वा जल धेनुं नराधिप ! ।
सर्व्वान् कामानवाप्नोति ये दिव्या ये च मानुषाः ॥
शरीरारोग्य मावाधा-प्रशमः सार्व्वकालिकः ।
नृणां भवति दत्तायां जलधेन्वां नसंशयः ॥ इति ।

## अत्र जलकुम्भे यथा शक्ति परिमाणम् ।

कुम्भोऽत्र कलशो नतुपरिमाण विशेष इति दानविवेकोक्तेः १(+) ।
'सुवर्णरजतान्वितत्वञ्च—सुवर्णरजतजशृङ्गाकृतिः ।
रजतं खुराकृतिश्च । तिलपात्राणि ताम्रमयानि ।
दधिपात्रं कांस्यमयम् । धान्यानि पार्श्वद्वये ।
कुष्ठादीनि घ्राणदेशे । प्रियङ्गुपत्रं श्रवणे ॥

यज्ञोपवीतं शिरसि । वत्स श्चतुर्थांशेन । दक्षिणाच सुवर्णमारभ्य यथाशक्ति । एतद्धेनुचतुष्टयम्, यदविरोधात्तत् सामान्या दितरेषु तथात्वमिति न्यायेन ज्ञेयम् । आदित्य पुराणेतु जलधेनुदानमनेनैव समानार्थम् ।

## विशेषस्तु—

ततः सम्पूज्य चादित्यं जलधेनुं सवत्सकाम् ।
दद्याद्विप्राय देवाग्रे प्रीत्यर्थं मिहिरस्य च ॥

---

१ (+) परिमाण सूचक कुम्भस्तु, चत परिभाषाप्रकरणे ईशाद्री चोक्तः ।

आदित्यः स जगद्योनिः प्रीयतां मिहिरः सदा ।
इति चोच्चार्य्य ताञ्चान्तु विप्राय प्रतिपादयेत् ।।
हिरण्य-रत्न-धेनुश्च प्रदेया विधिनाऽमुना ।
मुच्यते सर्व्वपापेभ्यः सर्व्वान् कामानवाप्नुयात् ॥
अनेन विधिना दद्याज् जलधेनुं महामुने ! ।
सर्व्वाह्लादानवाप्नोति यांश्च ध्यायति मानवः १(†) ॥
सर्व्वपाप-विनिर्म्मुक्तः पितरं सपितामहम् ।
प्रपितामहं यथा पूर्व्व-पुरुषाणां चतुष्टयम् ॥
आत्मानं तनयं पौत्रं तदधस्थाश्चतुष्टयम् ।
तारयेत् स मुनीन्द्रेह जलधेनुप्रदोनरः ॥
यश्च गृह्णाति विधिव त्तस्याप्येवं विधाः कुले ।
चतुर्द्दश तथाचैव ददतश्चानुमोदतः ॥
दीयमानां प्रपश्यन्ति जलधेनुञ्च ये नराः ।
तेऽप्यशेषाघ-निर्म्मुक्ताः प्रयान्ति परमां गतिम् ॥ - इति

अत्र विष्णुधर्म्मोत्तरोक्त जलधेन्वादौ न कृष्णाजिनास्तरणम् । अनुक्तत्वादर्था-भावाच्च । मत्स्योक्तेरेव तत्रत्यातिदेश वाक्यादित्यवगन्तव्यम् ।

## 317. हेमाद्रौ, देवीपुराणे—

तोयधेनुं ब्रुवे वत्स ! यथा देवी प्रसीदति २(‡) ।
कुम्भं तोयसुसम्पूर्णं रत्नवस्त्र युगान्वितम् ॥
समस्तवीज संयुक्तं दूर्व्वापल्लव-शोभितम् ।

समस्तवीजं–सर्व्वधान्यम् ३(+) ।

दूर्व्वाक्षतशङ्ख-दधि-कुष्ठा मलक-चन्दनैः ।
माल्यच्छत्र-समायुक्तं तिलपात्रैश्च संयुतम् ॥
दधि-क्षीर-घृतैः पात्रं विधानेनोपकल्पयेत् ।
वत्सकं कल्पयेत्तस्या स्तद्वत्तोयमयं बुधः ॥

---

१ (†) 'गाश्च' इति पुस्तकान्तर धृतः पाठः ।
२ (‡) 'ब्रूवे' इत्यत्र 'प्रब्रू' इति हेमाद्रीयः पाठः ॥
३ (+) तानि धान्यानि परिभाषाया मुक्तानि ।

देवीमभ्यर्च्च्य विधिवत् सोपवासोऽथ नक्तवान् ।
देवीभक्ते प्रदद्यादूयः सर्व्वान् कामानवाप्नुयात् ॥
सर्व्वारि सूदनी देवी देवानां भयनाशिनी १(*) ।
वेदमातर्व्वरे दुर्गे सर्व्वगे सुभगे ! नमः ॥
अनेन चा(वा)श्च मन्त्रेण नन्दानाम्नाभि मन्त्रयेत् ।
देवी मे प्रीयतां नित्यं यथोदित-फला शिवा ॥
इति देवी पुराणे जलधेनुदानम् ॥

—*—

### 318. तत्र, स्कान्देऽपि—

जलधेनुञ्च योदद्यात्तस्य दान फलं शृणु ।
प्रपां सत्रं तडागं वा कूपं वापि सुपुष्कलम् २(†) ॥
कृत्वा कुम्भान् सुवर्णांश्च गन्धमाल्यैरलङ्कृतान् ।
प्रपातु—पानीयशाला ।
तडागो—जलाशयः ।
कूपः—प्रसिद्धः ३(‡) ।
एतत् कृत्वा यत्फलं शास्त्रसिद्धं तत्फलं स्यादित्यर्थः ।
सुवर्णान्—शोभनवर्णान् ।
पुष्पैश्च विविधाकारै रभ्यर्च्च्य द्विजसत्तम ! ।
भक्ष्य-भोज्यैः सुतृप्तानां तिलपात्राणि दापयेत् ॥
दक्षिणा पुष्कला देया एभ्यस्त्वासंशयेत्ततः ।
आपः शिवास्तु सौम्याश्च तर्पयन्तु पितॄणमम ॥
कामदाः कामदानाय भवन्त्विवति च वै वदेत् ।
एवन्दत्त्वातु तान्धेनुं पुनः कृत्वाच वै तदा ॥
आवाहयेत् प्रपां देवीं ब्रह्मलोक—समर्पिणीम् ।
तिलपात्राणि दत्त्वा च तथा वस्त्रयुगं शुभम् ॥
सुवर्णस्यच सान्निध्यं फलानि विविधानि च ।
ततोदद्याच्छुचिः स्नातो ब्राह्मणेभ्यो यथाविधि ॥

---

१ (*) 'सर्व्वारि' इत्यत्र 'जयारि' इति पुस्तकान्तरधृतः पाठः ।
,, 'यथोदित कला' इत्यत्र पाठान्तरमस्ति ।
२ (†) कूपस्तडागात् द्रोणपरिमाणः स्वल्पपरिसरोभिन्नाकारश्च ।
,, "सत्रं यज्ञे सदादाने च्छादनारण्यकैतवे" इति मेदिनी ।
३ (‡) "कूपः कूपकमस्तौ मर्त्तान्धुमुत्तरत्नी" इति व्याडिः ।

एवं विधानतो दत्त्वा ब्रह्मलोके महीयते ।

इति स्कन्द पुराणोक्त-जल धेनुदानम् १(*) ॥

—*—

## (१२३) अथ क्षीर धेनु दानम् ॥

—*—

### 319. विनता (च) उवाच २(०)—

क्षीरधेनुं प्रवक्ष्यामि तन्निबोध नराधिप ! ।
अनुलिप्ते महीपृष्ठे गोमयेन नरोत्तम ! ॥
गोचर्म्म मात्रमानेन कुशानास्तीर्य्य सर्व्वतः ।
तत्रोपरि महाराज ! न्यसेत् कृष्णा जिनं बुधः ॥
तस्योपरि कुण्डलिकां गोमयेन कृतामपि ।
क्षीरकुम्भं ततः स्थाप्य चतुर्थां शेन वत्सकम् ॥
सुवर्ण मुखशृङ्गाणि चन्दनागरुकानि च ।
प्रशस्तपत्र श्रवणां तिलपात्रो परिन्यसेत् ॥
मुखंगुड़मयन्तस्या जिह्वा शर्करया तथा ।
फलप्रशस्त-दन्ताश्च मुक्ताफल मयेक्षणाम् ॥
इक्षुपादां दर्भरोमां सितकम्बल-कम्बलाम् ।
ताम्रपृष्ठां कांस्यदोहां पट्टसूत्रमयीन्तथा ॥
पुच्छञ्च नृपशार्दुल ! नवनीत मयीन्तनीम् ।
स्वर्णशृङ्गां रौप्यक्षुरां पञ्चरत्नमयीं भुवि ॥
चत्वारि तिल पात्राणि चतुर्दिक्ष्वपि स्थापयेत् ३(†) ।
सप्तव्रीहि समायुक्तां दिक्षु सर्व्वासु प्रक्षिपेत् ॥
अत्र सप्तव्रीहिः—सप्तधान्यानि ।
एवं लक्षणसंयुक्तां क्षीरधेनुं प्रकल्पयेत् ।

---

१ (*) जीवकाण्डेऽपि जलधेनुदानमावश्यकम्, तच्च ऊनाब्दे जीवकाण्डप्रकरणे वर्णितमस्ति ।

२ (०) विनीता उवाच इति क्वचिदादर्शपुस्तके पाठः ।

" 'प्रशस्तपत्र' इति क्वचित् पाठः ।

३ (†) 'चतुर्दिक्षु निधापयेत्' इत्यादर्शपुस्तकान्तरस्थः पाठः ।

आच्छाद्य वस्त्रयुग्मेन गन्ध पुष्पैः समर्चयेत् ॥
धूपदीपादिक न्दत्त्वा ब्राह्मणाय निवेदयेत् ।
आच्छाद्याल ङ्कृतं कृत्वा मुद्रिकां कर्णमात्रकैः १(*) ॥
पादुकोपानहौ च्छत्रं दत्त्वा दानं समर्पयेत् ।
*अत्र दीयते इति दानम् ।*
*या लक्ष्मीः सर्व्वभूताना मित्यादि नर पुङ्गव ! २(†) ।*
*अनेनैव तु मन्त्रेण क्षीर धेनुं प्रकल्पयेत् ३(‡) ।*
'आप्यायस्वे' तिमान्त्रेण क्षीरधेनुं प्रसाधयेत् ४(+) ।
अत्र प्रसादयेत्— उपतिष्ठेत् ।

## मन्त्रो यथा—

गृह्णामि त्वां देवि ! भक्त्या ग्राहको मन्त्रमुच्चरेत् ।
गृह्णामि त्वां देवि ! भक्त्या कुटुम्बार्थे विशेषतः ।
भजस्व कामैर्मे (मां) सर्व्वैः क्षीरधेनो ! नमोऽस्तुते ॥
एवं धेनुं यः प्रदाय क्षीराहारोदिनं चरेत् ५(×) ।
त्रिरात्रन्तु पयोभक्षो ब्राह्मणो राजसत्तम् !
दीयमानं प्रशंसन्ति ते यान्ति परमाङ्गतिम् ६(ऽऽ) ।
एतां हेमसहस्रेण शतेनाथ स्वशक्तितः ॥
शतार्द्धमथवा प्यर्द्धं तथैवार्द्धं यथेच्छया ।
दत्त्वा धेनुं महाराज ! शृणु तस्यापि यत् फलम् ॥

---

१ (*) मुद्रिका—सुवर्णनिर्म्मित भूषणम, तथाच मिताक्षरायां व्यवहाराध्याये—
"सौवर्णीं राजतीं ताम्रीं आयसीं वा सुशोभिताम् ।
सलिलेन सकृद्गीतां प्रक्षिपेत्तत्र मुद्रिकाम्" ॥
बीणाक्षिन्मती स्वर्णमुद्रे ति ।

२ (†) 'इत्यादिना नराधिप' इति ग्रन्थान्तरस्थः पाठः ।

३ (‡) 'दिनं भवेत्' इति पुस्तकान्तरधृत: पाठः ।

४ (+) 'आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् ।
भवा वाजस्य सङ्गथे' । इति शुक्ल, यजुः १२।११२ ।

५ (×) 'दिनं नयेत्' इति ग्रन्थान्तरधृत: पाठः ।

६ (ऽऽ) 'प्रशंसन्ति' इत्यत्र प्रपश्यन्ति इति ग्रन्थान्तरे पाठः ।

,, अत्र 'पठेद्वा भक्ति भावतः' इति पुस्तकान्तरस्थः पाठः ।

दिव्यं वर्षसहस्रन्तु रुद्रलोके महीयते ।
पितृ-पितामहैः सार्द्धं ब्रह्मणोभवनं ब्रजेत् ॥
दिव्यं विमान मारुढ़ो दिव्यगन्धानु लेपनः १(*) ।
क्रीड़ित्वा सुचिरं कालं विष्णुलोकं स गच्छति ॥
द्वादशादित्य सङ्काशं विमानैर्व्वर मण्डितैः ।
गीतवादित्र निर्घोषै रप्सरोगण सेवितैः ॥
तत्रोपविष्टोऽसौ राजा विष्णु सायुज्यतां ब्रजेत् ।
य इदं शृणुयाद्राजन् पठेन्नित्यं सुभक्तितः ॥
सर्व्वपाप विनिर्मुक्तः विष्णु लोकं स गच्छति ।

इति क्षीर धेनुदानम् ॥

—*—

## (१२४) अथ दधि धेनु दानम् ।

—*—

320. **स्कन्द पुराणे, विनता उवाच—**२(†)

दधिधेनोर्महाराज ! विधानं शृणु साम्प्रतम् ।
अनुलिप्ते महीभागे गोमयेन नराधिप ! ॥
गोचर्म्म मात्रान्तु पुनः पुष्पप्रकर-संयुताम् ।
कुशैरास्तीर्य्य वसूधां कृष्णाजिन-कृतास्तराम् ॥
दधिकुम्भञ्च संस्थाप्य सप्तधान्यस्य चोपरि ।
चतुर्था शेन वन् सन्तु सौवर्ण-मुखसंयुतम् ॥
प्रशस्तपत्र-श्रवणां मुक्ताफल मयेक्षणाम् ।
चन्दनागरु-शृङ्गा च तन्मुखं गन्धमालिकम् ॥

---

१ (*) विमानं-व्योमयानम्, पुष्पक मिति । "विमानं हंससंयुक्त मेतत्तिष्ठति तेऽङ्गने" । "हंसयुक्तविमानस्य माध्यमतकमण्डलुः" इति मार्कण्डेय पुराणे । "सर्व्वर्त्तोऽवसरं ददाति पुष्पकवत्" कल्पतरु-परिमले । यातायातं प्रतिदिनमहो भिद्यमाना विमानाः" गङ्गालहरी । वास्तु शास्त्रे अन्यद विमानं भूपगृहम् । प्रासाद मध्यगृहं वा । एतस्योपादान निर्म्माणतत्त्वं विश्वकर्म्मशिल्पशास्त्रे भोजराजीयसमराङ्गनसूत्रधारेऽपि —चवतु रमयन्त्रेण विमानपरिचालनतत्त्व वर्णितमस्ति ।

२ (†) 'विनतश्च उवाच' इति क्वचित्पुस्तकान्तरे धृतः पाठः ।

जिह्वा शर्करया राजन् घ्राणं श्रीखण्डकन्तथा ।
फलमूल-मयादन्ताः सितसूत्रस्य कम्बला ॥

ताम्रपृष्ठा दर्भरोमा पुच्छं सूत्रमयन्तथा ।
फलमूल-मयादन्ताः सितसूत्रस्य कम्बला ॥

ताम्रपृष्ठादर्भरोमा पुच्छं सूत्रमयन्तथा ।
स्वर्णशृङ्गीं रौप्य खुरां नवनीत मय-स्तनीम् ॥

इक्षुपादां सुसं स्कृत्य सर्व्वाभरण-भूषिताम् ।
आच्छाद्य वस्त्रयुग्मेन पुष्पगन्धैस्तु पूजिताम् ॥

ब्राह्मणाय कुलीनाय साधुवृत्ताय धीमते ।
समाधि यमयुक्ताय तादृशाय प्रदापयेत् ॥

पुच्छदेशोपविष्टाय मुद्रिका कर्णमात्रिका ।
पादुकोपानहौ छत्रं दत्त्वा मन्त्रमनुस्मरेत् ॥

तन्मन्त्रस्तु—'या लक्ष्मी' रित्यादि ।
अनुस्मरेत् पठेत् ॥
'दधिक्राव्णे'ति मन्त्रेण दधिधेनुं प्रदापयेत् १(*) ।
एवं दधिमयीं धेनुं दत्त्वा राजर्षि सत्तम ! ॥
एकाहारो दिनं तिष्ठेत् दध्नाच नृपनन्दन ! ।
यजमानोवसेद्राजन् त्रिदिनञ्च द्विजोत्तमः ॥
दीयमानं प्रपश्यन्ति तेऽपि यान्ति पराङ्गतिम् ।
यत्र मधुवहा नद्यो यत्र पायस कर्दमाः ॥
मुनय ऋषयः सिद्धा स्तत्र गच्छन्ति धेनुदाः ।
य इदं शृणुयान्नित्यं श्रावयेद्वापि मानवः ॥
अश्वमेधफलं प्राप्य विष्णुलोकं स गच्छति २(†) ।

इति दधि धेनुदानम् ॥

—*—

१ (*) 'दधिक्राव्णोऽकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभिनो मुखाकरत प्रणआयूंषितारिषत्' ॥ यजुर्वेद २३।३२ ।

२ (†) 'य इदं शृणुयान्नित्यं पठेद्वा भक्तिभावतः ।
सर्व्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति' ॥ इति पाठश्च ग्रन्थान्तर धृतः पाठः ।

# (१२५) अथ मधुधेनुदानम् ।

—*—

321. **स्कान्दे—**

मधुधेनुं प्रवक्ष्यामि सर्व्वपाप-प्रणाशिनीम् ।
अनुलिप्ते महीपृष्ठे कृष्णाजिन कुशोत्तरे ॥
कुशेभ्य उत्तरं कृष्णाजिनम् । अस्मिन् महीपृष्ठे इति समासः ।
धेनुं मधुमयीं कृत्वा सम्पूर्णघटपूरिताम् ।
तद्वच्चतुर्थ भागेन वत्सकं परिकल्पयेत् ॥
सौवर्णन्तु मुखंकृत्वा शृङ्गाण्यगरुचन्दनम् ।
पृष्ठं ताम्रमयन्तस्य पुच्छं सूत्रमयन्तथा ॥
पादास्त्विक्षुमयाः कार्य्याः सित कम्बल-कम्बलाम् ।
मुखं गुड़ मयं कृत्वा जिह्वा शर्करयान्विता ॥
मौक्तिके नयने तस्या दन्ताः फलमया-स्तथा ।
दर्भरोमधरां देवीं रौप्यखुर विभूषिताम् ॥
अश्वत्थपत्र श्रवणां नवनीतमयस्तनीम् ।
सर्व्वलक्षणसंयुक्तां सप्तधान्यानि दापयेत् ॥
चत्वारि तिलपात्राणि चतुर्द्दिक्षु च विन्यसेत् ।
आच्छाद्य वस्त्रयुग्मेन घण्टाभरण भूषिताम् ॥
कांस्योपदोहनीन्दत्वा गन्ध पुष्पैस्तु पूजिताम् ।
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ॥
संक्रान्तावुपरागेष सर्व्वकालमतन्द्रितः ।
द्रव्यं ब्राह्मण-सम्पत्तिर्दृष्ट मात्रेण दापयेत १(*) ॥
ब्राह्मणाय दरिद्राय श्रोत्रियाय कुटुम्बिने ।
आर्य्यावर्त्त-समुत्पन्न-वेदवेदाङ्गपारगे २(†) ॥
तादृशाय प्रदातव्या मधुधेनुर्नरोत्तम ! ३(‡) ।

---

१ (*) 'दृष्टिपाते प्रदापयेत्' इति ग्रन्थान्तर धृतः पाठः ।
२ (†) 'वेदवेदाङ्गवेत्ताच आर्य्यावर्त्तोद्भवायच' इति तत्रैव ग्रन्थे पाठान्तरम् ।
३ (‡) 'नराधिप' इति तत्रैव पाठान्तरम् ।

पुच्छदेशोपविष्टाय गन्धालं कारमालिने १(*) ॥
आच्छाद्य वस्त्रयुग्मेन मुद्रिकां कर्णमात्रिकाम् ।
स्वशक्त्याद्दक्षिणान्दत्त्वा वित्तशाच्य-विवर्ज्जितः ॥
उदक-पूर्व्वन्तु कर्त्तव्यं पश्चाद्दानं समर्पयेत् ।-
रसज्ञाः सर्व्वदेवानां सर्व्वभूत हिते रताः ॥
प्रीयन्तां पितृदेवाश्च मधुधेनो ! नमोऽस्तुते ।
अहङ्गृह्णामि त्वां देवि ! कुटुम्बार्थं विशेषतः ।
कामं कामदुघे कामान् मधुधेनो ! नमोऽस्तुते ॥
'मधुवाते' तिमन्त्रेण प्रदाप्या यत चेतसा २(†) ।
दत्त्वा धेनुं महाराज ! छत्रकोपानहौ तथा ।
एवं यः कुरुते भक्त्या मधुधेनुं नराधिप ! ३(‡) ॥
दत्त्वा दानं पायसेन मधुनाच दिनं नयेत् ४(+) ।
ब्राह्मणोऽपि त्रिरात्रन्तु मधुपायस संयुतम् ५(×) ॥
एवं कृतेतु यत् पुण्यं तन्निवोध नराधिप ! ।
यत्र मधुवहा नद्यो यत्र पायस-कर्द्दमाः ॥
ऋषयोमुनयः सिद्धास्तत्र गच्छन्ति धेनुदाः ।
क्रीड़ित्वा सुचिरं कालं पुनर्मर्त्त्यमुपागतः ॥
स भुक्त्वा विपुलान् भोगान् विष्णुलोकञ्च गच्छति ।
दश पूर्व्वान् दशपरान् आत्मानञ्चैक विंशकान् ६(०) ॥
स नये द्विष्णु सायुज्यं मधुधेनु-प्रसादतः ।
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ॥
सर्व्वपाप-विनिमुक्तो विष्णुलोकं स गच्छति ।

इति मधुधेनु दानम् ॥

—*—

१ (*) 'गन्धपुष्पादि पूजिताम्' इति हेमाद्रौ ।
२ (†) 'मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः' ।
'माध्वीर्नः सन्त्वोषधीः' । मधुवातेति-ऋक्त्रयम् । शुक्लयजुः—१३।२७।२८।२९ ।
३ (‡) इत्यारभ्य मधुधेनुदानफल कीर्त्तनम् ।
४ (+) 'दाता ततः पायसेन' इति ग्रन्थान्तर धृतः पाठः ।
५ (×) 'मधपायसभुग् भवेत्' इति पाद्मग्रन्थान्तर धृतः पाठः ।
६ (०) 'विंशतिम्' इति पुस्तकान्तर धृतः पाठः ।

## (१२६) अथ इक्षुरस धेनुदानम् ।

—*—

322. **स्कान्दे, विततोवाच**---

रस धेनुं महाराज ! कथयामि समासतः ।
अनुलिप्ते महीपृष्ठे कृष्णाजिन कुशोत्तरे ॥
रसस्य तु घटं राजन् ! सम्पूर्णं मैक्षवस्य च ।
तद्वत् सङ्कल्पयेत् प्राज्ञः चतुर्थांशेन वत्सकम् ॥
इक्षुदण्डमया पादा राजत-खुर-संयुताः १(*) ।
सुवर्ण शृङ्गाभरणा वस्त्रपुच्छा घृत स्तनी ॥
पुष्प कम्बल संयुक्ता शर्करा मुख जिह्विका ।
दन्ताः फलमया स्तस्याः पृष्ठन्ताम्रमयं शुभम् ॥
पुष्प रोमातु राजेन्द्र ! मुक्ताफल-कृतेक्षणाम् ।
सप्तव्रीहि समायुक्तां चतुर्दिक्षु सदीपिकाम् ॥
सर्व्वोपस्कर संयुक्तां सर्व्वगन्ध विभूषिताम् ।
चत्वारि तिलपात्राणि चतुर्दिक्षु निवेशयेत् ॥
ब्राह्मणे वेदविदुषे श्रोत्रियायाहिताग्नये २(†) ।
पुराणज्ञे विशेषेण साधुवृत्ताय धीमते ॥
तादृशाय प्रदातव्या रसधेनुः कुटुम्बिने ।
दाता स्वर्गमवाप्नोति सर्व्वपाप—विवर्ज्जितः ॥
दाता वा ग्राहकोवापि एकाहं रस-भोजनः ।
सोमपानं भवेत्तस्य सर्व्वमेव फलं भवेत् ॥
दीयमानां तु पश्यन्ति तेऽपि यान्ति परांगतिम् ।
धेनुञ्च पूजयित्वाग्रे गन्धधूपस्रगादिभिः ॥
पूर्व्वोक्ता ये च मन्त्राश्च तानेव प्रयतः स्मरेत् ३(‡) ।
ते मन्त्राः 'या लक्ष्मी'रित्यादयः प्रागुक्ताः ज्ञेयाः ।

---

१ (*) 'खुरनिर्म्मिता' इति ग्रन्थान्तरस्थः पृथक् पाठः ।
२ (†) 'विप्राय वेदविदुषे' इति आदर्शान्तरस्थ-पाठः ।
३ (‡) 'चरेदित्यत्र' 'पठेदिति' ग्रन्थान्तरस्थः पाठः ।

एवमुच्चारयित्वातु दीयते वै द्विजोत्तमे ।
दशपूर्व्वान् परांश्चैव आत्मानञ्चैकविंशकम् ॥
तन्नयेत् परमं स्थानं यस्मान्नावर्त्तते पुनः ।
एषा ते कथिता राजन् ! रसधेनुरनूत्तमा ॥
ददस्व च महाराज ! पुण्यश्लोकानवाप्नुहि ।
य इदं पठते नित्यं शृणुया द्वापि भक्तितः ॥
सर्व्वपाप-विनिर्म्मुक्तो विष्णुसायुज्यतां व्रजेत् ।
इति इक्षुरसधेनुदानम् ॥

—*—

## (१२७) अथ शर्कराधेनुदानम् ।

—*—

### 323. स्कान्दे, विनतोवाच—

तद्वच्च शर्कराधेनुं शृणु राजन् यथार्थतः १(*) ।
अनुलिप्ते महीपृष्ठे कृष्णाजिन कुशोत्तरे ॥
धेनुः शर्करया राजन् सदा भार-चतुष्टयम् ।
उत्तमा कथ्यते सद्भिः चतुर्थांशेन वत्सकः ॥
तदर्द्धं मध्यमा प्रोक्ता चतुर्थांशेन चाधमा २(†) ।
तद्वद् वत्सं प्रकुर्वीत चतुर्थांशेन मानवः ॥
अष्टमांशेन वा कुर्य्यात् चतुर्थांशेन वत्सकम् ३(‡) ।
अष्टमांशेन—अर्द्धभारेण ।
स्वशक्त्या कारयेद्धेनुं यथात्मानं न पीड़येत् ।
सर्व्वबीजानि संस्थाप्य चतुर्द्दिक्षु समन्ततः ४(०) ॥
सौवर्ण-मुखशृङ्गानि मौक्तिकैर्नयनानि च ।
गुड़ेन च मुखं कार्य्यं जिह्वा पिष्टमयी तथा ॥

---

१ (*) राजन् कुर्य्याद यथार्थतः इति हैमाद्रीयः पाठः ।
२ (†) 'कन्यसा' इति पाठश्चान्तर धृतः पाठः ।
३ (‡) अथवा धेनुतः कुर्य्यादष्टमांशेन वत्सकम्' इति हैमाद्रीयः पाठः ।
४ (०) 'सर्व्व मौषधि' इति पाठसंग्रहान्तरस्थः पाठः । अत्र सर्व्वबीजानि-सर्व्वधान्यानीत्यर्थः ।

कम्बलं पट्टसूत्रेण घन्टाभरण भूषिता १(*) ।
इक्षु-पादा रौप्यखुरा नवनीतमयाः स्तनाः ॥
प्रशस्तपत्र-श्रवणा सितचामर-भूषिता ।
पञ्चरत्न-समायुक्ता दर्भरोम समन्विता ॥
कांस्योपदोहना सम्यक् गन्ध-पुष्पैः समन्विता ।
ईदृग्विधान-संयुक्ता वस्त्रैराच्छादितोपरि ॥
गन्धपुष्पैरलङ्कृत्य ब्राह्मणाय निवेदयेत् ।
श्रोत्रियाय दरिद्राय साधुवृत्ताय धीमते ॥
वेद-वेदाङ्ग-विदुषे विशेषेणाग्नि होत्रिणे ।
अनसूयवेच दातव्या न मत्सर-युताय वै ॥
अयने विषुवे पुण्ये व्यतीपाते च षन्मुख !
एषु पुण्येषु कालेषु यदृच्छा वापि दापयेत् २(†) ॥
सत्पात्रन्तु द्विजं दृष्ट्वा स्वागतं श्रोत्रियं गृहे ।
तादृशाय प्रदातव्या पुच्छदेशे निवेदयेत् ॥
पूर्व्वमुखस्थितो दाता अथवा तु उदङ्मुखः ।
धेनुं पूर्व्वमुखीं कृत्वा वत्स मुत्तरतो न्यसेत् ॥
दानकाले तु ये मन्त्रा स्तान् पठित्वा समर्पयेत् ।

अत्र मन्त्रा 'या लक्ष्मी'रित्यादयः प्रागुक्ताः ॥

आच्छाद्य चैव तं विप्रं मुद्रिताकर्ण वेष्टकैः ।
स्वशक्त्या दक्षिणान्दद्याद् गन्धपुष्पं सचन्दनम् ॥
धेनुं समर्पयेत्तस्य मुखञ्च न विलोकयेत् ।
एकाहं शर्कराहारो ब्राह्मण स्त्रिदिनं वसेत् ॥

अत्र ब्राह्मणो ग्रहीता ।

सर्व्वपापहरा धेनुः सर्व्वकामप्रदायिनी ।
सर्व्वकामः समृद्धस्तु जायते नात्र संशयः ॥
दीयमानं प्रपश्यन्ति तेऽपि यान्ति परां गतिम् ।
यइदं शृणुयाद्भक्त्या पठ्यते वापि मानवः ॥

---

१ (*) 'संयुता' इति आदर्श ग्रन्थान्तरस्थः पाठः ।
२ (†) 'एषिषन' येष्विति पाठः आदर्शग्रन्थान्तरस्थो दृश्यते ।

मुच्यते सर्व्वपापेभ्यो विष्णुलोकं स गच्छति।
इति शर्करा धेनुदानम्॥

—*—

## (१२८) अथ कार्पास धेनुदानम्।

—*—

324. **वराह उवाच—**

अतः परं प्रवक्ष्यामि धेनुं कार्पासकीं शुभाम्।
विश्वस्य गुह्यगुप्त्यर्थं ब्रह्मणा चांशुकं कृतम् १(*)॥
गुह्यम्—गोप्यस्थानं लिङ्गादि।
कार्पासमूलं तत्रापि तेनासावुत्तमः स्मृतः।
सा च कार्पास-भारेण धेनुश्रेष्ठा प्रकीर्त्तिता॥
मध्यमा च तदर्द्धेन तस्याप्यर्द्धेन कन्यसा।
पूर्व्ववद्वस्त्रधान्यश्च हिरण्यश्च तथैव च॥
वत्सकन्तु चतुर्थांशे दानमन्त्रो विधीयते।
कुर्व्वीत पूर्व्ववद् वत्सं वस्त्रधान्याद्युपस्करम् २(†)॥

अत्र पूर्व्ववदिति—वराहपुराणोक्त-तिलधेनुवदित्यर्थः।

हेमकुन्देन्दु सदृशे! क्षीरार्णव समुद्भवे।
सोमप्रिये सुधेन्वाख्ये सौरभेयि! नमोऽस्तुते॥
दत्त्वेयमिन्दुनाथाय शशाङ्कायामृताय च।
अत्रि नेत्र-प्रजाताय सोमराजाय वै नमः ३(‡)॥

**इति दानमन्त्रः।**

यस्त्वेवं परया भक्तया ब्राह्मणाय प्रयच्छति।
स याति सोमलोकन्तु सोमेन सह मोदते ४(०)॥

---

१ (*) ब्रह्मणाच स्वयं कृतम्—
,, 'ब्रह्मणा चांशुकं कृतम्' इत्यादर्श ग्रन्थान्तरस्थः पाठः।
२ (†) 'समन्वितं' इति आदर्शान्तर-धृतः पाठः।
३ (‡) अत्र आत्रेय-दत्तेयमिन्दु नाथायेति च पाठान्तरद्वयमस्ति।
४ (०) 'चन्द्रलोकन्तु' इति आदर्शान्तरः-धृत पाठः।

न रोगी न ज्ज्वरी कुष्ठी कुले तस्य प्रजायते।
पुत्र-दार-समोपेतो जीवेच्च शरदां शतम्॥
इति कार्पास धेनु दानविधिः॥

—*—

## (१२६) अथ लवणधेनु दानम्।

—*—

325. **भविष्ये, कृष्ण उवाच—**

शृणु राजन्! प्रवक्ष्यामि लवणस्येह कल्पिताम् १(*)।
गोमयेणोपलिप्ते तु दर्भसंस्थर-संस्थिताम्॥
आविकञ्चर्म्मविन्यस्य पूर्व्वाशाभिमुखं स्थिताम्।
वस्त्रेणाच्छादितां कृत्वा धेनुं कुर्व्वीत मध्यमाम् २(†)।
आढ़केनैव कुर्व्वीत बहुवित्तोऽल्पवानपि।
स्वर्ण-शृङ्गीं रौप्यखुरां इक्षुपादां फलस्तनीम्॥
कार्य्या शर्करपा जिह्वा गन्ध-घ्राणवती तथा।
समुद्रोदरजां शुक्तिं कर्णौ च परिवेष्टयेत् ३(‡)॥
शृङ्गे चन्दन काष्ठाभ्यां मौक्तिके चाक्षिणी उभे।
कपोलौ सक्तुपिण्डाभ्यां यवानास्ये प्रदापयेत् ४(+)।
कम्बलं पट्टसूत्रेण ग्रीवायां कर्णिन्त्रिकां तथा।
पृष्ठे वै ताम्रपात्रन्तु अपाने गुड़पिण्डकम्॥
लाङ्गुले कम्बलं दद्याद् रसान् क्षीर-प्रदेशतः।
योनि-प्रदेशे च मधु सर्व्वतस्तु फलान्विताम्॥
एवं सम्यक् परिस्थाप्य लवणस्य कृताञ्च गाम्।
स्थापयेत् वत्सकञ्चापि चतुर्भागेण मानवः ५(×)॥

---

१ (*) 'काल्पताम्' इति आदर्शान्तर-धृतः पाठः।

२ (†) 'मध्यमाम्' इति बुद्धिमान् इति च पाठान्तर द्वयम्।

३ (‡) 'परिकल्पयेत्' इति तत्रैव पाठान्तरम्।

४ (+) 'प्रकल्पयेत्' इति तत्रैव पाठान्तरम्।

५ (×) 'चतुर्भागेन' इत्यत्र लवणधेनो चतुर्थांशादिना तत्परिमाणेन च तद् वत्स परिकल्पनं ज्ञेयम्।

वि—३६

एवं धेनुं समभ्यर्च्य माल्यवस्त्रैर्विभूषणैः ।
स्नात्वा देवार्च्चनं कुर्य्याद् ब्राह्मणानभिपूज्य च ॥
कृत्वा प्रदक्षिणं गान्तु पुत्रभार्य्या समन्वितः ।
ब्राह्मणाय सुशीलाय वृत्तयुक्ताय वै नृप ! ॥
दद्यात् पर्व्वसु सर्व्वेषु मन्त्रेणानेन मानवः ।
लवणे वै रसाः सर्व्वे लवणे सर्व्वदेवताः ॥
सर्व्व-देवी-मयि-देवि लवणाख्ये ! नमोऽस्तुते ।
एवमुच्चार्य्य मन्त्रान्ते विप्राय प्रतिपादयेत् ॥
सम्यक् प्रदक्षिणं कृत्वा दक्षिणासहितं नृप ! ।
प्रदक्षिणा मही तेन कृता भवति भारत ! ॥
सर्व्वदानानि दत्तानि सर्व्वत्तुक फलानि च ।
सर्व्वे रसाः सर्व्वमन्त्राः सर्व्वमेतच्चराचरम् ॥
सौभाग्यञ्च परां वृद्धिं शरीरारोग्य-सम्पदः ।
नृणां भवति दत्वा तु रसधेनुं न संशयः ।
स्वर्गे च नियतं वासो यावदाभूत-संप्लवम् ॥
पत्रो (त्तो)र्ण कम्बलगलां लवणोदकेन ,
कृत्वा फलस्तनवतीमविचर्म्म-पृष्ठे ।
दत्त्वा द्विजाय विधिवद्रस-धेनुमेताम् ;
लोकं गवां सकल-सौख्ययुतं प्रयाति १(*) ॥

इति लवण धेनुदानम् ।

—*—

## (१३०) अथ कर्पूरादि-धेनुदानम् ।

—*—

326. **विष्णु धर्म्मोत्तरे—**

कर्पूरधेनुं वक्ष्यामि सर्व्वगन्धमयीं शुभाम् ।
यान्दत्वा सर्व्वगन्धास्तु प्रदत्ताःस्युर्महीपते ! २(†) ।

---

१ (*) 'गोलोकमिति सकलेश्वरतां प्रयाति' इति आदर्श पुस्तकान्तर-धृत: पाठ: ।

२ (†) न संशय इति आदर्श पुस्तकान्तर धृतः-पाठ: ।

चन्द्रग्रहे वाथ भानौ कार्त्तिक्यां विष्णुवत्यथ १(*) ।
द्वादश्यामयने पुण्ये दद्यात् कर्पूरगां शुभे ॥
ब्राह्मणाय दविद्राय शीलवृत्त-परायच २(†) ।
भूमावास्तीर्य्य नेत्रन्तु शङ्खशुक्लाम्बरं शुभम् ॥
कार्य्या चतुष्पला धेनुः पलमात्रन्तु वत्सकः ।
अथवा पलिका धेनुं वत्सः कार्य्यन्तु कार्षिकः ॥
स्वर्णशृङ्गा रौप्यखुरा पुच्छं कुङ्कुम-सम्भवम् ।
मृगनाभिमया दन्ताः ग्रन्थिः पर्णमयं मुखम् ॥
अक्षिणी सिह्लकमये कर्णौ चागुरू काष्ठजौ ।
देवदारुमयं पुच्छं गुदं गुग्गुल सम्भवम् ॥
उदरे चन्दनं दद्यात् खुराग्रे नखमेव च ।
कुष्ठैः कपोलकं प्रोक्तं उशीरं चर्म्म चैव तु ॥
एवं संकल्प्य कर्पूरां धेनुं वस्त्रेण पूजिताम् ।
विप्रं सम्पूज्य कर्पूरां वस्त्रयुग्मेन चैव हि ॥
कर्पूरधेनुं विप्रेश गृहाण मत् सुपूजिताम् ।
पुष्पगन्धस्थिता सा मे कमला प्रीयतामिति ॥
अनेनैव तु मन्त्रेण दानं विप्राय दापयेत् ।
दत्त्वा धेनुमिमां राजन् गन्धर्वाणां समोभवेत ॥
कल्पत्रयं वसेत् स्वर्गे राजराजो भवेदिह ।
सर्व्वान् कामानवाप्नोति गौरी लोके महीयते ॥
सर्व्वकाम प्रदा धेनुः शर्करायाः प्रकीर्त्तिता ।

## तत्रैव, तथा—

सर्व्वपापहरा यस्माद्दद्याद्धेनुं समाहितः ।
सर्व्वरोगहरा यस्माद्दद्याद्धेनुं सभक्तिकः ॥
गुडधेनुवदत्रापि मन्त्रावाहन पूजनम् ।
दत्त्वा गन्धमयीन्धेनुं कामानां फलमाप्नुयात् ३(‡) ॥

---

१ (*) विषुपदार्कः, विवृवत्यथेति च इति—आदर्श पुस्तकस्थः पाठः ।
२ (†) शीलवृत्त परायच इति आदर्श पुस्तकान्तर धृतः पाठः ।
३ (‡) 'फलभाक् भवेत्' इति हेमाद्रीय-पाठः ।

एवं कस्तुरिकां धेनुं श्रद्धावित्तानुसारतः १(*) ।
पात्रे दद्यान्नृपश्रेष्ठ मन्त्रमेनमुदीरयेत २(†) ।
एनं पूर्व्वोक्तं मन्त्रमिति ।
अत्र कस्तुरीपद-प्रक्षेपः कार्य्यः कर्पूर पदस्थाने ।

इति कर्पूरधेनु दानम् ।

—*—

## (१३१) अथ सुवर्ण धेनुदानम् ३(‡) ।

—*—

327. **विष्णुधर्मोत्तरे—**

कथयामि रहस्यन्ते दानधर्म्मोप-बृंहितम् ।
सुवर्णधेनु-सम्बन्धि सर्व्वपापोप शान्तिदम् ॥
यद् ब्रह्मणापि राजेन्द्र ! विहितं विष्णुणा पुरा ।
तत्ते विस्तरतो राजन् ! कथयाम्यनु पूर्वशः ॥
सुवर्णस्य सुवर्णस्य शुद्धस्य परिकल्पिताम् ।
अत्र द्वितीय सुवर्णशब्दः परिभाषोक्तः परिमाणार्थः ।
शुद्धशब्दः—उत्तमार्थः ।
रौप्यवत्सक-संयुक्तां मुक्ताफल-विभूषिताम् ।
प्रवालशृङ्गोपयुतां पद्मरागाक्षि-शालिनीम् ॥
घृतपात्र-स्तनवतीं कर्पूरागुरू-नासिकाम् ।
शर्करारसनोपेतां मिष्टान्नमुख-सस्मिताम् ४(+) ॥
शङ्खशृङ्गान्तरां शुक्ति-ललाट स्थान कल्पिताम् ।
फलदन्तां वस्त्रयुग्मपार्श्वां क्षौमसुकम्बलाम् ॥

---

१ (*) एवम् इत्यत्र तथा इति हेमाद्रीय-पाठः । श्रद्धावित्त समन्वितः इति च हेमाद्रीय-पाठ

२ (†) मन्त्रमेतदिति क्वचिदादर्शे ग्रन्थे पाठः ।
—एनमिति कथितानुकथनेन या लक्ष्मी रित्यादि मन्त्रो-बोध्यः ।

३ (‡) अथ सुवर्ण धेनुदानं प्रागुक्त-ग्रन्थानविरोधाय सामान्य विशेषेण देयम् । ।
सामान्यत-उक्ता सम्प्रति विशेषेणोच्यते इति ।

४ (+) षष्टान्न(र्ष)संयुतामिति ग्रन्थान्तरे पाठान्तरमस्ति ।

इक्षुपादां नालिकेर श्रवणां गुड़जानुकाम् ।
पञ्चगव्य पानवतीं कांस्यपृष्ठ-समन्विताम् ॥
सुपट्टसूत्र-लाङ्गुलां सप्तधान्य-समन्विताम् ।
फलपुष्प समोपेतां सूत्रोपानत्-समन्विताम् ॥
सुवर्णधेनुं विप्राय प्रतिपाद्येद्दशीं नरः ।

दानमन्त्रस्तु—

हिरण्यरेताः पुरुषः पुराणः कृष्णपिङ्गलः ।
तप्तहेमच्छविः स्रष्टा विश्वात्मा प्रीयतामिति ॥
अनेनैव तु मन्त्रेण धेनोर्द्दानं प्रकीर्त्तितम् १(*) ।
अश्वमेध-सहस्रस्य फलमाप्नोत्यसंशयम् ॥
कुलानान्तु सहस्रन्तु स्वर्गं नयति तद्बुधः ।
किमन्यैर्वहुभिर्द्दानैः पर्य्याप्तं हेमधेनुना ॥
सुवर्णधेनुं दत्वा हि कृतकृत्यो भवेन्नरः ।
हिरण्यगर्भो भगवान् प्रीयतामिति कीर्त्तयेत् ॥
उपवास-विशुद्धात्मा दद्यात् सोम-रविग्रहे ।
रक्षः पिशाचास्तद्गेहं न पश्यन्ति नराधिप !
कार्त्तिक्यां प्रयतो दद्याद् द्वादश्यां कार्त्तिकस्य तु ।
दत्वा तत्पदमाप्नोति यत्र गत्वा न शोचति ॥

इति सुवर्ण-धेनुदानम् ॥

—*—

328. तत्र पुनर्वह्निपुराणे—

सुवर्णधेनुश्चाप्यत्र सुवर्णाश्च चतुर्दश ।
सुनिर्निष्क सुवर्णैश्च सप्तभिः मध्यमा स्मृता ॥
चतुर्भिः कन्यसा प्रोक्ता चतुर्थांशेन वत्सकः ।
गुड़धेनु विधानेन दत्वा सर्व्वफल प्रदा १(†) ॥

---

१ (*) सुवर्णधेनुदानेऽयं मन्त्रो विशेषः । प्राक् 'या लक्ष्मीरि'त्यादिमन्त्रः प्रकीर्त्तितोऽत्र धेनुदाने ।

२ (†) पूर्व्वं यद्गुड़धेनुविधानमुक्तं तद्विधानानुसारेण सुवर्णधेनुदानं कर्त्तव्यम् । उभयोर्विधान-सामान्यात् ।

329. **विश्वामित्रः—**

हिरण्यरेता पुरुषः पुराणः कृष्णपिङ्गलः ।
रत्नहेमच्छविः स्रष्टा विश्वात्मा प्रीयतां विभुः ॥
हिरण्यगर्भो भगवान् प्रीयतामिति कीर्त्तयेत् ।
सुवर्णधेनुन्दत्वा च कृतकृत्यो भवेन्नरः ॥
इति वह्निपुराणोक्त-सुवर्णधेनुदानम् ॥

—*—

## (१३२) अथ प्रमेहघ्न-सुवर्णधेनु दानम् ।

—*—

330. **तदाह वृद्धगोतमः—**

धेनुं स्वर्णमयीं कुर्य्यात् पूर्व्वेण विधिना ततः ।
सुवर्ण शृङ्गीं रत्नाढ्यां तथा रौप्य-खुरामपि ॥
तथाच तर्णकं कुर्य्यात् अष्टभागेन पूर्व्ववत् ।
अत्र तर्णको वत्सः १(*) ।
ब्राह्मणं श्रुतसम्पन्नं वैष्णवञ्च कुटुम्बिनम् २(†) ।
आचारवन्तं धर्मिष्ठं द्विज-शुश्रुषणोद्यतः ।
गृहमाहुय विधिवत् पूजयेत पूर्व्ववच्च तम् ॥
यथा विभवतो भक्त्या हेम पूर्व्ववदेव हि ।
मन्त्रैस्तु वैष्णवैः सम्यक् पालास-समिधस्तथा ३(‡) ॥
होमान्ते तां प्रदद्याच्च मन्त्रेणानेन हेमवान् ।
चक्रं सुदर्शनं यस्य राजतेन तथैव हि ४(+) ॥
प्रमेहं हरति क्षिप्रं विष्णुर्गरुड़-वाहनः ।

---

१ (*) 'सद्योजातस्तु तर्णकः' इत्यमरः। तर्णकः तुवरः पयः।—सद्योजातः गोशिशुरिति।
'तर्णकस्तूक्तमिदं स्यात् सद्योजाते च शिशौ' इति केचित्।

२ (†) वैष्णवं ब्रह्मबान्धवम् इति ग्रन्थान्तरस्थः पाठः।

३ (‡) 'समिधः शताः' इति ग्रन्थान्तरस्थः पाठः।

४ (+) अत्र 'राजते च' इत्यपि पाठः सम्भवः।

इति तद्धेनुदान मन्त्रः।

दान प्रमेह रोगघ्नं एतत् कार्य्यं मनीषिभि.।
कृतेनानेन शाम्यन्ति प्रमेहा दारूणा अपि॥
अत्र पूर्व्ववदिति-राजत-वृषभदानवदिति ज्ञेयम्।
इति प्रमेहघ्न-सुवर्णधेनु दानम्॥

—*—

## (१३३) अथ बन्ध्यात्वहर-सुवर्णधेनु दानबिधिः।

—*—

331. **वायु पुराणे—**

चतुर्विधा च या बन्ध्या भवेद्वत्स वियोजनात् १(*)।
वक्ष्ये तस्याः प्रतीकारं तत् स्वरूपं विबोध मे॥
हिरण्येन यथाशक्त्या सवत्सां कारयेद् दृढ़ाम्।
धेनुं पलेन वत्सञ्च पादेन गुरूरब्रवीत्॥
धेनुं रौप्यखुरां रत्नं तस्याः पुच्छे नियोजयेत्।
घन्टां गलेच वध्नीयान सवत्सां प्राङ्मुखः शुचिः॥
चन्दनागुरूकर्पूरैः गन्धमाल्यैः सुशोभनैः।
उपचारैः षोड़शभि नैवेद्यं पायसम्भवेत॥
मोदकञ्च तथाऽपूपं गुड़ंलवण मेव च २(+)।
जीरकन्तु सुविस्तीर्णे शूर्पे वेणुमये दृढ़े॥
धेनोरेकं प्रदातव्यं ब्राह्मण त्रिषु चैव हि।
षड़ष्टौ दश वा दद्यात तद नन्तरमेव च॥
ब्राह्मणं सर्व्वशास्त्रार्थ कुशलं धर्म्मवेदिनम्।
विद्याविनयसम्पन्नं शान्तं चैव जितेन्द्रियम्॥
अलोलुपं सर्व्वजनस्याश्रयं पाप वर्जिनम्।
आहूय भक्त्या सम्पूज्य वस्त्राद्यै गन्धपुष्पकैः॥
तेनैव कारयेद् पूजामाद्दतो धेनुवत्सयोः।
होमञ्च कारयेत्तत्र समिदाज्यः चरूत्कटम्॥

१ (*) 'चतुर्विधातु या' इति आदर्शान्तरस्थः पाठः।
२(+) 'धूपं लवणमेवच' इति आदर्श ग्रन्थान्तरस्थः पाठः।

**अत्र दानमन्त्रमाह—**

'सोमो धेनु'मिति मन्त्रं समुच्चार्य्य ततः पुनः १(*) ।
प्राङ्मुखायोपविष्टाय प्रदद्यात्तामुदङ्मुखः ।
मन्त्रेनानेन विधिवत् पुच्छे हस्तं विधाय च ॥
धेनुर्याऽङ्गिरसः सातु वसिष्ठे सुरभिश्च या ।
दुहिता या तथा भानो रग्नेश्च वरुणस्य च ॥
याश्च गावः प्रवर्त्तन्ते अग्निषु पवनेषु च ।
प्रीणन्तु ता मम सदा पुत्र पौत्र प्रदा सुखम् ॥
प्रयच्छन्ति दिवारात्रं अविच्छेदश्च सन्ततेः ।

**इति दानमन्त्रः ।**

एवं दत्वा तु तद्दानं प्रणिपत्य विसर्ज्जयेत् ।
एवं कृते तु बन्ध्यात्वं नश्यत्येव न संशयः ॥
इति बन्ध्यात्व हर-सुवर्ण-धेनुदानविधिः ॥

—*—

## (१३४) अथ प्रस्विन्नपाणि-पादत्वहर-सुवर्णधेनु दानम् ।

**तत्रैव—**

प्रस्विन्न—पाणिपादः स्याद् योहरेच्च रसादिकम् ।
वक्ष्यामि तत् प्रतिकारं होमदानादिकर्म्मणा २(†) ॥
पलार्द्धेन तदर्द्धेन तदर्द्धेनाथवा पुनः ।
कुर्य्याद्धेनुं सुवर्णेन वत्सस्तत्पादतो भवेत् ॥
एवं कृत्वातु तान्धेनुं वस्त्रेणावेष्ठ्य शोभनाम् ।
गुडस्योपरि संस्थाप्य पूजयेद् गन्धपुष्पकैः २(‡) ॥
गुडस्य च परिमाणं चत्वारिंशत् पलम्भवेत ।
यद्वा तदर्द्धमेवं स्याद् यथा विभवमेव वा ॥

---

१ (*) 'सोमोधेनुं सोमो अर्व्वन्तमाशुं सोमोवीरं कर्म्मण्यं ददाति ।
'सादन्यं विदथ्यं सभेयं पितृश्रवणं योददाशदस्मै' । शुक्लयजुः १८।२१ ।

२ (†) 'होमदानादि' इति आदर्शान्तर पुस्तके पाठान्तरमप्यस्ति ।

१ (‡) 'गन्धधूपकैः' इति आदर्श ग्रन्थान्तरस्थः पाठः ।

हव्य कव्यादि च घृत-दधि-क्षीर-चतुष्टयम् ।
पादेष्वे कैकशः स्थाप्य पूर्व्वदक्षिणतः क्रमात १(*) ॥
शृङ्गानि च पुनस्तस्याः कुङ्कमेनानुलेपयेत् ।
एवं विधाय तान्धेनुं आचार्य्यः स्वर्णरूपिणीम् ॥
होमं समारभेत् कुण्डे स्थण्डिले वाथ पूजिते ।
अग्नि प्रणयनं कृत्वा ह्याचार्य्यः सर्व्ववेदवित् ॥
धर्म्मज्ञोयज्ञवेत्ताच कुशलः क्रोधवर्जितः २(†),
अनुद्वेगकरो नृणां पुराणार्थविदृक्वविद् ॥
समिदाज्यः तिलैश्चापि मन्त्रैरेभिः क्रमेणतु ।
'आयं गौ'रिति मन्त्रेण समिद्धोमः प्रशस्यते ३(‡) ।
'सोमस्ये'ति मन्त्रेण आज्य होमोबुधैः सह ४(+) ॥
तिलहोमो व्याहृतिभिः अष्टोत्तर सहस्रकम् ।
एवं होमश्च निर्व्वर्त्य कुर्य्यात्तस्याभिषेचनम् ॥
अग्नेः पूर्व्वोत्तरे देशे स्थापयेत कुम्भमव्रणम् ।
श्वेतेन वाससा चैव मृत्तिकां गुग्गुलं तथा ॥
गोरोचना सम्भवे च पञ्चभग्न-समिद्धुते ५(×) ।
मन्त्रै 'रथापोहिष्ठे'ति तिसृभिस्तन्तु रोगिणम् ६(०) ॥
'हिरण्यवर्णा' मिति च 'पावमानेन' चैव हि ७-८(S) ।
शन्नोवातोऽनुवाकेन शान्ति प्रथम मेवहि ९(SS) ॥

---

१ (*) 'दक्षिणोत्तरतः क्रमात्' इति चादर्श ग्रन्थान्तरस्थः पाठः ।

२ (†) धर्मज्ञो यज्ञविच्चैव' इति समीचीनः पाठः ।

३ (‡) 'आयं गौः पृश्निरक्रमी दसदन्मातरं पुरः पितरं च प्रयन्त्स्वः । शुक्ल यजुः ३।६ ।

४ (+) 'सोमस्य त्विषिरसि तवेव' मे त्विषिर्भूयात् ।
मृत्योः पाह्यो जोऽसि सहोऽस्य मृतमसि ॥ शुक्ल यजुः १०।१५ ।

५ (×) पञ्चभङ्गानपेक्षते इति चादर्श ग्रन्थान्तरे पाठः ।

६ (०) 'आपोहिष्ठा मयो भुव स्तान ऊर्जे दधातनः । महेरणाय चक्षसे' । 'योवः शिव-तमो रस स्तस्य भाजयतेह नः । उशतीरिव मातरः ।' 'तस्मा अरं' गमाम वो यस्य क्षयाय जिन्वथ । आपो जन यथा च नः' । शुक्ल यजुः ५०।५१।५२ अः ११ ।

७ (S) 'हिरण्यवर्णा'मित्यादि षोडश—ऋङ्मन्त्राः । श्रीसूक्ताख्यैः वेदस्य खिलभागोऽस्तीति । तन्मतान्तरे 'हिरण्यपाणि सविता' इत्यादि मन्त्राः' । शुक्ल यजुः ६३।२५

८ (S) पावमानेन—'पावमान्याख्यमन्त्र :' ।

९ (SS) 'शन्नोवातः पवताम्' इत्यादि । शुक्ल यजुः १५।८ । अथवा 'शन्नो इन्द्राग्नी'इत्यादि मन्त्रैः ।

कृत्वाभिषेचनं कुर्य्यात् शुक्लाम्बर धरस्य तु ।
आहुतानाञ्च सम्पातैः पाणिपादं च लेपयेत् ॥

## अत्र दाने मन्त्राः—

ततस्तां पूजयेद्धेनुं रोगी गन्धाक्षतादिभिः ।
'गावः सुरभय' इति मन्त्रेणापि च भक्तितः १(*) ॥
आचार्य्याय च तां दद्यात् प्राङ्मुखाय ह्युदङ्मुखः ।
मन्त्रेणानेन विधिवत् पूजितायां न संशयः ॥
आदित्यस्य सुता यास्तु देवाणां याश्च धेनवः ।
पितॄणामपि यक्षाणां गन्धर्व्वाणाञ्च सर्व्वशः ।
यक्षाणां गुह्यकाणान्तु वशिष्ठ-सुरभिस्तथा ।
एता स्तुष्टा मम क्षिप्रं धेनोरस्याः प्रदानतः ॥
रसचौर्य्येण मज्जातं वैरूप्यं पाणिपादयोः ।
तत् सर्व्वं नाशयन्त्यन्या धेनवः सर्व्वयोषिताः ॥

## इति दान मन्त्राः—

अनेन विधिना स्वर्ण-धेनुदानं करोति यः ।
पूर्व्वं कर्म्म—विपाकोत्थं सर्व्वं दुःखं प्रणश्यति ॥
दक्षिणां ब्राह्मणे दद्याद् यथा शक्त्याऽथ भक्तितः ।
ब्राह्मणान् भोजयेच्चापि बन्धूनपि च भोजयेत् ॥
स्वयं स्नात्वा च भुञ्जीत पूताहारैस्तु संयतः २(‡) ।
दानेनानेन नियतं पाद प्रस्वेदजं रुजम् ॥
जयन्ति रोगिणः कार्य्यं पादप्रस्वे दिना यतः ।
इति पाणिपाद प्रस्वेदघ्न-सुवर्णधेनुदानम् ॥

इति श्रीमद्विद्वज्जन कृपापात्रीभूतेन श्रीमन्नागदेवभट्टात्मजेन-श्रीमदनन्ताचार्य्येण विरचिते विधानपारिजाते समस्त धेनुदान विधानानि ॥

अनेन श्रीपरश्वेरः प्रीयताम् ॥

-*—

१ (*) 'गावः सुरभयोनित्यम्' इत्यादि प्रागुक्त गोदान प्रस्तावे गोमती विद्याख्य मन्त्रः ।

२ (‡) 'पुरुषी वैष्णवं पदमश्नुते' इत्यपि पाठोऽत्र सम्भवति ।

अथ 'गावः पृथ्वी सरस्वती'ति—गोदानानन्तरं (अतिदानात्परम्) क्रमप्राप्तस्य पृथ्वीदानस्य दशदान मध्ये निरूपितत्वात् सम्प्रति तृतीय-विद्यादानं प्रस्तूयते १(*)।

332. **तद् यथा विष्णुधर्म्मोत्तरे—**

विद्या कामदुघा धेनु र्विद्या चक्षुरनुत्तमम्।
विद्यादानात् परं दानं न भूतं न भविष्यति॥
विद्यावान् सर्व्वकामानां भाजनं पुरुषो भवेत्।
तस्माद् विद्यांहि ददतो सर्व्वं दत्तं भवेदिह॥
पराध्यापन श(स)क्तो हि पुरुषः पदमश्नुते २(†)।
तपस्तत् परमं तस्य ब्रह्मलोक-समं स्मृतम्।
सहस्रमेव धेनूनां शतं चानडुहां समम्।
दशानडुत्समं यानं दशयान समोहयः॥
दशवाजि समा-कन्या भूमिदानं ततोऽधिकम्॥

333. **तैत्तिरीय श्रुतिरपि—**

स्वाध्याय प्रवचने एवेति नाको मौद्गल्यः।
'तद्धि तप स्तद्धितपः ३(‡)।
अत्र प्रवचनं प्रकृष्टवचन मध्यापन-मित्यर्थः ३(‡)।

334. **नन्दि पुराणे—**

विद्याश्चतुर्दशप्रोक्ताः क्रमेण च यथा स्थिताः।
षडङ्गा श्चतुरो वेदा धर्म्मशास्त्रं पुरातनम्।
मीमांसा तर्कमिति च एता विद्या श्चतुर्दश ४(०)॥

---

१ (*) प्रागुक्तं चीण्याहुरतिदानानि गावः पृथ्वी सरस्वतीति। तेषु दानेषु सरस्वतीपदेन पुस्तकादिरूपंविद्यादानमुच्यते। अधुना परिशिष्टमद्दानं कथ्यते।

२ (†) तैत्तिरीयोपनिषदि—नवमेऽनुवाके। 'ऋतञ्चस्वाध्याय प्रवचने च' इत्यारभ्य 'तपः' इत्यन्तमुक्तम्। महर्षिं मनुना च विद्यादानं ब्रह्मदानत्वमुक्तम्, अत्र महर्षि मौद्गल्य—माह। 'ब्रह्मदो ब्रह्मसष्टित'मित्यनेन। ब्रह्मेति वेदोवा ग्रंथः।

३ (‡) अध्यापनेन तत्पूर्व्वकृतमध्ययनमपि प्राप्तम्। कुर्याद्वेदाऽध्ययनमित्यपि पाठः। तथाच योगदर्शनभाष्ये 'स्वाध्यायाद् योगमासीत योगात् स्वाध्यायमामनेत्। स्वाध्याय योगसम्पत्त्या परमात्मा प्रकाशते' इति व्यासः।

४ (०) 'इतिहास-पुराणं पञ्चमो वेदानां वेदः' इति श्रुतिः। तथाच 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्म्मशास्त्रं पुराणानि एता विद्याश्चतुर्दश'।
महर्षिं याज्ञवल्क्यश्च—"पुराणन्यायमीमांसा धर्म्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्म्मस्य च चतुर्दश"॥

पुरातनम्—पुराणशास्त्रम् १(*)!
आसामेवान्तरोत्पन्नाः परा विद्याः सहस्रशः।
आयुर्व्वेदः सस्यवेदः बहुभेदः प्रकीर्त्तितः॥

335. **सस्यवेदः—कृषिशास्त्रम्** २(†)।

'सर्व्वात्माचात्मविद्या च संसारभयनाशिनी।
सर्व्वदुःखान्तकरणी सर्व्वपापविनाशिनी'॥

**तथाच—**

'ययैको जीवति प्राणी कयापि किल कुत्रचित्।
सर्व्वत्र फलदा विद्या कुलानां शतमुद्धरेत्॥
शिल्पविद्यां नरो दत्वा यान्तिवै ब्रह्मणोऽन्तिकम् ३(‡)।
कलाविद्यां नरो दत्वा वैष्णवं लोकमाप्नुयात् ४(+)॥

---

१ (*) तत्राङ्गानि षट्, यथा—शिक्षा, कल्पः, व्याकरणम्, निरुक्तम्, छन्दः, ज्योतिषमिति। वेदाश्चत्वारः—ऋग्, यजुः, साम, अथर्व्वः। पूर्व्वमीमांसा, उत्तरमीमांसा च द्वे दर्शने। न्यायः द्वौ महर्षि गौतमकणादप्रणीतौ। आयुर्व्वेदः—महर्षि आत्रेयादिप्रणीतः, अत्र चरक सुश्रुतादितदन्तर्गतः। धनुर्व्वेदः—ब्रह्मा-शिव-वशिष्ठ-सदाशिव-विश्वामित्र विक्रमार्क-भोजराजादि-विरचितः। गान्धर्व्वशास्त्रम्—हनुमद्भरत-कल्लीश्वर-शुभंकरादि-विरचितम्। अर्थशास्त्रम्—मनु-पराशर-व्यास बृहस्पति भार्गव-वातव्याधि-बाहुदन्तीपुत्र-पिशुन-विशालाक्ष-कौटिल्य-कामन्दकादि-विरचितम्। अन्यत् सर्व्वं श्रीमन्मधुसूदन-सरस्वतीप्रणीते प्रस्थानभेदे विद्यते। आयुर्व्वेदस्य अन्ये च ग्रन्थाः महर्षि क्षारपाणि-भेल-जतुकर्ण-भरद्वाजादिभिर्विरचिताः सन्ति।

२ (†) कृषिशास्त्रम्—कृषिविषयकशास्त्रम्—महर्षि पराशरादिविरचितम्। पुराणेषु ज्योतिःशास्त्रे च कृषिपराशरे वा क्वचित् क्वचित् कृषितत्त्वं वर्णितमस्ति।

३ (‡) शिल्पविद्यामिति। तदेव कामशास्त्रे यशोधरीयतट्टीकोक्त चतुःषष्टि-कलाविद्यान्तर्गत-नानाविद्याः सन्ति। ताश्च शैवतन्त्रे चोक्ताः। अथ वास्तुविद्याप्यन्तर्गता। तत्र ग्रन्थाः: मयमतम्। शिल्परत्नम्। वास्तुविद्या। प्रासादमण्डनम्। मनुष्यालयचन्द्रिका। मूलस्तम्भशास्त्रम्। कुमारवास्तुशास्त्रम्। मानसारः। काश्यपीयशिल्पशास्त्रम्, विश्वकर्म्मप्रकाशादि। देवमूर्त्तिशास्त्रेतु,—लघु-पाराशरीयम्। बृहत् पाराशरीयम्। सारस्वत शिल्पशास्त्रम्, आगस्त्यशिल्पम्। मूर्त्तितत्त्वप्रकाशः। हयशीर्षपञ्चरात्रम्। नृत्यविषयेतु—नर्त्तननिर्णयः। संगीतमालिका, नर्त्तनचन्द्रिका। नर्त्तनविलासः। नीतौ, अर्थशास्त्रे वा बृहस्पतिसूत्रं, राजधर्म्मकौस्तुभः। मानसोल्लासः। युक्तिकल्पतरुः, नीतिवाक्यामृतम्, वैशम्पायननीति प्रभृति।

४ (+) कलाविद्याः—चतुःषष्टिकलाविद्याः शैवतन्त्रोक्ताः पूर्वोक्ताः।

कल्पमेकं न सन्देहः स्वर्गभोग-समन्वितः ।
शस्यविद्यां१(*)नरोदत्वा तृप्तिमान् कामसंयुतः ॥
प्रजापति पुरं गच्छेदू नरकात् तारयेत् पितृण् ।
आयुर्व्वेदं नरो दत्वा लोकान् प्राप्नोति निर्म्मलान् ।
अश्विनोर्दिव्य कामाद्यान् दिव्यमन्वन्तरं नरः ॥
तर्कविद्यां नरो दत्वा वारूणं लोकमाप्नुयात् २(†) ।
मीमांसान्तु बुधे दत्वा शास्त्रमिन्द्रपुरे वसेत् ३(‡) ॥
धर्म्मशास्त्रं नरो दत्वा स्वर्गलोके महीयते ।
दशमन्वन्तरान् मर्त्यः तारयेन्नरकात् पितृण् ।
वेदविद्यां नरो दत्वा स्वर्गे कल्पत्रयं वसेत् ४(+) ।
आत्मविद्यान्तु योदद्यात्तस्य संख्या न विद्यते ५(×) ॥
पुण्यस्य गदितं सम्यगपि वर्षशतायुतैः ।
एतावच्छक्यते वक्तुं यत् कल्पायुतमुत्तमम् ॥
सत्यलोकं वसेदू मर्त्त्यो यत्र ब्रह्मा वसेत् प्रभुः ।
पुराण विद्यादातार स्त्वनन्तफलभागिनः ६(S) ॥

---

१ (*) शस्यविद्या—कृषिपाराशराख्या. अपरा पुराणवर्णिता, सापि पूर्व्वोक्ता ।

२ (†) तर्कविद्या—सा द्विविधा, एका गौतमकणादादिभिः प्रणीता । अन्याच प्रभाकरादिभिः मीमांसकैः प्रणीता आन्विकी वा ।

३ (‡) मीमांसा च द्वे भवतः । पूर्व्वमीमांसा, महर्षि जैमिनिप्रणीता । उत्तरमीमांसा ब्रह्म-मीमांसाख्या महर्षि व्यास-विरचिता । धर्म्मप्रतिपादक शास्त्रम्—गौतमसूत्र, धर्म्मसूत्र,—गृह्यसूत्र,—मन्वादिप्रणीत—संहिताश्च ।

४ (+) वेदविद्याम्—चतुर्णां वेदानामध्यापनम् यथारीत्या । छान्दोग्ये सप्तमाध्याये सनत्कुमार-नारदसंवादे बह्वीनां प्राचीनविद्यानामुल्लेखो विद्यते । अत्र—स्वर्गलोकत्रयं इति हेमाद्रीयः पाठः ।

५ (×) आत्मविद्याम्—अध्यात्मविद्याम् । 'अध्यात्मविद्याविद्यानाम्' इति गीतायामध्यात्मविद्यायाः सर्व्वविद्यातः श्रेष्ठत्वमुक्तम् । सा च उपनिषदुक्ता । अत्र बहुविद्येति ।—इति न भवतीति हेमाद्रीयः पाठः ।

६ (S) पुराणमष्टादशसंख्यकं ब्रह्मपुराणम् । तत्र ब्राह्म-पाद्म-वैष्णवादि । उपपुराणानि-बहूनि—साम्बपुराण-पाराशरीय-पुराण-कालीपुराणादीनि । उपोपपुराणान्यनेकानि यथा—सौरपुराण-आदित्यपुराण-नन्दिकेश्वरपुराणादीनि । अपराणिबहूनि सन्ति उपोप-पुराणानि ।

## तथा च—

श्लोकं प्रहेलिकां गाथां अथान्यद्वा सुभाषितम् १(*) ।
दत्त्वा प्रीतिकरं याति लोकमप्सरसां सदा ॥
रामायणं भारतञ्च दत्त्वा स्वर्गे महीयते ।
पुराणं तर्कशास्त्रञ्च च्छन्दोऽलङ्कार-लक्षणम् २(†) ॥

## अन्यच्च ; तत्रैव—

'अप्येकं नीरुजीकृत्य जन्भून् यादृशस्तादृशः ।
आयुर्व्वेद प्रभावेन किन्नदत्तं भवेद्भुवि' ॥

---

१ (*) श्लोकं—श्लोकसम्बद्धपुस्तकम्। द्वात्रिंशदक्षरात्मकं पद्यं वा अथवा,—तथाच श्लोकः—'यथा च क्षुधिता बाला मातरं पर्य्युपासते। एवं सर्व्वाणि भूतानि अग्निहोत्र-मुपासते' इति छान्दोग्ये पञ्चम प्रपाठकान्ते। सामान्येतु श्लोकपदेनानुष्टुप् छन्दसा रचितपद्ये तद् व्यवहारः। अन्यत्र च 'श्लोकाव्यमूनि दशपर्व्वतराजपुत्र्याः' इति। 'क उत्तम श्लोक गुणानुवादात्' इति श्रीमद्भागवते। गाथातु— आर्या वैदिकीच। तथापि पद्यपद्युक्त विशाखपञ्चती—"तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यश" इति। प्रहेलिका—दुर्विज्ञानार्थः प्रश्नः। तच्च 'व्यक्तीकृत्यकमप्यर्थं स्वरूपार्थस्य गोपनात्। तत्र व्याख्यार्थ सम्बन्धः कथ्यते (या) सा प्रहेलिका' विदग्धमुखमण्डनादयः। सुभाषितम्,—सु सुष्ठु मनोहरं भाषितमुक्तम्, गद्यपद्यैरिति। यथा सूक्तावली, सूक्तिमुक्तावली, सुभाषितावली, सुभाषितरत्नसन्दोहः, सुभाषितरत्नभाण्डागारः, सदुक्ति कर्णामृतम्, एते आधुनिकाः। महाभारतम् —पञ्चमवेदः। 'मन्वान्यत् पुण्डरीकाक्षान्महाभारतकृद्भवेत्'। 'वेदानध्यापयामास महाभारतपञ्चमम्'। 'चक्रे भारतसंहिताम्'। 'चतुर्भ्यः सरहस्येभ्यो वेदेभ्योऽधिकं यदा। तदा प्रभृतिलोकेऽस्मिन्महाभारतमुच्यते'। एकलक्ष श्लोकात्मकं अष्टादशपर्व्वभिर्विभक्तं महाग्रन्थः। रामायणं—महर्षिणा श्रीमद् वाल्मीकिना प्रणीतम्, इदं प्राक्तनं भगवत् श्रीरामचरितादिपूतकथा पूर्णम्। तच्चतुर्विधम्—वाशिष्ठ रामायणम्, अध्यात्म रामायणम्। अद्भुत रामायणञ्च—'यावत्स्थास्यन्ति-गिरयः सरितश्च महीतले। तावद्रामायणकथा लोकेषु प्रचरिष्यति।' इति पुराणे।

२ (†) तत्र छन्दः द्विविधम्—वैदिकं गायत्र्यनुष्टुभादि। महर्षि पिङ्गलप्रणीतञ्च। दण्ड्याचार्य्य-विरचितं छन्दोविचितिरित्यादि। लौकिकं—छन्दोमञ्जरी, वृत्तरत्नाकराद्युक्तम्, तत् काव्यान्तर्गतञ्चेति। यद्वा 'छन्द' इति भाषा नाम। अलङ्कारः—उपमादिकम्। भूषणादिरपि। अलङ्क्रियतेऽनेनेति। अलङ्कारसूत्राणि, वाग्भटादिप्रणीतादि ; सरस्वतीकण्ठाभरम्। काव्यप्रकाशः, काव्यतत्त्वप्रकाशः, उज्ज्वलनीलमणिः, रसगङ्गाधरश्चेति। प्रागुक्तमन्यत्।

सत्य-वेद प्रसादेन सम्पन्नाः शस्यशालयः ।
किं न(नु) नामकृतं तत्र पुण्यं भवति शाश्वतम् ॥

मीमांसा शास्त्र माहात्म्यं बुद्ध्या वै वेदनिर्णयः १(*) ।
किं न नाम शुभं दातु र्यैश्च कर्म्म प्रवर्त्तनात् ।

आत्म विद्याच पौराणी धर्म्मशास्त्रात्मिका च या ।
एता विद्या त्रयी मुख्याः सर्व्वदान-क्रियाफलैः २(†) ।

धर्म्मशास्त्रं नरो बुद्ध्या यत् किञ्चिद्धर्म्ममाश्रयेत् ।
तस्य धर्म्म-शतगुणं धर्म्मशास्त्र प्रदस्य च ॥

पुराणाख्यान-विद्वांसः पितृदेवार्च्चने रताः ।
लोकान् सर्व्वान् सर्व्वकामान् यान्ति सर्व्वशुभोदयात् ॥

पुराण-विद्या-दातार स्त्वनन्त-फलभागिनः ।
आत्मविद्या प्रदातारो नरा धर्म्म-समाश्रयात् ॥

न पुनर्यान्ति निरयं प्रविशन्ति दुरत्ययम् ।
उत्तीर्णाः सर्व्वपापेभ्यः सपुत्र-पशु-बान्धवाः ।

मुच्यन्ते निरयैर्घोरै असंख्यै र्यातनात्मकैः ।
वेद-मीमांसिकां दत्वा शिवधर्म्मस्तथैव च ३(‡) ॥

---

१ (*) आयुर्व्वेद-मीमांसा-सत्यवेदानां तत्त्वं प्रागुक्तम् ।

२ (†) मीमांसायाः आत्मविद्यायाश्च वर्णनं पूर्व्वमुक्तम् । त्रयी, त्रयीवेदास्त्रयी । त्रयीऽवयवा यस्याः सा संहतिः । 'विद्यानामृग्यजुः साम्नां त्रयीधर्म्मं विदुर्बुधाः' । अन्येतु त्रयीना-वदन्ति—'त्रयीशब्दोवेदसामान्ये विवेद्याञ्च वर्त्तते । यथा द्विजशब्दो ब्राह्मणे विप्रमात्रे च ।

„ अत्रापि मार्कण्डेयेनोक्तम्—
"तस्मादयास्याम्यहं तात दृष्ट्वेमं दुःखसन्निधिम् ।
त्रयीधर्म्ममधर्म्माढ्यं किम्पाकफलसन्निभम्' ।
तस्मात्—त्रयीरागमनादिति । कथंतु त्रयीधर्म्मः अधर्म्माढ्यः स्यात् ।

३ (‡) शैवधर्म्मः जयाख्यः । शतरुद्री, शिवसूक्तं, रुद्रसूक्तञ्च चमकनमकान्वितम्, शिवोपनिषत्, जाबालोपनिषत् । शिवपुराणम्, वेदान्तदर्शनस्य शैवभाष्यम् । शैव दर्शनम् । तद्वृत्तिः, वार्त्तिकम्, प्रत्यभिज्ञाग्रन्थाः । शिवतत्त्वविवेकः । शिवसंहिता, शिवगीता, शिवरहस्यम् । शिवतत्त्वविलासः । शैवागमशास्त्राणीति ।

सप्तद्वीप-पृथिव्यान्तु नरो राजा भवेद्धि सः ।
पाणिनीयं निरुक्तादि वेदाङ्गानि स्मृतिस्तथा १(*) ।
दत्वा ज्ञानमवाप्नोति वेदान्तश्च विशेषतः ।
नित्यं देयानि राजेन्द्र गावः पृथ्वी सरस्वती २(†) ॥

—*—

## (१३५) अथासां दानविधिः ।

—*—

### 336. गारुडे,—

स्वयं शुचिः शुचीन् विप्रान् प्रातः स्नातो जितेन्द्रियः ।
दर्भानादाय पाणौतु पाठयेत्तांस्तथा विधान् ॥
अनध्यायान् परिहरन् नीचान श्रावयन्नपि ३(‡) ।
एवं विधानतो यस्तु ऋचमेकां प्रयच्छति ।

**तथा च—**

त्रिवित्पूर्णा च पृथिवी तेन दत्ता न संशयः ।
( त्रिवृत्तपूर्णा सम्पूर्णा तेन दत्ता मही भवेत् ) ॥
न तत् कल्पसहस्रेण गदितुं शक्यते फलम् ।
यद्वेद दाना दाप्नोति स्वप्नादपि महामते ॥
तावन्ति वेदगीतानि पुण्यवेद व्रतानि च ।
उपाध्यायस्य यो वृत्तिं दत्वाध्यापयते द्विजः ४(§) ।

---

१ (*) पाणिनीयम् महर्षि पाणिनि विरचितं व्याकरणम् । तद्भाष्यं पातञ्जलं तद्वार्त्तिक-वररुचिश्चेति त्रिमुनिव्याकरणम् । अष्टाध्यायीति प्रोच्यते । तथाच—'वृत्तिकारं वररुचिं भाष्यकारं पतञ्जलिम् । पाणिनिं सूत्रकारञ्चेति मुनित्रयं प्रणितं भुवनेऽस्मि । निरुक्तं वेदव्याख्यान—भूतम् । महर्षि यास्कमुनि विरचितम्, व्याख्यानस्वरूपम् । स्मृतिस्तु धर्मसंहिता । 'वेदान्तोनाम उपनिषत् प्रमाणम्' ब्रह्मविद्यापरिज्ञापकम् ।

२ (†) गावः, पृथ्वी, सरस्वती च, प्रागुक्तार्थेताः ।
गौन् वेदान्, धर्मार्थकामान् वा वेत्तारः तैः पूर्णा पृथ्वीति ।

३ (‡) 'नीचान्न श्रावयन्नपि' इति क्वचिद् ग्रन्थे पाठान्तरमस्ति ।

४ (§) 'दत्वाध्यापयते नरः' इति ग्रन्थान्तर धृतः पाठः । 'वेदोऽखिलोधर्ममूलम्' । 'वेदप्रणिहितोधर्मः स्तदधर्मस्तद्विपर्ययः' । 'नावेदविन्मनुतेतं बृहन्तम्' इति । उपाध्यायः— उपसलीये नियम- पूर्वकं यधीते वेदादीन् यस्मात् स्मात् सः ।

किञ्च दत्तं भवेत्तेन धर्म्मकामार्थ दर्शनम् १(*) ॥
छात्राणां भोजनाभ्यङ्गं वस्त्रभिक्षामथापि वा २(†) ।
दत्वा प्राप्नोति पुरुषः सर्व्वान् कामान् न संशयः ॥
विवेकं जीवितं दीर्घं धर्म्मकामार्थानाप्नुयात् ।
सर्व्वमेव भवेद्दत्तं छात्राणाम्भोजने कृते ॥

इति विद्यार्थिनां सामान्यदानविधानम् ।

—*—

## (१३६) अथ विद्या प्रतिमा दानादि ।

—*—

**तत्रैव—**

अथ दानविधिं वक्ष्ये रहस्यं परमं मतम् ।
यं विधाय नरो घोराग्निरया नोपसर्पति ॥
आम्नाय रूपाणि विधाय सम्यक्,
हेमानि पूर्वोदित लक्षणाणि ३(‡) ।
विशुद्धमाला मणिभूषितानि,
ऋगादिवेद क्रमतो निवेश्य ॥

पूर्वोदित—लक्षणानीत्यनेन महाभूतघटदाने प्रदर्शितं, तत्र विज्ञेयमित्युच्यते ।

वासांसि देयानि यथाक्रमेण,
पीतानि शुक्लान्यथ लोहितानि ।
नीलानि चैवं कुसुमानि दत्वा,
सम्पूज्य गन्धाक्षतधूपदीपैः ॥

---

१ (*) 'दर्शितम्' इति हेमाद्रि-धृतः पाठः ।

२ (†) 'छात्रा-विद्यार्थिनोऽन्तेवासिनः शिष्या ब्रह्मचारिण' इति । तेभ्यः ब्रह्मचारि—विद्यार्थिभ्यः निवास वासोऽन्नपुस्तक धनादीनि, यथाशक्ति देयानि ।
तथा च—'यस्य कुक्षिगतं चान्नं विद्याभ्यासेन जीर्यति । स तारयति दातारं दशपूर्व्वान् दशापरान्' इति श्रुतिः ।

३ (‡) 'हेमानीत्यत्र च' हेमानीति' पाठ पादकं कल्पान्तरेऽस्ति ।
यद्वा 'हेमानी'ति सुवर्णनिर्मितानि ।

आमोदि मोदकयुतं घृत पायसञ्च,
सक्षौद्रमन्नमथ पूपघृतं क्रमेण १(*) ।
तेभ्यो निवेद्य प्रथितं विधिवत् प्रणम्य,
सम्यक् प्रदक्षिण-विधिं विदधीत विद्वान् ॥
तेषां पूजाविधिः कार्य्यो गायत्र्या धीमताम्बरः ।
व्याहृत्य व्याहृतीः कुर्य्या दावाहन-विसर्ज्जने २(†) ॥
मन्त्रै रेतैस्ततः कुर्य्यादमीषा मनुमन्त्रणम् ३(‡) ।
तान् मन्त्रानाह,—ऋग्वेद-पद्म-पत्राक्ष रक्ष रक्ष क्षिपाशुभम् ॥

—*—

## (१३७) अथ वेद विद्या(प्रतिमा)दान विधानम् ।

—*—

शरणं त्वां प्रपन्नोऽस्मि देहि मे हितमद्भुतम् ।
यजुर्वेद नमस्तेऽस्तु लोकत्राण-परायण ! ॥
त्वत्प्रसादेन मे क्षेमाः निखिलाः सन्तु सन्ततम् ।
सामवेद महाबाहो त्वं हि साक्षादधोक्षजः ॥
प्रसीद सुमुखो भूत्वा कृपयाऽनु गृहाण माम् ।
अथर्व्वन् सर्व्वभूतानां त्वदायत्ते हिताहिते ॥
शान्तिं कुरुष्व देवेश ! पुष्टिमिष्टां प्रयच्छ मे ।
इति सम्प्रार्थ्य देवेशान् विप्रेभ्यः प्रतिपादयेत् ॥
प्रदद्यादेकमेकस्मिन् सुवर्णत्रिपलान्वितम् ।
दद्यादेकपलोपेत-मेकैकमिह दुर्व्वलः ४(०) ॥
अथ स्वशक्तितो वापि दानमेषां विधीयते ।
एतदेव प्रमाणं स्यां त्तेषां मूर्त्तिविनिर्म्मितौ ॥

---

१ (*) 'घृ-पघृत' मित्यत्र 'पूप' पाठोऽपिस्यात् ।

२ (†) व्याहृतिभिः कुर्य्यादावाहन-विसर्ज्जने ।

३ (‡) मन्त्रैरेतैरिति 'ऋग्वेद' इत्यादि मन्त्रै रित्यर्थः ॥

,, 'हराशुभम्' इति भिन्नः पाठोऽस्ति ।

४ (०) 'दुर्वलः' इत्यत्र दुर्लभमिति पाठान्तरमस्ति । अत्र दुर्व्वलः एतत् स्थले निःस्व इति शेषम् दुर्लभमितितु एकस्य सर्वस्यवा वेदस्य दानं भवितुंदुर्लभमिति भावः ।

अनधीत-वतो वेदान् वेददानविधिस्त्वियम्।
सदाध्यन युक्तस्य शिष्याध्यापक मेवहि॥
वेदाननधीतो—वेदाध्ययन वर्ज्जितस्य पुंसः।
अज्ञानामप्यध्यन विधि र्वेदाध्यन विधिना व्याख्यातः!

इति वेददानविधानम्॥

—*—

## (१३८) अथ स्मृति दानम्।

—*—

337. **नन्दिपुराणे—**

श्रुतिः स्मृतिश्च विप्राणां चक्षुषी द्वे प्रकीर्त्तिते।
काण तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्त्तितः॥
स्मृतयो धर्म्मशास्त्राणि १(*)।
तासां प्रणेतार ऊनविंशति-महर्षयो-याज्ञवल्क्येनोक्ताः।
मन्वत्रि विष्णुहारीत-याज्ञवल्क्योशनाङ्गिरः-
यमापस्तम्ब-सम्बर्त्ताः कात्यायन-वृहस्पती।
पराशर-व्यासशङ्खलिखिता दक्षगोतमौ।
शातातपो वशिष्ठश्च धर्म्मशास्त्र-प्रयोजकाः॥

338. **मनुना अष्टादशोक्ताः।**

—*—

**तथाच—**

विष्णुः पराशरो दक्ष-सम्बर्त्त-व्यास-हारीताः।
शातातपो वसिष्ठश्च यमापस्तम्बगोतमाः॥

---

१ (*) 'स्मृतिस्तु धर्म्मसंहिता'। स्मर्य्यते धर्म्माधर्म्मौ यया सा स्मृतिः। केचित्मन्यते श्रौत-गृह्य-धर्म्मसूत्राणामपि प्राचीन स्मृतित्वम्। मन्वादृदृष्टाणवीणा वेदार्थस्मरणपूर्व्वकत्वेन विधिनिषेधमुखेनपरिरचितत्वं स्मृतित्वम्। तदनुयायि-धर्म्मशास्त्र-निबन्धानामपि-स्मृतित्वम्। नव्यास्तु-मन्वाद्यन्यतमरचितत्वं स्मृतित्वमित्याहुः। एतन्मते भारत-रामायण-पुराणाना-मितिहासेऽन्तर्गतत्वमिति, परमेषामपि स्मृतित्वं भवेत्। श्रुति-स्मृति-पुराणानामिति पृथगुक्तौऽपि दृश्यते।

देवल शङ्ख-लिखितो भारद्वाज-शतोत्रयः १(*।
शौनको याज्ञवल्क्यश्च दशाष्ट स्मृतिकारकाः ॥

तथा—

भार्गवी नारदीयाच बार्हस्पत्याङ्गिरस्यपि २(†) ।
स्वायम्भूवस्य शास्त्रस्य चतस्रः संहिता मताः ॥

339. **अङ्गिरा—**

जावालि र्नाचिकेतश्च स्कन्दोलौगाक्षि काश्यपौ ।
व्यासः सनत्कुमारश्च शतद्रु र्जनक स्तथा ॥
व्याघ्रः कात्यायनश्चैव जातुकर्णः कपिञ्जलः ।
बौधायनः कणादश्च विश्वामित्र स्तथैवच ॥
उपस्मृतय इत्येताः प्रवदन्ति मनीषिणः ३(‡) ।

340. **यमः—**

एतैर्यानि प्रणीतानि धर्म्मशास्त्राणि वैपुरा ।
तान्येवाति प्रमाणानि न हन्तव्यानि हेतुभिः ४(+) ॥
स्मृतयो धर्म्ममूलंहि धर्म्मः सर्व्वार्थ-साधनम् ।
अतः स्मृतिषु दत्तासु सर्व्वदान-फलम्भवेत् ॥
एकमेव समुद्धृत्य प्राणिनं दुःखसागरात् ।
अनन्त फलमाप्नोति किं पुनर्ज्ञानदो बहून् ॥
किमतः स हिधर्म्मोऽस्ति किम्वा ज्ञानन्तथाविधम् ।
अन्यद्वा तत् किमस्तीह यन्न स्मृतिषु दृश्यते ५(×) ॥

---

१ (*) 'सप्तर्षय:' इत्य' पाठोऽस्ति। सप्तर्षि-स्मृतिस्तु भारद्वाजस्मृतिवत्प्रचलति। याज्ञवल्क्यः प्रागपि निगदितः।

२ (†) भार्गवीया—मनुप्रोक्ता संहिता। स्वायम्भुवमनुना प्रोक्ता संहिता प्राग्भृग्वादिप्रोक्तास्ताश्च सर्व्वाःचतुर्विधाः।

३ (‡) उपस्मृतयः—यथा पुराणोपपुराणोपोपपुराणानि बहुविधानि, तथा स्मृतयः। उपस्मृतयः। उपोपस्मृतयः। परमेतासामनेक विधत्वेऽपि सर्व्वासां लक्ष्यमेकमेव धर्म्मः।

४ (+) हेतुभिः—शुष्कतर्कैः वेदस्मृतिविरुद्ध तर्कैर्वा, नहन्तव्यानि नैव खण्डनीयानि।

५ (×) धर्म्मविषये यद् एतासु स्मृतिषु न दृश्यते तद् अन्यत्र किमस्तीति ?

" यथा दाने, स्वयंकुर्य्यात्। यथा पुत्रादिद्वारा तीर्थादौ। अध्यापनमध्ययनमपि गुरु-शिष्यपरम्परया वा बोधनम्। अनया रीत्या ज्ञान—प्राप्त्यर्थी: प्रचारोऽपि, भवति।

अतस्तासु प्रदत्तासु ज्ञानवानभिजायते ।

पारं प्राप्य च शास्त्राणां ब्रह्मलोके महीयते ॥

दानञ्च—साक्षादध्यापनं परम्परया पुस्तक दानं वा । अनुक्त—दक्षिणमपि सदक्षिणं देयम् ।

इति स्मृतिदानम् ॥

341. **तथाहि, भविष्ये—**

अदत्त-दक्षिणादानं व्रतञ्चैव नृपोत्तम ! ।

विफलन्तद् विजानीया द्भस्मनीव हुतं हविः ॥

सौवर्णं परमं दानं सुवर्णं दक्षिणा परा ।

सर्व्वेषाञ्चैव दानानां सुवर्णं दक्षिणेष्यते ॥

देयद्रव्य-तृतीयांशं दक्षिणां परिकल्पयेत् ।

अनुक्त दक्षिणे दानं दशांशं वापि शक्ति तः ॥

सुवर्णं रजतन्ताम्रं तण्डुला धान्य मेवच ।

नित्यश्राद्धं देवपूजा सर्व्वमेतद दक्षिणम् १(*) ॥

नित्यं देयानि राजेन्द्र ! गावः पृथ्वी सरस्वती ।

दातारं तारयन्त्येते जप-वापन-दोहणैः २(†) ॥

342. **वाराहेच—**

विद्यादानविधिं वक्ष्ये यथा तत्त्वेन ते पुनः ।

दत्तेन तत् फलन्तस्य दातुरस्य समासतः ॥

उक्ते समारभेत् काले निम्नोन्नत-विवर्जिते ।

सु समे भूप्रदेशेच गोमयेनोपलेपयेत् ॥

पुष्पप्रकर-सम्पन्ने गीतवाद्य समाकुले ।

कमलं चतुरस्रम्वा चन्दने नैव कारयेत् ३(‡) ॥

पुस्तकं तत्र संस्थाप्य गन्धपुष्पैः प्रपूजयेत् ।

सौवर्ण-लेखनी कार्य्या मसीभाण्डञ्च रौप्यकम् ४(+) ॥

---

१ (*) एतत् सर्वं सदक्षिणम् इति हेमाद्रौधृते ।

२ (†) अत्र कश्चिदादर्शग्रन्थे 'जपवाहन-दोहनै'रित्यपपाठ उपलभ्यते ।

३ (‡) अत्रतु 'वेदिकांचतुरस्राम्वा' इति पाठान्तरधृतः पाठः ।

४ (+) 'मेला मसी मलं मषा ग्रन्थाम्लमिश्रयोः' इति त्रिकाण्ड शेषे । 'मलिनाम्बु मषी मसी' इति हैमेच । 'लेखकोलिपिकरस्तेन आदधरलक-बसुकौ' इति व्याडिः । अत्र भ पत्रको सुधाम् ।

जयशब्दं समुद्बोध्य आरभेल्लेखकः सुधीः १(*)।
विनीतश्चाप्रमत्तश्च शास्त्र-निष्पत्तिमानयेत्॥
ब्राह्मणस्य सुवृत्तस्य वाचकस्य विजल्पतः।
अनेन विधिना दत्वा दातु रत्नस्य यत् फलम् २(†)॥
तत् फलं कोटिगुणितं पुस्तकैक प्रदानतः ३(‡)।
यत् पुण्यं तीर्थयातॄणां यत्पुण्यं यज्वनां नृणाम्॥
तत् पुण्यं कोटिगुणितं विद्यादाने न संशयः।
कपिलानां सहस्रेण सम्यग्दत्तेन यत् फलम्॥
तत् फलं समवाप्नोति पुस्तकैक प्रदानतः।
शोधयित्वा तु तच्छास्त्रं देयं वै मोक्षमिच्छता॥
लेखके दक्षिणान्दद्याद् वस्त्रालङ्कार भूषणैः।
शुक्लञ्च वस्त्रयुग्मञ्च दद्या च्छास्त्र समन्वितम् ४(S)॥
अत्र समन्वितं—सम्पूर्ण मित्यर्थः।
लिखापयित्वा तच्छास्त्रं देयं गुणवते सदा।
तपस्विने धर्म्मरते परिपालन—तत् परे॥
वस्त्र युग्मेन सम्वीतं पुस्तकं प्रतिपादयेत्।
वाचकं पूजयेच्चैव वस्त्रालङ्कार भूषणैः॥
क्षम्यतामिति वक्तव्यं लेखकः सुसमाहितः ५(+)
अनेन च विधानेन विद्या दानात् फलं लभेत्॥
शुभेऽह्नि शुभनक्षत्रे मण्डपं रचयेद्बुधः।

तत् कृत्यमाह।

343. **वह्निपुराणे—**

शुभेऽह्नि शुभनक्षत्रे मण्डपं शुभवेदिकाम्।
चतुरस्रं वितानञ्च कृत्वा तत्रोप लेपयेत् ६(×)॥

---

१ (*) 'जयशब्दंसमुद्बोध्य' इति आदर्शान्तरधृतः पाठः।
२ (†) 'दुर्भिक्षे समनुप्राप्ते……फलम्' इति आदर्शपुस्तकान्तर धृतः पाठः।
३ (‡) 'पुस्तकैक प्रदायक'इति ,, ,, ,,।
४ (S) 'शास्त्रं समाहितम्' ,, ,, ,,।
५ (+) 'ब्राह्मणः सुसमाहितः' ,, ,, ,,।
६ (×) ज्योतिः शास्त्रोक्त शुभ मुहूर्ते मुहूर्तचिन्तामण्याद्युक्ते काले तद् विधेयम्। तथा च श्रुतौ
'गर्भिताज्ञ जायते कालो यत्र तिष्ठन्ति देवताः।
वल्मीकाद्युत्थितं काले ना काले सप्त कोटयः'। इति

तत्र न्यस्यासनं दिव्यं दिव्य गन्धादि वासितम् ।
संस्थाप्य पुस्तकन्तत्र धर्म्मशास्त्रस्य धीमतः ॥
ब्राह्मणान् वेदसम्पूर्णान् दानलक्षण पारगान् १(*) ।
आनयेच सुसंपूज्य वस्त्रालङ्कार भूषणैः ॥
घृत धेन्वा युतं रत्नैर्दद्याद् गुणवते ततः ।
अनेनैव विधानेन ब्राह्मणान् शीलसंयुतान् २(†) ॥
अध्याप्य ब्रह्म शास्त्रादि ब्रह्मसायुज्यतामियात् ३(‡) ।
स्वस्य—सामर्थ्येतु ४(+) ।
धनैर्व्वा विपुलैर्दत्ते गुरुं कृत्वा सुतर्पितम् ।
अध्यापयेच्छुभां शिष्यान् अभिजातान् सुमेधसः ॥
एवं विद्या प्रदानन्तु सर्व्वदानोत्तमोत्तमम् ।
सर्व्वदा सर्व्ववर्णानां नरकात् प्लवमुत्तमम् ५(ऽ) ॥

इति विद्यादानम् ।

—*—

## (१३६) अथ पुराण दानानि प्रसङ्गादुच्यन्ते ।

—*—

### 344. तत् पुराण लक्षणं सौर पुराणे—

'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥
अत्र नोप पुराणानां खिलत्वा लक्षणं स्मृतम् ६(०) ।
ब्राह्मं पुराणं तत्राद्यं संहिताभ्यां विभूषितम् ॥

---

१ (*) 'वेद सम्पन्नान्' इति ग्रन्थान्तरे पाठः ।
२ (†) पूर्व्वोक्त प्रथाल्या । शौचाचार विद्याविनययुतान् ब्राह्मणाना इय,इति ।
३ (‡) 'धर्म्मशास्त्रादि' इति ग्रन्थान्तर धृतः पाठः ।
४ (+) स्वस्येति यस्येति च पाठः समाव्यते । विभववैपुल्ये सति तद्दान पूर्व्वकं विद्यां गृह्णीयात् ।
५ (ऽ) 'यत्पुण्यं सर्व्वतीर्थानां विधिवद्यज्ञनात्तथा ।
तत्पुण्यं समवाप्नोति विधिवच्छास्त्रदः पुमान्' ॥ इति वशिष्ठः ।
६ (०) अष्टादश-महापुराणं संख्यया क्रमेणवक्ति ब्राह्ममित्यादिना ।
„ 'यत्रनोप' इत्यत्र 'यत्रतोऽपि पुराणानाम्' इत्यं पाठान्तरमस्ति । पूर्व्वं सात्त्विकसुखं सम्प्रति विषयान्तर प्रसङ्गात् पुनः पुराणं इत्थं उच्यते । खिलत्वादिति,— परिशिष्टत्वादित्यर्थः ।

श्लोकानां दशसाहस्रं नानापुण्य कथा युतम् ।
पाद्मं द्वितीयं कथितं तृतीयं वैष्णवं स्मृतम् ॥
चतुर्थं वायुना प्रोक्तं रायवीयमिति स्मृतम् ।
ततो भागद्वयं प्रोक्तं भागत्रय-विभूषितम् ।
चतुर्भिः पर्व्वभिः प्रोक्तं भविष्यत्तदनन्तरम् ॥
मार्कण्डेयं अथाग्नेयं नारदीयमतःपरम् ।
दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम् ॥
भागद्वयेन संयुक्तं ततो वाराहमुत्तमम् ।
संयुक्तमष्टभिः खण्डैः स्कान्दञ्चैव सविस्तरम् ॥
ततस्तु वामनं नाम भागद्वय-विराजितम् ।
मात्स्यञ्च गारुडं प्रोक्तं ब्रह्माण्डञ्च ततःपरम् ॥
भागद्वयेन कथितं ब्रह्माण्डमिति संज्ञितम् ।

### 345. मात्स्येच—१(*) ।

पुराणानि दशाष्टौच साम्प्रतं तदिहोच्यते ।
नामतस्तानि वक्ष्यामि शृणुध्वं ऋषिसत्तमाः ! ॥
ब्रह्मणाभिहितं पूर्व्वं यावन्मात्रं मरीचये ।
ब्राह्मन्तद्दश साहस्रं पुराणं परिकीर्त्यते ॥
लिखित्वा तच्च योदद्यात् जलधेनु समन्वितम् २(†) ।
वैशाख्यां पौर्णमास्यान्तु ब्रह्मलोके महीयते ॥
एतदेव यदा पद्म मभूद्धैरन्मयञ्जगत् ।
तद्वृत्तान्ताश्रयं तद्वत् पाद्ममित्युच्यते बुधैः ॥
पाद्मन्तत् पञ्चपञ्चाशत् साहस्रमिह पठ्यते ।
तत् पुराणञ्च योदद्यात् सुवर्णकमलान्वितम् ॥
ज्यैष्ठे मासि तिलैर्युक्तं सोऽश्वमेध-फलं लभेत् ।
वाराह कल्प वृत्तान्तं अधिकृत्य पराशरः ॥
यत्राह धर्म्मानखिलान् तद् युक्तं वैष्णवं विदुः ।

---

१ (*) प्रकारान्तरेण पुराणान्तरलक्षणमुच्यते मात्स्य इति । मत्स्यपुराणेऽपीतिप्रोक्तम् ।

२ (†) अत्र धेनुलक्षणं जलपात्र पूर्व्वं धेनुदान प्रकरणे प्रोक्तम् ।

तदाषाढ़े च योदद्याद् घृतधेनु-समन्वितम्।
पौर्णमास्यां सुपूतात्मा स पदं याति वारुणम् १(*)॥
त्रयोविंशति साहस्रं तत् पुराणं विधुर्वुधाः।
श्वेतकल्पप्रसङ्गेन धर्म्मान् वायुरिहाब्रवीत॥
यत्रतद् वायवीयं स्याद् रुद्रमाहात्म्य-संयुतम्।
चतुर्व्विंश-सहस्राणि पुराणं तदिहोच्यते॥
श्रावण्यां श्रावणे मासि गुड़धेनु-समन्वितम्।
यो दद्याद्धिसंयुक्तं ब्राह्मणाय कुटुम्बिने॥
शिवलोके स पूतात्मा कल्पमेकं वसेन्नरः।
यत्राधिकृत्य गायत्रीं वर्ण्यते धर्म्म-विस्तरः॥
वृत्रासुरवधोपेतं तद्भागवतमुच्यते २(†)।
सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः॥
तद्वृत्तान्तोद्भवं लोके तद्भागवतमुच्यते।
लिखित्वा तच्च योदद्याद्धेम सिंह समन्वितम्॥
पौर्णमास्यां प्रोष्ठपद्यां स याति परमं पदम्।

## तद्दानविधिस्तु—

शोधयित्वा भागवतं योदद्यात् श्रद्धयान्वितम्।
क्षौमवस्त्रेण सम्वीतं व्यासपीठोपरिस्थितम्॥
ब्राह्मणाय विशुद्धाय विष्णुभक्ति-पराय च।
वस्त्रालङ्कारसहितं उपवीतसमन्वितम्॥
स्वर्च्चितं स्वर्च्चितायैव- गन्धपुष्पादिधूपकैः।
दद्यात् कृष्णपरो धीमान् जन्मबन्धापनुत्तये॥
भागवत नमस्तेऽस्तु साक्षात् कृष्णशरीरक!।
शरणं त्वां प्रपन्नोऽस्मि रक्ष मां दुःखसागरात॥

१ (*) 'विशुद्धात्मा' पूतात्मा, पवित्रमनाः श्रद्धाभक्ति युतः।

२ (†) श्लोकोऽयं श्रीधरस्वामिकृत टीकायामेवं, श्रीमद्देवी भागवतीय टीका भूमिकायामप्यस्ति। एतद्विषये श्रीमद् देवी भागवतीय टीका मुखबन्धे पुष्कलं श्रीमन्नीलकण्ठ मैव वर्णितम्। तेनात्र द्वयोर्भागवतयोर्महत्त्वं सम्यग्विचारितम्। 'पुराण पठन यत्र तत्र सन्निहितो हरिः'।

यथा श्रेष्ठं पुराणेषु त्वं वै भागवतोत्तम ! ।
तथा मां विमलं कुर्य्याद्दीनञ्च शरणागतम् १(*) ॥
इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् ।
इदं श्रीविष्णुभक्ताय प्रीत्यर्थं चक्रपाणिनः ॥
ब्रह्मन् त्वं सर्व्वधर्म्मज्ञ वासुदेवपरायण ! ।
श्रीभागवत दानेन त्राहि मां शरणागतम् २(†) ॥
एवं भागवतं दत्त्वा वैष्णवान् परिपूज्य च ।
आशिषं तत आदाय ब्राह्मणान् भोजयेत्ततः ॥
एवं कृत्वा महाभागो विष्णु सायुज्यमाप्नुयात् ।
अष्टादश सहस्राणि तत् पुराणं प्रकीर्त्तितम् ॥
सव्याख्यानं विशेषेण दत्त्वा विष्ण्वालयं व्रजेत् ।
यत्राह नारदो धर्म्मान् बृहत् कल्पाश्रितांस्त्विह ॥
पञ्चविंश सहस्राणि नारदीयन्तदुच्यते ।
तदिदं पञ्चदश्यान्तु यो दद्याद्धेम संयुतम् ॥
उत्तमां सिद्धिमाप्नोति पुनरावृत्ति-दुर्लभाम् ।
यत्राधिकृत्य शकुनीन् धर्म्माधर्म्म-विचारणम् ॥
पुराणं नवसाहस्रं मार्कण्डेयमिहोच्यते ।
परिलिख्य च योदद्यात सौवर्ण-कटिसंयुतम् ॥ ३(‡)

---

१ (*) अत्र 'शरणागतं' इति आदर्शग्रन्थान्तरे दृश्यते। भगवती भगवत्या वा माहात्म्य पूर्णं यत्रागतं महापुराणम् ।

२ (†) अत्र श्रीभागवतपदेन चक्रपाणिपदेनच श्रीमद्भागवतं बोध्यम् । नापि श्रीमद्देवी-भागवतम् । 'यस्मात् पुरा ह्यनतीदं पुराणन्तेन कीर्त्तितम्' । इति भविष्ये ।
शकुनीनाह, तत्रैव,—'पिङ्गाक्षश्च विरोधश्च सुपुत्रः सुमुखस्तथा ।
द्रोणपुत्राः खग श्रेष्ठाः तत्त्वज्ञाः शास्त्रचिन्तकाः' ॥
'मेधाय कथयामास सुरथाय समाधये ।
सा कथा कथिता पश्चाद् मार्कण्डेयेन भागुरी ॥
तां कथां कथयामासुः पक्षिणो जैमिनिं प्रति ।
यमेनैव विधानेन कथाः षड्विधिकाः क्रमात्' ॥ अन्य देवीमाहात्म्य टीकासु ।
'इदं भागवतं नाम पुराणं ब्रह्म सम्मितम्' । 'तत्तु भागवतं प्रोक्तं मतुदेवी पुराणकम्' ।
'भवसागरात्' इति श्लोकः अधिक एवदृश्यते ।

३ (‡) अत्र कटीतिपाठे सुवर्ण-निर्मित-धारणोबोध्यः ।

अत्र कटिः—कटिसूत्रम् । करीति क्वचित् ।
कार्त्तिक्यां पौण्डरीकस्य यज्ञस्य फलभाग्भवेत् ।
यत्तदीशान-कल्पस्य वृत्तान्तमधिकृत्यच ।
वशिष्ठायाग्निना प्रोक्त माग्नेयं तत्प्रचक्षते ॥
लिखापयित्वा योदद्याद्धेमपद्म समन्वितम् १(*) ।
मार्गशीर्षे विधानेन तिलधेन्वान्वितं तथा ॥
एतत् षोड़श साहस्रं सर्व्वक्रतु फलप्रदम् ।
यत्राधिकृत्य माहात्म्य मादित्य स्य चतुर्म्मुख ! ॥
अघोर कल्पवृत्तान्त प्रसङ्गेन जगत्पतिः ।
नवमे कथयामास भूतग्रामस्य लक्षणम् ॥
चतुर्द्दश सहस्राणि तथा पञ्च शतानिच ।
भविष्यच्चरितप्रायं भविष्यत्तदिहोच्यते ॥
तत् पौषे मासि योदद्यात् पौर्णमास्यां विमत्सरः ।
गुड़कुम्भ समायुक्त मग्निष्टोमफलं लभेत ।
रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्यच २(†) ॥
सावर्णिना नारदाय कृष्ण-माहात्म्य-संयुतम् ।
यत्र ब्रह्म-वराहस्य चरितं वर्ण्यते मुहुः ॥
तदष्टादश साहस्रं ब्रह्मवैवर्त्त मुच्यते ।
पुराणं ब्रह्मवैवर्त्तं योदद्यान्माघमासिच ॥
पौर्णमास्यां स भगवन् ब्रह्मलोके महीयते ।
यत्राग्नि-लिङ्गमध्यस्थ प्राह देवोमहेश्वरः ॥
धर्म्मार्थकाममोक्षार्थं माग्नेय-मधिकृत्यच ।
कल्पं तल्लैङ्गमित्युक्तं पुराणं ब्रह्मणा स्वयम् ॥
तदेकादश साहस्रं फाल्गुन्यां यः प्रयच्छति ।
तिलधेनुसमायुक्तं स याति शिव सात्मताम् ॥
महावराहस्य पुर्णं माहात्म्यमधिकृत्य च ।
मानवस्य प्रसङ्गेन कल्पस्य मुनिसत्तम ! ॥

---

१ (*) 'हेमघट समन्वित'मिति हेमाद्रीयः पाठः ।

२ (†) पक्षे, रथन्तरं नाम साम; वेदस्य शाखा ज्ञेयः। [illegible] शाखाः सन्ति। यथा रथन्तरं साम्नी नाम इति, [illegible] ।

चतुर्विंश-सहस्राणि तत् पुराणमिहोच्यते ।
विष्णुनाऽभिहितं क्षौण्ये तद्वाराहमिहोच्यते ॥
काञ्चनं गरूड़ं कृत्वा तिलधेनु-समन्वितम् ।
पौर्णमास्यां मधौ दत्वा ब्राह्मणाय कुटुम्बिने १(*) ॥
वराहस्य प्रसादेन पदमाप्नोति वैष्णवम् २(†) ।
यत्र माहेश्वरान् धर्म्मान् अधिकृत्य च षण्मुखम् ३(‡) ॥
कल्पे तत् पुरुषे वृत्ते चरितैरुपवृंहितम् ।
कान्दं नाम पुराणन्तद् एकाशीतिर्निगद्यते ॥
सहस्राणि शतञ्चैकमिति मर्त्तेषु पठ्यते ।
परिलिख्य च योदद्याद्धेमशूल-समन्वितम् ।
शैवञ्च पदमाप्नोति मकरोपगमे रवेः ।
त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्म्मुखः ॥
त्रिवर्गमभ्यधा त्तत्र वामनं परिकीर्त्तितम् ।
पुराणं दश साहस्रं कूर्म्मकल्पानुगं शिवम् ॥
यच्छरद्विषुवे दद्याद् वैष्णवं यात्य सौ पदम् ।
यत्र धर्म्मार्थकामानां मोक्षस्य च रसातले ॥
माहात्म्यं कथयामास कूर्म्मरूपीं जनार्द्दनः ।
इन्द्रद्युम्न प्रसङ्गेन ऋषीणां शक्रसन्निधौ ॥
सप्तदश सहस्राणि लक्ष्मी-कल्पानुसङ्गिकम् ।
योददद्यादयने कुम्भं हेमकूम्भंसमन्वितम् ॥
गो सहस्र प्रदानस्य स फलं प्राप्नुयान्नरः ।
श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्द्दनः ॥
मत्स्य-रूपी च मनवे नरसिंहोपवर्णनम् ।
अधिकृत्या ब्रवीत् सप्तकल्पवृत्तं मुनिव्रताः ॥
तन्माहात्म्यमिति जानीध्वं सहस्राणि चतुर्द्दश ।
विष्णवे हेमवत्सेन धेन्वाचैव समन्वितम् ॥

---

१ (*) 'विष्णुलोके महीयते' इति आदर्शान्तरधृतः पाठः ।

२ (†) 'प्रसादेन' इत्यत्र 'प्रसङ्गेन' इति हेमाद्रि-धृतः पाठः ।

३ (‡) 'षण्मुखः' इत्यत्र 'पराक्रम' इति आदर्शान्तरधृतः पाठः ।

योदद्यात् पृथिवी तेन दत्ता भवति चाखिला ।
यदा च गारूड़े कल्पे विश्वाण्डाद् गरूड़ोद्भवम् ॥
अधिकृत्याब्रवीत् कृष्णो गारूड़ं तदिहोच्यते ।
तदष्टादश चैकञ्च सहस्राणीह पठ्यते ॥
सौवर्णं हेम मिथुन-संयुक्तं विष्णवे नरः ।
यो ददाति परां सिद्धि माप्नोति शिवसन्निधिम् १(*) ॥
इति महापुराणानां वृत्तमुक्तम् ।

—*—

## (१४०) अथोपपुराणानि ।

—*—

316. **वामणे—**

अखिलान्युपपुराणानि यानि प्रोक्तानि सूरिभिः ।
आद्यं सनत्कुमारोक्तं नारसिंह मतःपरम् ॥
तृतीयं नारदं प्रोक्तं कुमारेणतु भाषितम् २(†) ।
दुर्व्वाससोक्तमाश्चर्य्यं नारदोक्तमतःपरम् ॥
कापिलं मानवञ्चैव तथैवोशनसेरितम् ३(‡) ।
ब्रह्माण्डं वारुणञ्चाथ कालिकाह्वयमेवच ।
माहेश्वरं तथा शाम्बं सौरं सर्व्वार्थसञ्चयम ॥
पराशरोक्तं प्रवरं तथा भागवतद्वयम् ।
इदमष्टादशं प्रोक्तं पुराणं कौर्म्मसंज्ञितम ॥
चतुर्द्धा संस्थितं पुण्यं संहितानां प्रभेदतः ।

317. **मात्स्ये दानोद्यतेच—**

सर्व्वेष्वपि पुराणेषु सात्त्विकादि फलं स्मृतम ४(०) ।
सात्त्विकेषु पुराणेषु माहात्म्यमधिकं हरेः ।

---

१ (*) 'प्राप्नोत्यचाचमन्ततिम्' इति पाठान्तरभूत: पाठः ।

२ (†) 'तृतीयं नारदोदिष्टं कुमारेणतु-भाषितम' इति पाठान्तरभूत: पाठः ।

३ (‡) प्रस्थानभेदे श्रीमन्मधुसूदनसरस्वत्या-मामिनुपपुराणानां नामोल्लेखः कृतः । तथ्यानेन प्रभेदोद्भवात् । प्रस्थानभेदस्य मौलवचनस्य 'चयामाल्यं याग' इति प्रौकव्यख्याभूत: ।

४ (०) 'तथिवरेण यत् फलम्' इति हेमाद्रिधृत: पाठः ।

राजसेषु च माहात्म्यमधिकं ब्रह्मणोविदुः ॥
तद्वदग्नेश्च माहात्म्यन्तामसेषु शिवस्य च ।
संकीर्णेषु सरस्वत्याः पितृणाञ्च निगद्यते ॥
लिखित्वोपपुराणानि सहिरण्यानि पर्व्वणि ।
ब्राह्मणेभ्यः प्रयच्छेत स विद्यापारगो भवेत् ॥

तत्रैव—

अष्टादश पुराणानि कृत्वा सत्यवतीसुतः ।
भारताख्यानमखिलं चक्रे तदुपबृंहितम् ॥
लक्षेणैकेन तत् प्रोक्तं वेदार्थपरिबृंहितम् ।
तदेकस्य प्रदानेन वेदशास्त्र-प्रदोभवेत् ॥
वाल्मीकिनापि यत् प्रोक्तं रामायणाख्यमुत्तमम् ।
ब्रह्मणाभिहितं यच्च शतकोटि प्रविस्तरम् ॥
उद्धृत्य नारदेनैव वाल्मीकाय समर्पितम् १(*) ।
वाल्मीकिना च लोकेषु धर्म्मकामार्थसाधनम् ॥
प्रवर्तितं चतुर्व्विंशत-सहस्रपरिसम्मितम् ।
भारतं लक्षसंख्याकं लोके वेदोपबृंहितम् २(†) ॥
धर्म्मार्थकाममोक्षाणां सारं भारतमुत्तमम् ३(‡) ।
तस्यैकस्य प्रदानेन वेदशास्त्र-प्रदोभवेत् ॥
खण्डं माहात्म्यमपिच यो दद्याद्विजपुङ्गवे ।
तत् पुण्यस्य तुलां नास्ति लभते ज्ञानमुत्तमम् ॥

*--

१ (*) 'वल्मीकाय'-(वाल्मीकाय)समर्पितम्' इति पादशं ग्रन्थान्तरस्थ: पाठः ।
—'आहृत्यनारदेनैव वल्मीकाय-समर्पितं'' इति हेमाद्रिः ।

२ (†) 'लक्षाकं भारतं च' इत्य-साधु-पाठः ग्रन्थान्तरेऽस्ति ।

३ (‡) 'भारते सर्व्ववेदार्थः भारतार्थस्य (श्च) कृत्स्नशः ।
गीतायामस्ति तेनैव सर्व्वशास्त्रमयी हि सा' इति गीता टीकारम्भे श्रीधरस्वामिवाक्यम् ।
'वेदानध्यापयामास महाभारतपञ्चमान्' । 'इतिहास पुराणानि पञ्चमोवेदानां वेदः' ।
इत्युपनिषदश्च ।

## (१४१) अथ वेदादिदानमन्त्राः।

—*—

### तेषां पूजाविधिश्च—

तेषां पूजाविधिः कार्य्यो गायत्र्या धीमतांवर !।
स्वाहेत्याद्यन्ततां कुर्य्यादावाहन विसर्ज्जनम्॥
मन्त्रैरेतैस्ततः कुर्य्यादमीषामनुमन्त्रणम्।
ऋग्वेद पद्मपत्राक्ष रक्ष मां भवसागरात्॥
शरणं त्वां प्रपन्नोऽस्मि देहि मे हितमुत्तमम् १(*)।
यजुर्व्वेद नमस्तेऽस्तु लोकत्राण-परायणः॥
त्वत् प्रसादेन मे कामाः निखिलाः सन्तु मे सदा २(†)॥
सामवेद महाबाहो त्वंहि साक्षादधोक्षज !।
प्रसीद सुमुखोभूत्वा कृपयानुगृहाण माम्॥
अथर्व्व सर्व्वभूतानां त्वदायत्ते हिताहिते।
शान्ति कुरुष्व देवेश पुष्टिमिष्टां प्रयच्छ नः॥
इति सम्प्रार्थ्य देवेशान् विप्रेभ्यः प्रतिपादयेत्।
प्रदद्यादेकमेकस्मै सुवर्णं त्रिपलान्वितम्॥
दद्यादेकपलोपेत मेकैकमिह दुर्व्वलः।
अन्नस्वशक्तितोवापि दानमेषां विधीयते॥
इति सम्प्रार्थ्य देवेशान् विप्रेभ्यः प्रतिपादयेत् ३(‡)।
एतदेव प्रमाणं स्यादेतेषां भूतिनिर्मिते॥
समधीतवतो वेदान् वेददान-विधिः स्वयम् ४(+)।
सदाध्ययनयुक्तस्य शिष्याध्ययनमेवहि॥
एवमेव स्मृतीनाञ्च दानं मन्वादीनामपि ५(×)।

—*—

१ (*) इदमधिकं श्लोकार्द्धं पठ्यते इति प्रतीतिः।
२ (†) 'एतेषां भूति-निर्म्मिती' 'मूर्त्तिनिर्म्मिता' इतिच पाठान्तर द्वयं दृश्यतेऽत्र।
३ (‡) अत्र 'प्रतिपादयेत्' क्रियायोगे चतुर्थ्यर्थे विभक्त्यर्थादर्शनादिति।
४ (+) 'समधीत वतो वेदान् वेददान-विधिः स्वयम्' इत्यादर्शान्तरधृतः पाठः।
५ (×) यथा वेदानां पुराणानाञ्च दानविधानन्तथा स्मृतीनां धर्म्मशास्त्राणां दानविधानं ज्ञेयम्।

## (१४२) अथ सामान्यतः सर्व्वविधदानमन्त्राः ।—

—*—

ॐसर्व्वविद्या(धा)श्रयं ज्ञानं-कारणं ललिताक्षरम् ॥

पुस्तकं सम्प्रदास्यामि प्रीता भवतु भारती ।

गुरोरवज्ञया यद्यत् स्वाध्यायाध्ययनं कृतम् ।

सरस्वति जगन्मातर्जगज्जाड्यापहारिणि ! ॥

साक्षाद् ब्रह्मकलत्रं त्वं इन्द्ररुद्रादिभिः स्तुता ।

तन्ममाध्यनोत्पन्नं जाड्यं हर वरानने ! ॥

विद्यादानेन विद्या मे भवेज्जन्मनि जन्मनि ।

तद्विज्ञानान्महाविष्णुः प्रसन्नो भवतु द्विजः ॥

**इति सर्व्वपुस्तकदानमन्त्राः ॥**

वेदशास्त्र-पुराणानि यत्किञ्चिज्ज्ञान-साधनम् ।

विद्यादानं नरःकृत्वा ब्रह्मसायुज्यमाप्नुयात् ॥

348. **इति मदनरत्ने दानविवेकद्योतेच विद्यादानविधिप्रकारः समाप्तः ॥**

लिखितं श्रीमदनन्तदेवेनवेदानां सर्व्वस्मृतीनां सर्व्वपुराणानां भारतस्य रामायणस्यान्यस्य च श्रवणविधिस्वरसात्—मत्कृत विधानपारिजाते चतुर्थ स्तवको निरुपित इति ।

पुनरत्र विशेषेणालोच्यते १(*)

—*—

## (१४३) अथ शिवशास्त्रादि-विधानम् ।

—*—

349. **नन्दिपुराणे—**

शुभे नक्षत्र दिवसे शुभेचापि दिने ग्रहे ।

लेखयेत् पूज्य देवेशान् रुद्र-ब्रह्म-जनार्दनान् ॥

---

१ (*) इति सामान्येन प्रकार. 'विधानमुक्त' पर्यालद वमानं मद्रतिशोच्यते । आदर्श-पुस्तकान्तरं ऽप्यदर्शनान्मि । अथ मदन रत्नं कृतिसन्दर्भ. ।

पूर्व्वदिग्वदनोभूत्वा लिपिज्ञो लेखकोत्तमः १(*) ।
विद्याधारं प्रकुर्व्वीत हेमरूप्यमयं शुभम् ।
निरोधि-हस्तबाहुश्च मसीपात्रावधारणात् ॥
एकान्तश्चोपकरणं यस्यासौ लेखकोत्तमः ।
नागदन्तमयं वापि शुभदारुमयन्तु वा ॥
अनुत्तम गुरुं रम्यं श्लक्ष्णं यन्त्र प्रयोगजम् २(†) ।
संङ्कोचयन्त्रसंयुक्तं विकाशेन समन्वितम् ।
तत्र विद्यां विनिहितां कुर्य्यात् पुस्तकसंस्थिताम् ॥

तथा—

एवं विद्यास्तु मेधावी शास्त्रं सत्कृत्य कृत्स्नशः ।
प्रदद्याद्विभवैर्दिव्यैः सुरायतन-वेश्मसु ॥
लेखकोबुद्धिमान् स्नातः शुक्लमाल्याम्बरोत्करः ३(‡) ।
आरभेत्तूर्य्यघोषेण पूज्य देवान् पितॄं स्तथा ।
ब्राह्मणान् स्वस्तिवाच्यादौ शास्त्रं मञ्चारयेत् सुधीः ४(§) ॥
श्लोकपञ्चकमादौतु दशकम्वापि लेखयेत् ।
ततो नक्षत्रयोगेन द्वितीयेऽहनि तल्लिखेत् ॥
तादृशेनैव विधिना पुण्याहैः शुभसंयुतैः ।
ततः समाप्ते शास्त्रेतु पुनः पुण्याहसंयुतः ॥
कुर्य्यात्तदहोरात्रञ्च पान-भोजनवस्तुभिः ।
उभयं क्वापि तल्लेख्यं ममी कुर्य्याच्च वाचकम् ५(०) ॥

(*) 'सर्व्वदेशाचाराभिज्ञः सर्व्वशास्त्रविशारदः ।
लेखकः कथितो राज्ञः सर्व्वाधिकरणेषु वै ॥' इति मत्स्य पुराणे, (१८९) अध्याये ।
विष्णुगुप्तस्य वृहच्चाणक्ये च—
'सकृदुक्त-गृहीतार्थो लघुहस्तो जिताक्षर,
सर्व्वशास्त्र समालोकी प्रकृष्टो नाम लेखकः' ॥

(†) खड्गमालातन्त्रे च—
'मुद्रालिपिश्शिल्पलिपि र्लिपिर्लेखनी सम्भवा ।
गुण्डिकाघुण संयुक्ता लिपयः पञ्चधाः स्मृताः' ॥
एताभिर्लिपिभिर्व्याप्ता धरित्री शुभदा इव' ! इति ।

३ (‡) पुष्पमाल्याम्बरोत्करः' इति हेमाद्रीयः पाठः ।

४ (§) 'श्रावयेद् बुध.' इति हेमाद्रिः ।

५ (०) 'वाचयेत्' इति वाक्यान्तरं ।

*उभयं-पूर्व्वमुत्तरञ्च लेख्यं पुस्तकं समीकुर्य्याद् न्यूनाधिक मात्रादि लेखन-* दूरीकरणाभ्यां पूर्व्वपुस्तकवच्छुद्धं कुर्य्यादित्यर्थः ।

**तथा—**

एवं विद्यान्तु मेधावी शास्त्रं सतकृत्य कृत्स्नशः ।
प्रदद्याद्विभवैर्दिव्यैः सुरायतन शेश्मसु ॥
आरोप्य याने रत्नाढ्ये शुभवस्त्रपरिस्कृते ।
घण्टाचामरशोभाढ्ये रत्नदण्डातपत्रिणि ॥
गजवाजिरथस्थञ्च महाशोभा-समन्वितम् ।
पुरतोगीतनृत्ये च नर्त्तकाद्य वरेणतु १(*) ॥
मङ्गलैर्वेदनिर्घोषैस्तद्देवाय निवेदयेत् ।
नाना रूपोपहारैश्च सम्पूज्य तु दिवौकसः ॥
दत्वाच पुस्तकन्तत्र पितॄणां धर्म्ममादिशेत् ।
बान्धवानाञ्च हृष्टानां अनन्तफलमिच्छताम् २(†) ॥
ततोदत्वा विधानेन तां विद्यां शिवमन्दिरे ।
ततश्च भोजयेद् विप्रान् शिवभक्तांश्च मानवान् ३(‡) ॥
यथाशक्ति च कर्त्तव्या उत्सवाः स्वेषु वेश्मसु ।

350. **दानपात्रमुक्तम् , देवीपुराणे---**

सदाध्ययनयुक्ताय विद्या विद्या-प्रदायिणाम् ।
यान्ति लोकान् शुभान् मर्त्याः पुण्यभाजोनराधिप ! ॥
इति शिवशास्त्रादि-दानम् ४(०) ॥

—*—

१ (*) अत मङ्गलैः, स्वस्ति पुण्याह स्वद्धादि वाचनैरिति ।
'मङ्गलं भगवान् विष्णुः मङ्गलं गरुड़ध्वजः ।
मङ्गलं पुण्डरीकाक्षो मङ्गलाय तनं हरिः' इति पुराणे ।
'पुरतोगीत नृत्येन नानावाद्यवरेण्य' इति हेमाद्रीयः पाठः ।

२ (†) 'फलमिच्छता' इति हेमाद्रीयः पाठः ।

३ (‡) 'भक्षयेद विप्रान्' इत्यपि पाठान्तरमस्ति । विप्रान् भोजयेदित्यर्थः ।
'सदाध्ययनयुक्ताय ज्ञान-विद्याप्रदायिने ।
शिवशास्त्र-प्रदानाच ब्रह्मलोके महीयते' इत्यन्यत् पाठान्तरम् ।

४ (०) 'शैवाद्य धर्म्मा राजेन्द्र । मानवोक्ता महीपते' ।
जयेति नाम एतेषां प्रवदन्ति मनोषिणः' ॥ इति श्रीमद्रघुनन्दस्य स्मृतितत्त्वे ।
" शिवशास्त्रमन्यत् प्रागुक्तम् ।

# (१४४) अथ त्रिपुरुष दानम्।

—*—

351. **मृत्युञ्जये—**

सुवर्ण रक्तिकानाञ्च शतेनैकेन शक्तितः।
कार्य्यो ब्रह्माथ विष्णुश्च शङ्करश्च तथैवच ॥
पलद्वादश मानेन पीठं लोहेन कारयेत्।
देवानां स्थापनार्थाय चक्रवत् परिमण्डलम् १(*) ॥
अत्र ब्रह्मादयः स्थाप्या यमदूतं पुरोन्यसेत्।
चतुर्म्मुख श्चतुर्व्बाहुः पद्महस्तः पितामहः ॥
शङ्करो द्विभुजः शूली वृषारूढस्त्रिलोचनः।
विष्णुश्चतुर्भुजश्चक्री गदागरुड़-वाहनः ॥
यमदूतः पाशपाणि र्दण्डवान् विकृताननः।
स तु लोहमयः कार्य्योऽ भीतोवद्ध इवाग्रतः ॥
ततो विधाय देवानां पूजां पुष्पफलादिभिः।
यजमानः करे खड्गं गृहीत्वा निशितं नवम् ॥
इदं शिरश्छिन्नभीति र्दूतस्यास्य दुरात्मनः।
इत्युच्चार्य्य शिरश्छित्वा दूतस्य यमदिङ्मुखः ॥
ततश्चतुर्भिर्विप्रैस्तु कार्य्यं ब्राह्मण-वाचनम् २(†)।
ततो ब्रह्मादि देवानां दानं कुर्य्यात् प्रयत्नतः ॥
देवालये गृहेवापि तीर्थेवान्यत्र कुत्रचित्।
ब्राह्मणाय तु तान् दद्यात् दिव्याङ्गाय च शीलिने ॥
सुवर्ण दक्षिणायुक्तान् ब्रह्मादीननुपूर्व्वशः।
अपमृत्यु भयात्त्रस्तो योदद्याद्देवता त्रयम् ३(‡) ॥

---

१ (*) 'चक्रवत्रि मण्डलम्' इति आदर्शे ग्रन्थान्तरधृतः पाठः।
,, 'भीतोबद्धवत्' इत्यपि पाठान्तरमस्ति।
२ (†) 'कार्य्यं पुण्याहवाचनम्' ,, ,,
३ (‡) यथा ब्रह्मादि-सुवर्ण पुरुषत्रयदानेनापमृत्युभयाद्रक्षा तथा मन्त्रयागैश्च महामृत्युञ्जयानुष्ठानेनापि अपमृत्युनिवृत्तिः। अथवा कर्मिष्ठ मन्त्रपुरश्चरणादिना।

तस्य मृत्यु र्विनश्येत दानादस्मान्न संशयः ।
मृत्यु ना गृह्यमाणोऽपि जीवत्येव नरः स्फुटम् ।
चामीकर प्रतिकृति त्रितयं विधाय,
ब्रह्मादिदानमिह यः पुरुषः करोति ।
रोगाग्निरस्य सकलानपि दुर्निवारान्;
नैवाप मृत्युभयमेति नरः कदाचित् ॥
इत्यप मृत्युहर-सुवर्ण निर्म्मित ब्रह्मादि-
त्रिपुरुष दानम् ।

—*—

## (१४५) अथ नवग्रह दानम् १(*) ।

—*—

ग्रहदान क्रमं वक्ष्ये सर्व्व सिद्धि करं परम् ।
सर्व्वशान्ति करं नृणां सर्व्वपाप प्रणाशनम् ॥
विषुवत्ययने राहु ग्रहणं शशि-सूर्य्ययोः ।
जन्मर्क्षे सोमवारेवा पञ्चदश्यान्तथैवच ॥
पुण्यकालेषु सर्व्वेषु पुण्यदेशे विशेषतः ।
ग्रहदानन्तु कर्त्तव्यं नित्यं श्रेयोऽभिकाङ्क्षिणा ॥
हस्तमात्रं द्विहस्तां वा त्रिहस्ताम्वाथ नारद !
चतुरस्रां समां भूमिं गोमयेनानु लेपयेत् ॥

१ (*) 'श्रीकामः शान्तिकामो वा ग्रहयज्ञं समारभेत् ।
वृष्ट्यायुः पुष्टिकामो वा तथैवाभिचरन् पुनः ॥'—इति मत्स्यपुराणे ।
'ग्रहेषु प्रतिकूलेषु नानुकूलं हि भेषजम् ।
ते भेषज वीर्य्याणि हरन्ति बलवन्त्यपि ॥'—इति वैद्यके ।
'गोचरे वा विलग्ने वा ये ग्रहा रिष्ट सूचकाः ।
पूजयन्ति प्रयत्नेन पूजिताः स्युः शुभावहाः ॥'—इति ज्योतिषे ।
'ग्रहाः पूज्याः सदा यस्माद्राज्यादि प्राप्यते नरैः'—इति गारुड़े, १०१-मध्याये ।
'एवं चित्ते शैलवरे पूजयित्वा नवग्रहान् ।
अभीष्टान् लभते कामान् नरः शान्तिं तथोत्तमाम् ।'—इति कालिकापुराणे ।

रेखाः प्राच्य उदिच्यश्च स्युश्चतस्र स्तथा समाः ।
नव कोष्ठेसु पद्मानि विन्यसेत् श्वेततण्डुलैः ॥
आदित्यश्चन्द्रमा भौमो बुध-जीव सितार्कजाः ।
राहुः केतुरिति प्रोक्ता महालोक-सुखावहाः ॥
एषां हिरण्यरूपाणि कारयित्वा यथाविधि ।
त्रिनिष्केणाथवा कुर्यात् यथाशक्त्या पृथक् पृथक् ॥
अत्र हिरण्य रूपाणि हिरण्यमयप्रतिमाः ।
तल्लक्षणं मन्त्राश्च अग्रे वक्ष्यन्ते १(*) ।
आदित्यं मध्यमे कोष्ठे दक्षिणेऽङ्गारकं न्यसेत् ।
उत्तरेतु गुरुं विद्याद् बुधमुत्तर पूर्व्वके २(†) ॥
भार्गवं पूर्व्वतोन्यस्य सोमं दक्षिण पूर्व्वके ।
पश्चिमेऽर्कसुतं न्यस्य राहुं पश्चिम दक्षिणे ॥
पश्चिमोत्तरतः केतुं सन्निवेश्य यथाविधि ॥
तद्वर्ण पुष्पगन्धाद्यै रर्च्चयेत् स्व स्व मन्त्रकैः ।
दानं शूद्रोऽथवा कुर्य्यात् स्त्री वा तत्रतु नारद ! ॥
भूलेपनादि यत्कार्य्यं सर्व्वं विप्रेण कारयेत् ।
स्नानकालेतु सम्प्राप्ते स्नात्वा तिलकुशोदकैः ॥
प्रयतो यजमानस्तु धौतवस्त्रं प्रसन्नधीः ।
अर्च्चयित्वा स्वयं दद्याद् अहङ्कार मुखान् ग्रहान् ॥
प्रत्येक मेकं विप्रेभ्यः ३(‡) स्व स्व मन्त्र मुदीरयेत ४(+) ॥

## तत्ररवेः—५(०)

पद्मासनः पद्मकरोद्विबाहुः, पद्मद्युतिः सप्ततुरङ्गवाहनः ।
दिवाकरो लोकगुरुः किरीटी. मयि प्रसादं विदधातु देवः ॥

१ ( ) 'बुध मुत्तरतः केतु.' इत्यपि पाठ आदर्श ग्रन्थान्तरे ।
२ (†) अत्र श्लोकद्वयं आदर्श पुस्तकान्तरे नास्ति ।
३ (‡) 'ब्रह्मोवाच' इति हेमाद्रि-धृतः पाठः ।
४ (+) अत्र स्व पदेन रव्यादिनवग्रहाः ग्राह्याः । तेषां प्रत्येकं स्वीय स्वीय मन्त्र ध्यानादिकञ्च पठेत् । ते मन्त्राः पश्चाद् वक्ष्यन्ते, तथैव तेषामर्च्चाः ।
५ (०) ग्रहमण्डल मन्त्रध्यानानि—ॐ सवितृं काश्यपं रक्तं कालिङ्गं पद्माङ्कुशम् ।
पद्मस्थं सप्त पूर्व्वाननं सप्ताश्ववाहनम् ॥
शिवाधिदैवतं सूर्य्यं वह्नि प्रत्यधि दैवतम् ॥१॥
ॐ ह्रां ह्रीं सूर्य्याय । इति सूर्य्यस्य मन्त्रध्यानादिः ।

**चन्द्रमसः—१(*)**

श्वेताम्बरः श्वेत विभूषणश्च, श्वेतद्युतिर्दण्डधरोद्विबाहुः ।
चन्द्रोऽमृतात्मा वरदः किरीटी, श्रेयांसि मह्यं विदधातु देवः ॥

**कुजस्य—२(†)**

रक्ताम्बरो रक्तवपुः किरीटी, चतुर्भुजो मेषगमोगदाभृत् ।
धरासुतः शक्तिधरश्च शूली, सदामम स्याद्वरदः प्रशान्तः ॥

**बुधस्य—३(‡)**

पीताम्बरः पीतवपुः किरीटी, चतुर्भुजोदेवगुरुः प्रशान्तः ।

**बृहस्पतेः—४(०)**

ॐ द्विजमाङ्गिरसं पीतं सैन्धवञ्च षडङ्गुलम् ।
ध्यायेत् पीताम्बरं जीवं सरोजस्थं चतुर्भुजम् ॥
दक्षोदूर्ध्वदक्षवरद करकादण्ड माह्वयेत् ।
ब्रह्माधिदैवं सूर्य्यास्य मिन्द्रप्रत्यधि दैवतम् ॥
ॐ ह्रीं क्लीं हूं बृहस्पतये । इति गुरोर्मन्त्रध्याने ।

---

१ (*) ॐ सामुद्रं वैश्यमात्रेयं हस्तमात्रं सिताम्बरम् ।
श्वेतं द्विबाहुं वरदं दक्षिणं सगदेतरम् ।
दशाश्वं श्वेतपद्मस्थं विचिन्त्योमाधि दैवतम् ।
जलप्रत्यधि दैवञ्च सूर्य्यास्य माह्वयेत्तथा ॥२॥
इति सोमस्य—ॐ ऐं क्लीं सोमाय ।

२ (†) ॐ आवन्त्यं क्षत्रियं रक्तं मेषगं चतुरङ्गुलम् ।
आरक्त माल्य वसनं भारद्वाजं चतुर्भुजम् ।
दक्षिणोर्द्ध्वक्रमाच्छक्ति-वराभय गदाकरम् ।
आदित्याभि मुख देवं तद्वदेव समाह्वयेत् ।
स्कन्दाधि दैवतं भौमं क्षितिप्रत्यधि दैवतम् ।
ॐ हूँ श्रीं मङ्गलाय । इति कुजस्य मन्त्रध्याने ।

३ (‡) ॐ मागधं द्व्यङ्गुलात्रेय वैश्यं पीतं चतुर्भुजम् ।
वामोर्द्ध्व क्रमतश्चर्म्मगदावरद खड्गिनम् ॥
सूर्य्यास्यं सिंहगं सौम्यं पीत वस्त्रमथार्च्चयेत् ।
नारायणाधिदेवञ्च विष्णु-प्रत्यधि दैवतम् ॥
ॐ ऐं स्त्रीं श्रीं बुधाय । इति ध्यानमन्त्रौक्तः ।

४ (०) एतन्मूल ग्रन्थे प्राक् पतितम्, नवग्रह विषये सम्प्रति पूरयित्वा प्रदत्तम् ।

**शुक्रस्य—**

ॐ शुक्रं भोज कटं विप्रं भार्गवञ्च नवाङ्गुलम् ।
पद्मस्थ माह्वयेत् सूर्य्यमुखं श्वेतं चतुर्भुजम् ॥
गदा क्षवर करका दण्डहस्तं सिताम्बरम् ।
शक्राधि दैवतं ध्यायेच्छची प्रत्यधि दैवतम् ॥
ॐ ह्रीं श्रीं शुक्राय । इति शुक्रस्य मन्त्रध्याने ।

**शनेश्च—**

ॐ सौराष्ट्रं काश्यपं शूद्रं सूर्य्यास्यश्चतुरङ्गुलम् ।
कृष्णं कृष्णाम्बरं गृध्रगतं सौरिं चतुर्भुजम् ॥
तद्वद्‌वाणधरं शूल धनुर्हस्तं समाह्वयेत् ।
यमाधिदैवतं प्रजा पति प्रत्यधि दैवतम् ॥
ॐ ऐं ह्रीं श्रीं शनैश्चराय । इति शनेर्म्मन्त्रध्याने ।

**राहोः—**

नीलाम्बरो नीलवपुः किरीटी, करालवक्त्रः करवाल शूली ।
चतुर्भुजश्चर्म्मधरश्च राहुः, सिंहासनस्थोवर दोऽस्तु मह्यम् १(*) ॥

**केतुगणस्य:—**

धूम्रोद्विवाहुर्वरदोगदाधृक् , गृध्रासनस्थो विकृताननश्च ।
किरीट-केयूर-विभूषिताङ्गः, सदास्तुमे केतु गणः प्रशान्तः २(†) ॥
इत्युक्त्वा दापयेत् सर्व्वान आदित्याद्यान्नव-ग्रहान ३(‡) ।
पुरुषोवाथ नारीवा यथोक्तं फलमाप्नुयात ॥
प्रथमं गुरवे दद्याद् अन्यस्मै वा प्रदापयेत ४(+) ।
गुरोरत्र पूजा कार्य्या ।
अथवा दक्षिणा देया सुवर्ण-वाससी शुभे ।

**सूतउवाच—**

इत्याह भगवान् ब्रह्मा नारदाय महात्मने ।
यथाह मन्नुवं दानं युष्माकं मुनिसत्तमाः ॥
इति नव ग्रहदानम् ॥

—*—

१ (*) ॐ ऐं ह्रीं राहवे । इति राहु मन्त्रः ।
२ (†) ॐ ह्रीं ऐं केतवे । इति केतो मंत्रः ।
३ (‡) इति हेमाद्री दानखण्डे । अन्यान्यवग्रहतत्त्वं मानर्थ्योऽस्ति ।
४ (+) 'प्रथम' मित्यत्र 'मध्यम'मिति चादर्शान्तरे पाठः ।

## (१४६) अथ दशावतार-दानम्।

—*—

352. **तत्र विश्वामित्रः—**

दानानामुत्तमं दानं हैमं विष्णोः स्वरूपकम्।
तस्मात् पुण्यार्थिना देया हैमी विष्णु स्वरूपिका ॥

मत्स्यः कूर्म्मोवराहश्च नरसिंहोऽथ वामनः।
रामोरामश्च कृष्णश्च बुद्धः कल्कीच ते दश ॥

वामे शङ्खं गदा दक्षे द्विभुजोमत्स्यरूपधृक् १(*)। इति
नराङ्घ्रिर्मत्स्य रूपीवा मत्स्य रूपीजनार्द्दनः ॥

सर्व्वेषा मेषां लक्षणमुक्तं प्राग्विश्वचक्रदाने।
वामे शङ्ख मित्याद्येत देव कूर्म्मलक्षणम् ॥

यथा शक्त्या प्रकुर्व्वीत सुवर्णेन विधानतः २(†)।
समेन षोड़शेनैव समान्येतानि कारयेत ॥

१ (*) एतदेव कूर्म्मलक्षणं मत्स्यपदस्थाने कूर्म्मपद प्रयोगे सति।

२ (†) 'विधानतः' इत्यत्र विजानता इति हेमाद्रौ पाठः।

चतुर्वर्गचिन्तामणौ पद्मपुराणे च—दशावतार विषये विशेषश्चायम्,—
'मधुपिङ्गल वर्णाश्च चतुर्बाह्वायुधैर्युतम्।
नराङ्गं शूकरास्यञ्च मनाक् पीनं सुभीषणम् ॥
शौर्व्याम कूर्परस्थातु धरालक्ष्मी (लक्ष्मी) पदाम्बुजो।
एतद्रूपधरं देवं वराहं भुक्ति मुक्तिदम् ॥
ज्वलदग्नि समाकारं सिंहवक्त्रं नराङ्गकम्।
दंष्ट्रा करालवदनं ललज्जिह्वं सुभीषणम् ॥
वृत्ताक्षं जटिलं क्रुद्धं आलीढं पीनवक्षसम्।
बिभेद्य तीव्रनखरं वामोरुकृत दानवम् ॥
तद्वक्षोदारयन्तं कराभ्यां नखरैर्भृशम्।
गदाचक्र धरं दोर्भ्यां नरसिंहं जगत् प्रभुम् ॥
कुण्डी छत्र धरो द्विदोर्वामनः परिकीर्त्तितः।
स्वनामकरणो धीर मुद्वहन् परशुं करे ॥
जामदग्न्यः प्रकर्त्तव्यो रामोबाणधनुर्द्धरः।
शङ्खचक्रधरः कार्य्यो नीलोत्पल दलच्छविः ॥
कृष्णोदीर्घविवाहस्य सर्व्वदैत्यभयङ्करः।
कषाय वस्त्र संवीतः स्कन्ध संसक्तचीवरः ॥
पद्मासनस्थोद्विभुजो ध्यायी बुद्धः प्रकीर्त्तितः।
खड्गोद्यतकरः कल्की द्विभुजः परिकीर्त्तितः।

तेषु सुवर्णास्तु षोड़शेति मनूक्तेः । षोड़श मासात्मक सुवर्णेनैवेत्यर्थः । यद्वा षोड़शधा विभक्तेन सुवर्णेनेति ।

वित्तानुरूपतो राजन् कुर्य्यादाढ्य—दरिद्रयोः १(*) ।
सम्पूज्य नामभिस्तेतु पुष्प धूप निवेदनैः ॥
भक्ति नम्र प्रणम्याथ निवेद्य(ः)श्रद्धया ततः ।
आहूय ब्राह्मणान् राजन् पादौ प्रक्ष्याल्य यत्नतः ॥
उपवेश्यासने सर्व्वान् चन्दने नानु लेपयेत् ।
सुगन्धैः कुसुमैश्चैव धूपै र्दीपैस्तथैव च ॥
आच्छाद्य वस्त्रयुग्मैश्च ग्रहने चन्द्र सूर्य्ययोः ।
अयने विषुवे चैव द्वादश्यान्तु विशेषतः ॥
उपोस्यैकादशीं कार्य्यं धर्म्मकार्य्यञ्च सर्व्वशः ।
अन्यथा नरकं यातीत्येवमाह पितामहः ॥
ग्राहकान् विष्णुरुपान्तानर्च्चयेत विमत्सरः २(†) ।
एकैकं देवरुपन्त मेकैक स्मै समर्पयेत् ॥
अथवा विदुषे सर्व्वान् दद्यात् सम्पूज्य मानतः ।
नाव्रताय कदाचिन्न दद्यात् पापण्डिने तथा ३(‡) ॥

## दानमन्त्रस्तु—

देवरुपं मया विप्र कारितं काञ्चनं शुभम् ४(§) ।
तद्गृहान प्रदानेन प्रीयतां विप्ररुपधृक् ॥
एतदुच्चार्य्य विप्रस्य हस्ते तोयं क्षिपेत् स्वयम् ।
प्रदक्षिणा ततो देया सम्पूज्य प्रविशेद्गृहम् ।
अस्य दानस्य माहात्म्य वदाम्येक मुखः कथम् ।
सहस्रास्यः शतास्यो वा यदि शक्तोऽभिभाषितुम् ॥
उद्देशतः प्रवक्ष्यामि भक्तानां भक्ति वृद्धये ।
दशावतारदो राजन् विष्णोरैक्यं स गच्छति ॥

१ (*) 'कुर्य्यादित्य'त्र 'तुल्या' इति हेमाद्रीयः पाठः । 'न सुवर्णास्तु' इत्यपि पाठः परिमाणं स्यात् ।

२ (†) 'याचका विष्णुरुपाश्च भाव्रौर्यैव विमत्सरः' इति कश्चिदादर्श ग्रन्थे पाठः ।

३ (‡) 'नाव्रतेऽपि कदाचित् दद्यात्पापण्डिने तथा' इति आदर्श ग्रन्थान्तरधृतः पाठः ।

४ (§) 'देवरुप'मित्यत्र 'वेदरुप'मिति तत्रैव पाठान्तरमस्ति ।

नीरे नीरं यथा क्षिप्तं पयः संहरतेऽनलः ।
तथा विष्णोश्च स्वारूप्यं दाता याति न संशयः ॥
ब्रह्महा च सुरापश्च तस्करो गुरु तल्पगः ।
यथामुष्मादिषीकान्त स्तथा पापात् प्रमुच्यते १(*) ॥
यः काञ्चनेन शुभलक्षण-लक्षिताङ्गम् ,
विष्णोः स्वरुपदर्शकं विधिवद्विधाय ।
दद्याद् द्विजेषु जगदेव (क) हितेन दत्तम् ,
यस्माज्जगन्मय वपुर्विभुरेष देवः ।

इति दशावतार दानानि ॥

—*—

## (१४७) अथ लक्ष्मीनारायण दानम् ।

—*—

353. **चतुर्वर्ग चिन्तामणौ, बौधायन :—**

लक्ष्मी-नारायणं रुपं सुवर्णेन प्रकल्पयेत् ।

354. **तत्प्रतिमोक्ता कामिके :—**

पलेन वा तदर्द्धेन तदर्द्धं नाथवा पुनः २(†) ।
पद्मासनगतं कुर्य्यात् लक्ष्मीनाथं चतुर्भुजम् ॥
दक्षिणाधः करे पद्मं शङ्खमूर्द्धकरे न्यसेत् ।
वामोर्द्धेच भवेच्चक्रं लक्ष्मी पृष्ठेऽपरः करः ॥
वामोत्सङ्गगता लक्ष्मी रत्नपात्र करा भवेत् ।
दक्षिणस्य भुजो देव्या पृष्ठे देवस्य चक्रिणः ॥ इति
गरुरं राजतं कुर्य्याद् देवदेवस्य वाहनम् ३(‡) ।
पक्षौ तस्यच सौवर्णौ सोवर्णी चैव नासिका ॥

---

१ (*) 'सकृदप्येव जन्तूनां उद्धरेत् स इदं जगत्' इत्यादि, यद्वाप्यतीत्यन्तं सार्द्धश्लोकद्वयं हेमाद्रौ अधिकं पठ्यते ।

२ (†) 'नाथवा पुनः' इति हेमाद्रौ धृतः पाठः ।

३ (‡) देवदेवस्य-लक्ष्मीनारायणस्येत्यर्थः, तत्प्रस्तावात् । न तु महादेवस्य । अथ कौतुकमित्यत्र 'कौस्तुभम्' इति पाठान्तरम् ।

वस्त्रैरत्यन्त रुचिरैः परिधाप्याति कौतुकम् ।
मुक्तादाम परिक्षिप्तं चन्दनागुरु लेपितम् ।
अर्चयेत् कुसुमै र्युग्मं लक्ष्मीनारायणात्मकम् ॥
प्रसन्नं रमणीयञ्च गरुड़ोपरि संस्थितम् ।
ततो विप्रं समाहूय सुशीलं लक्षणान्वितम् ॥
आचारवन्तं धर्म्मज्ञं वेदवेदाङ्ग-पारगम् ।
प्रतिग्रह-निवृत्तञ्च श्रुति स्मृति पथे स्थितम् ॥
स्वयम्भक्त्या समानीय पूजयेद् वस्त्र कुण्डलैः ।
कुङ्कुमागुरु कर्पूरैः उपवीताङ्गुलीयकैः ॥
पूर्व्वोक्तेन विधानेन होमं तत्रतु कारयेत् ।
मन्त्रेणानेन तन्दद्यात् सर्व्वलोक नमस्कृतम् ॥

**मन्त्रस्तु—**

लक्ष्मीपते देवकी नन्दनेश, क्षीराब्धि शायिन् वचसामगम्य ! ।
गोविन्द दामोदर ज्ञानरत्न, विनाशयाशु क्षपितारिवर्ग ! ॥
नैमित्तिक दानत्वाभावेतु 'गोविन्द दामोदर-
धर्म सङ्घ' मित्यूहो दानमन्त्रे कार्य्यः १(*) ॥
लक्ष्मीनारायणस्यैव मूर्त्तिन्दत्वाति भक्तितः ।
आरोग्यवान् सुखी नित्यं जायते नात्रसंशयः २(†) ॥
इति लक्ष्मीनारायण मूर्त्ति दानम् ॥

—*—

## (१४८) अथ घण्टा दानम् ३(‡) ॥

—*—

355. **ब्रह्मवैवर्त्ते,—**

गुरुणा ह्यननुज्ञातो यो वेदाध्ययनञ्चरेत् ।
स प्रज्ञया विहीनस्तु संसारे जायते नरः ॥

---

१ (*) 'धर्म्मसङ्घ' इत्यत्र 'मेघप्रसंघ'—इत्यंपाठान्तरमप्यस्ति । 'मन्त्रस्तु' इति श्लोकस्याग्यादौ क्वचित्पाठोऽस्ति ।

२ (†) पित्तल-कांस्यादिनिर्म्मित वाद्यविशेषः । 'सर्व्ववाद्यमयी घण्टा वाद्याभावे प्रवादयेत्' इति श्रुतिः । 'यतो यस्य गृहे नास्ति घण्टा वा गरुड़ान्विता । पुरतो वासुदेवस्य न स

३ (‡) भागवतः कलौ' इति पाद्मे पातालखण्डे ।
'हिनस्ति दैत्यतेजांसि स्वनेनापूर्य्य या जगत् ।
सा घण्टा पातुनो देवि पापेभ्यो नः सुतानिव' ॥ इति मार्कण्डेय पुराणे ।

वक्ष्यामि तत् प्रतीकारं शुद्ध कांस्यमयीन्दृढाम् ।
शोभनां घाटयेद्घण्टां शुभ रेखा विभुषिताम् ॥
पलैस्तु कुर्य्याद्विंशद्भिः त्रिंशद्भिर्वा तदर्द्धतः ।
सुस्वरां तामति श्लक्ष्णां पञ्चगव्येन धारयेत् ।
श्वेत वस्त्रेण संम्वीतां तण्डुलोपरि विन्यसेत् ॥
तण्डुलानां परिमाणं द्रोणानां त्रयमेवच १(*) ।
तदर्द्धमथवा ग्राह्यं परिमाणं स्व शक्तितः ॥
आचार्य्यः सर्व्वशास्त्रज्ञो वेद-वेदाङ्ग पारगः ।
धर्म्मशास्त्रेच कुशलः स्वाचारः विजितेन्द्रियः ॥
आहूय परया भक्त्या स्वयमेव गृहङ्गतः ।
तेनैव कारयेत् पूजां घण्टायाः शास्त्रचोदिताम् ॥
उपचारैः षोड़शभि र्मन्त्रेणानेनभक्तितः ।
आवाहयेत्तु वागीशां घण्टायां परमेश्वरीम् ॥
एह्येहि देवि सर्व्वेशि घण्टायां सन्निधिं कुरु ।
सर्व्व सत्वोपकारे त्वं ज्ञान मुद्रे परात्परे ! २(†) ॥

**इत्यावाहन मन्त्रः ।**

एवमावाह्य तां घण्टां ब्राह्मणश्चापि पूजयेत् ।
'ब्रह्मजज्ञान' मन्त्रेण घण्टां सम्पूज्य तां वराम् ३(‡) ॥
मन्त्राध्यायोक्त मार्गेण प्रतिष्ठाप्याथ भक्तितः ।
होमं कुर्य्यात् प्रयत्नेन समिदाज्य तिलैरपि ॥
नैवेद्यं पायसन्दद्याद् देव्यै च ब्राह्मणे तथा ।
'सरस्वती प्रेदमव' मन्त्रः सर्व्वत्र सम्मतः ४(§) ॥

356. **मन्त्रोऽयं वाजसनेये प्रसिद्धः ।**

गुरोरवज्ञया यत्र स्वाध्यायाध्ययनं कृतम् ५(०) ।
सरस्वति जगन्मातः ! जगज्जाड्यापहारिणि ! ॥

---

१ (*) 'द्रोण वितयमेवच' इति हेमाद्रीयः पाठः ।
२ (†) इति तत् पूजनमन्त्रः ।
३ (‡) 'तथाम्बरम्' हेमाद्रीये पाठः ।
४ (§) वाजसनेयसंहितायाम् ।
'सरस्वती मनसा पेशलम्' । 'सरस्वती योन्या गर्भ' शुक्ल, यजुः, १९।८४।१९८९ ।
५ (*) 'इत्याद्यारभ्य—' ब्रह्माणी लोक पावनी' इत्यन्तः श्लोकोऽधिकः हेमाद्रौ दृश्यते ।

साक्षाद् ब्रह्मकलत्रं त्वं विष्णु रुद्रादिभिः स्तुता।
तन्ममाध्ययनोत्पन्नं जाड्यं हर वरानने! १(*)॥
घण्टादानेन तुष्टा त्वं ब्रह्माणि लोकपावनि!।
एवं दानंहि कृत्वाच तमाचार्य्यं क्षमाप्यच॥
जनेभ्य शक्तितोदद्या द्ब्राह्मणेभ्यश्च भोजनम्।
ततः स्वबन्धुभिः सार्द्धं स्नात्वा भुञ्जीत मानवः॥
एवं यः कुरुते दानं प्रज्ञाहीनो मूढ़ोऽथवा।
मूर्खोवाऽपि जड़ोजन्तु र्जायते वाक् पति र्यथा २(†)।
जायते वाक्प्रवाहश्च साक्षाद्गङ्गा प्रवाहवत्।
इति घण्टादान विधिः॥

—*—

## (१४६) अथ सरस्वती दानविधिः।

—*—

357. **वायु पुराणे—**

वाग्निरोधं गुरोः कृत्वा भवेद्गद्गद वान्नरः ३(‡)।
तस्य वक्ष्ये प्रतीकारं दानेन ऋषि भाषितम्।
पलेनाथ तदर्द्धेन तदर्द्धार्द्धेनवा पुनः॥
सरस्वतीन्तु प्रतिमां कुर्य्याद्भुजचतुष्टयम्।
वरदञ्चाक्ष सूत्रञ्च बिभ्रती दक्षिणे करे॥
पुस्तकञ्चा नघं वामे दधानां हंसवाहनाम्।
अति शुभ्रेण रौप्येण कण्ठः स्वर्णेनवा भवेत् ४(+)॥
आसनञ्च प्रकुर्व्वीत सौवर्णं पद्ममुत्तमम्।
तस्यो परिवा संवेश्य देवीं वागीश्वरीं पराम्॥
मुक्तादाम भूषिताङ्गां शुक्ल वस्त्रेण संवृताम्।
वागीश्वरेण मन्त्रेण पूजयेत सित तण्डुलैः ५(×)॥

---

१ (*) 'तन्मयाध्ययनं कृतं साक्षाद हर वरानने' इति पाठोऽपि चादर्शग्रन्थान्तरेऽस्ति।

२ (†) 'वाग्विरोधं' इति चादर्शग्रन्थान्तरे पाठः।

३ (‡) 'कूटस्वर्णेनेति' हेमाद्रिधृतः पाठः।

४ (+) चतुर्वर्ग चिन्तामणावप्येतादृशः पाठोऽस्ति।

५ (×) तन्त्रसारेऽप्यत्र मन्त्रमालेव वागीश्वरमन्त्रोऽस्ति।

*श्वेत पुष्पैः श्वेतगन्धैः संस्कृत्य विधि पूर्व्वकम्।*
वागीश्वरमन्त्रः 'पावका नः सरस्वती'त्यादि १(*)।
*ब्राह्मणः सर्व्वशास्त्रज्ञः कुशलः शास्त्र-सम्मतः॥*
मन्त्रवादः प्रवीणश्च तेन होमञ्च कारयेत्।
*पायसं जुहूयात साज्यं शतं शालिमयन्तथा॥*
*जुहूयात् समिधश्चापि तथाज्यञ्च तिलानपि।*
*'सरस्वती प्रेदमव' इति वा मन्त्र इष्यते २(†)॥*
*कृते* ब्रह्मोद्वासने तामाचार्य्याय निवेदयेत्।
मन्त्रेणानेन विधिवत प्राङ्मुखाय ह्युदङ्मुखः॥
सम्पूज्य ब्राह्मणं सम्यग् वस्त्रालङ्कार भूषणैः।
या वक्त्रे ब्रह्मणोदेवी या सा वागीश्वरी परा॥
ब्रह्म विष्णु शिवैश्चान्यैः पूजिता सर्व्ववन्दिता।
तुष्टा भवतु दानेन दत्ते नानेन वाक् परा॥
वाग् विरोधं गुरोः कृत्वा यन्मे गद्‌गदभाषणम्।
तत सर्व्वं क्षपय क्षिप्रं ब्राह्मी त्वं लोक पावनी॥

इति दानमन्त्रः।

अनुज्ञाप्य ब्राह्मणं तं स्वयं भुञ्जीत मानवः।

इति सरस्वती दान विधिः॥

—*—

## (१६०) अथ कुबेर मूर्त्तिदानम् ३(‡)।

—*—

358. **वायु पुराणे—**

दरिद्रोजायते मर्त्यो दान विघ्नं करोति यः।
ऐश्वर्य्यं जायते येन कर्म्मणा तच्छृणुष्व मे॥

---

१ (*) 'पावका नः सरस्वती वाजेभिर्वाजिनीवती। यज्ञं वष्टुधिया वसुः'। शुक्लयजुर्वेदः॥२०।८४॥

२ (†) वाज सनेय संहितायाम्।

३ (‡) हेमाद्रौ महस्रते।

पलार्द्धेन तदर्द्धेन तदर्द्धेमाथवा पुनः ।
धनदस्य प्रति कृतिं कुर्य्यात् स्वर्णमयीं शुभाम् ॥
द्विभुजां वाहनो पेतां नयनानन्द कारिणीम् ।

359. **श्री प्रश्नेतु—**

ह्रस्व मापिङ्गलकच्वं गदिनं पीत विग्रहम् ।
पुष्पकस्थं धनाध्यक्षं ध्यायेच्छिवसखं सदेत्युक्तम् ।
स्वर्णवर्ण कृतं पाणि मश्ववाहं निरीश्वरम् ।
चित्रिण्याः प्रियकृद्देवं कुवेरं तमहम्भजे ॥
इति लक्षण-लक्षितां कुर्य्यात् १(*) ।
पद्म शङ्खनिधिभ्याञ्च युक्तान्तां पार्श्वयोर्द्वयोः ।
श्वेतवस्त्रेण संवेष्ट्य तण्डुलोपरि विन्यसेत् ॥
तण्डुलानां परिमाणं भवेद्द्रोण-चतुष्टयम् ।
तदर्द्धंच तदर्द्धंवा वित्तशाठ्यं नकारयेत् ॥
श्वेत माल्यैस्तथा गन्धैरनुलिप्य प्रपूजयेत् ॥
आग्नेय्यां दिशि होमश्च समिदाज्य तिलैर्भवेत् ॥
मन्त्रो राजाधिराजायेत्येष योज्यः सलिङ्गकैः २(†) ।
व्याहृत्य तिलहोमश्च कर्त्तव्यो धनकाङ्क्षिभिः ॥
आचार्य्यः सर्व्वशास्त्रज्ञोविनीतः सर्व्व-सम्मतः ।
महाकुल-प्रसूतश्च धर्म्मज्ञः सत्यवाक् शुचिः ॥
कारयेदर्चनं तेन धनदस्याति (पि) भक्तितः ।
तद्दैवत्येन मन्त्रेण सच कामेश्वरो भवेत् ३(‡) ॥
तस्मै होमं कृतवते प्रदद्यात् प्रतिमान्तु ताम् ।
मन्त्रेणानेन विधिवत् प्राङ्मुखाय उदङ्मुखः ॥

---

१ (*) इति वर्णित-लक्षणेन लक्षितां कुबेर मूर्त्तिं कुर्य्यादित्यर्थः । श्रीप्रश्नो मत्स्यपुराणीयः ग्रन्थः ।

२ (†) मन्त्रो यथा—'कुविदङ्ग यवमन्तो यवं चिदयथा दान्त्यनु पूर्व्वं वियूय इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं यजन्ति' । शुक्ल, यजुः १०।३२ । कुबेर इत्यस्य वायु-मार्कण्डेय पुराण-श्रीमद्भागवतेष्वस्ति । [illegible] देव [illegible] । [illegible] धनेश्वरः । उत्तरदिक्पतिश्च ।

३ (‡) 'कामीश्वरोभवे'दिति क्वचिदादर्शे ग्रन्थे पाठः ।

**दान मन्त्रस्तु—**

उत्तराशापते देव कुवेर नर वाहन ! ।
पद्म शङ्ख निधीनां त्वं पतिः श्रीकण्ठ वल्लभः ।।
अदानेन यथा प्राप्तं दारिद्र्यं मम दुःखदम् १(*) ।
तत् सर्व्वमात्म दानेन पापमाशु विनाशय ।। इति
एवं कुवेर दानं यः करोति विधि पूर्व्वकम् ।
धनदेन समोमर्त्त्यं धनमाशु प्रजायते ।।
इति दारिद्र्यहर कुवेर दानम् ।।

—*—

## (१५१) अथात्म प्रतिकृति दानम् ।।

—*—

360. **भविष्योत्तरे, श्रीकृष्ण उवाच—**

आत्म प्रतिकृतिर्नाम यच्चोक्तं कस्यचित् पुरा २(†) ।
तत्तेऽहं सम्प्रवक्ष्यामि दान मान-विवर्द्धनम् ।।
दान कालः सदा तस्य मुनिभिः परिकीर्त्तितः ।
पुण्यैः पुण्य दिनं पार्थ प्राप्यते जीवीतेऽचले ।।
हैमीं प्रतिकृतिं भव्यां कारयित्वा ततो नृप ! ।
अभीष्ट वाहन-गता मिष्टालङ्कार-संयुताम् ।।
अभीष्ट लोक सहितां सर्व्वोपस्कर संयुताम् ३(‡) ।
तत्र क्षौम-पट्टी वस्त्रै श्छादितां स्रग्विभूषिताम् ।।
कुङ्कुमेनानुलिप्ताङ्गीं कर्पूरागुरु वासिताम् ।
स्त्री चेद्ददाति शयने शयितं कारयेत् स्वयम् ।।
यद्यदिष्टतमं किञ्चित तत्सर्व्वं पार्श्वतो न्यसेत् ।
उपकारकरं स्त्रीणां पुरुषाणाञ्च तद्भवेत ।।

---

१ (*) अदानेनेत्यत्र 'दानाद्येन' इति हेमाद्रीयः पाठः ।
२ (†) यच्चोक्तमित्यत्र 'यन्नोक्तमिति' ,, ,,
'जीविते चले' इति च पाठान्तरम् । चले,—अस्थिर जीविते इत्यर्थः । तथाहि,
'प्रकृतिर्मरणं शरीरिणाम्' इति ।
३ (‡) 'अभीष्ट लोकसहितां प्रियजन संहिता मित्यर्थः' इति हेमाद्रि कृतोऽर्थः ।

तत सर्व्वं स्थापयेत् पार्श्वे स्वयं सञ्चिन्त्य चेतसि ।
एतत् सर्व्वं मेलयित्वा स्वे स्वे स्थाने नियोजेत १(*) ॥
ततः शुक्लाम्बरः स्नातो गृहीत कुसुमाञ्जलिः २(†) ।
इममुच्चारयेन्मन्त्रं विप्रस्य पुरतः स्थितः ॥

## स यथा—

आत्मनः प्रतिमा येच सर्व्वोपस्करणैर्युता ॥
सर्व्वरत्न-समायुक्ता तव विप्र निवेदिता ।
आत्मा शम्भुः शिवः शौरिः शक्रः शिव गुणैर्युतः ॥
तस्मादात्म-प्रदानेन ममचात्मा प्रसीदतु ।
इत्युच्चार्य्य ततो दद्याद्ब्राह्मणाय युधिष्ठिर ! ॥
ब्राह्मणश्चाथ गृह्णाति 'कोदादिति'च कीर्त्तयन् ३(‡) ।
ततः प्रदक्षिणी कृत्य प्रणिपत्य विसर्ज्जयेत ॥
विधिनानेन राजेन्द्र दानमेतत प्रयच्छति ।
यः पुमानथवा नारी शृणु यत फलमाप्नुयात ॥
साग्रं( र्द्धं )वर्षशतं जीवेत सर्व्वभोग समन्वितः ।
यत्रैवोत्पद्यते जन्तुः प्राप्त कर्म्म क्षयक्षणम् ॥
तत्रैव सर्व्वकामानां फलभाक् स भवेन्नृप ! ।
इष्टबन्धुजनैः सार्द्धं न वियोगं कदाचन ॥
प्राप्नोति पुरुषो राजन् स्वर्गं चानन्त मश्नुते ।
यश्चात्मनः प्रतिकृतिं वरवाहन-स्थाम्,
हैमीं विधाय धनधान्य समाकुलाञ्च ।
सोपष्करां द्विजवराय ददाति भक्त्या,
चन्द्रार्कवद्दिवि विभाति सरोज हंसः ४(०) ॥

इत्यात्मप्रतिकृति दानम् ॥

—※—

१ (*) 'पूजयित्वा लोक पालान् प्रहान् देवीं विनायकम्'—देवीशब्दं नाव श्रीदुर्गीच्यते विनायक-साहचर्य्यात् इत्यधिक पाठः चतुर्वर्ग चिन्तामणौ ।

२ (†) 'स्नात' इत्यत्र 'स्नात्वा' इति हेमाद्रिधृतः पाठः । सच, मन्त्रः प्रतिमूर्त्ति विषयश्च ।

३ (‡) 'कोऽदादिति' वाजसनेय-प्रसिद्धोमन्त्रः । स च कामस्तुतिरिति कथ्यते । शुक्लयजुर्वेदे । अ: ७, ४८ ।

४ (०) 'स राजराज'इति हेमाद्रीयः पाठः ।

## (१५२) अथ चतुर्म्मूर्त्ति दानम् ।

—*—

361-362. **हेमाद्रौ, ब्रह्माण्डे,—ब्रह्मोवाच ।**

शृणु नारद भद्रन्ते दानं सर्व्वाघ नाशनम् १(*) ।
चतुर्मूर्त्ति विधानन्तत् स्त्रीणां मङ्गल कारणम् ॥
धन्यमारोग्यमायुष्यं भुक्ति मुक्ति फलप्रदम् ।
पुत्रदं श्रीकरं पुण्यं अभीष्ट फलदं शुभम् ॥
सर्व्वेषु पुण्यकालेषु चन्द्र सूर्य्य ग्रहादिषु ।
देवागारादि देशेषु गृहे वा दान माचरेत् ॥
चतुरस्रां समां भूमिं लिप्तां गोमय वारिणा ॥
चतस्र स्तत्र लेखाः स्युः प्राच्योदीच्याश्च ताः समाः ।
नव कोष्ठानि तत्र स्युः कोणकोष्ठानि वर्जयेत् ॥
तत्र तेषु चतुर्मूर्त्तिः चतुर्द्दिक्षु निवेशयेत् ।
प्रागाद्युत्तर पर्य्यन्तं जातरूपमयीः शुभाः ॥
श्वेत तण्डुल पद्मेषु पुष्पवत्सु निवेशयेत् ।
पुरतोवासु देवञ्च सङ्कर्षण मतःपरम् २(†) ।
प्रद्युम्नञ्चानिरुद्धञ्च चतुर्मूर्त्ति यथाक्रमम् ॥
शङ्ख-चक्र-गदापाणिं पीतवासम मच्युतम् ।
श्रीवत्साङ्कं चतुर्व्वाहुं केयूर मुकुटोज्ज्वलम् ॥
नीलाम्बर धरं देवमनन्त मूसलायुधम् ।
सङ्कर्षणं चतुर्वाहुं कटकादि विभूषणम् ॥
प्रद्युम्नञ्चानिरुद्धञ्च शङ्खचक्र गदाधरौ ।
पीत श्वेताम्बर धरौ केयूरादि विभूषितौ ॥

---

१ (*) हेमाद्रौ 'ऋषयः सर्व्वमासीनाः नैमिषारण्यवासिनः'—इत्यारभ्य 'यथाह भगवान् ब्रह्मा नारदस्य पितामहः' इत्यन्तोऽधिकः पाठोऽस्मिन् विषयेऽस्ति। 'निमिषे नैमिषक्षेत्रे ऋषयः सनकादयः' इत्यादि श्रीमद्भागवते पुष्कलंतत्त्वमस्ति ।

२ (†) एक एव भगवान् वासुदेवः, सङ्कर्षण-प्रद्युम्न-अनिरुद्धादिभेदेन चतुर्धा भिद्यते। 'एकं सद्विप्रा बहुधा वदन्ति' इत्यादि वाजसनेयश्रुति प्रसिद्धोमूर्त्तिभेदः। 'एकोऽहं बहुस्यामितिच' उपनिषदि। 'बहुधात्ममूर्त्तिरिति' श्रुतौच ।

एवं कृत्वा चतुर्मूर्त्ति चतुर्व्वाहुं समर्च्चयेत् ।
पलार्द्धेन सुवर्णेण यथाशक्ति विनिर्म्मितम् ॥
प्रागाद्युत्तर पर्य्यन्तं देवाना मर्च्च न क्रमः ।
स्व स्व मन्त्रेण देवानामाराधन मनुक्रमात्
स्नानं वा सोयुगं चार्घ्यं पाद्यमाचमनीयकम् ।
गन्ध-सुमनसौ धूपं दीपं नैवेद्यमेवच ॥
धारात्रयं शुद्ध जलै स्ताम्बुलञ्च निवेदयेत् ।
परितो लोकपालांश्च गन्धादिभि रथार्च्चयेत ॥
प्रदक्षिण त्रयं कृत्वा गृहीत कुसुमाञ्जलिः ।
उद्धास्य विप्रानाराध्य दद्यान्मत्र मुदीरयेत् ॥

## ते मन्त्रा यथा—

नमोऽस्तु बासुदेवाय जगतां पतये नमः ।
तव संकीर्त्तनाद्दानाच्छ्रेयः स्यात्तु सदा मम ॥
सङ्कर्षण नमस्तेऽस्तु जगत्स्थित्यन्त कर्म्मणे ।
तव देव प्रदानेन सर्व्वपाप क्षयो भवेत् ॥
प्रद्युम्नायाखिलेशाय भक्तानां दुःखहारिणे १(*) ॥
सदा नमोऽस्तु जगतः स्थितिकर्त्रे नमोनमः ॥
तवमूर्त्ति प्रदानेन ममपापं व्यपोहतु ।
अनिरुद्धाय देवाय विष्णवे परमात्मने ॥
त्वं देव दानतोऽनन्त सर्व्वपापं प्रणाशतु ॥

## इति दानमन्त्राः ॥

एवं दद्याच्चतुर्मूर्त्तिं श्रद्धायुक्तश्च नारद ! ।
नारी वा पुरुषोवाथ यथोक्त फल मश्नुते ॥
इत्याह नारदायैवं ब्रह्मा लोक पितामहः ।
यथा ममापि तत्सर्व्वं अब्रुवन् मुनि सत्तमाः २(०) ॥

इति चतुर्मूर्त्ति दानम् ॥

—*—

१ (*) 'नमोऽस्तुदेवदेवाय भक्तानामार्त्तिहारिणे ।
सदा नमोऽस्तु जगतः सृष्टिस्थित्यन्तहेतवे' ॥ इति हेमाद्रौधृतः पाठः । 'सर्व्वपा प्रणाशय' इत्यं पाठान्तर मस्ति ।

२ (०) 'समापितन्' इत्यं पाठान्तरमस्ति ।

# (१५३) अथ पञ्चमूर्त्ति दानम् ॥

—*—

363. **ब्रह्माण्ड पुराणे—**

अथ दानं प्रवक्ष्यामि पञ्चमूर्त्तिरिति श्रुतम् ।
यत कृत्वा पुरुषः स्त्रीवा सर्व्वसिद्धि मवाप्नुयात् ॥
यत्पापं मनसा वाचा कर्म्मणाच पुरा कृतम् ।
जन्मान्तर सहस्रेषु तन्नाशं याति सर्व्वतः ॥
शृणु देवर्षे ! दानन्तु सर्व्वपाप प्रणाशनम् १(*) ।
दानमारोग्यमायुष्यं श्रीकरं भुक्ति मुक्तिदम् ॥
चन्द्र सूर्य्यग्रहेवाथ विषुवत्ययनादिषु ।
पुण्यकालेषु सर्व्वेषु गृहेतीर्थेऽथवाचरेत् २(†) ॥
आचार्य्यं वरयेद्विप्रं तस्या नुज्ञामवाप्य च ।
विद्या-विनय-सम्पन्नं सर्व्वं तेनैव कारयेत ॥
लेपयेत्तु समां भूमिं गोमयेनोदकेन वा ।
चतस्रस्तत्र रेखाः स्युः प्राच्योदिच्यस्तु ताः समाः ॥
त्रिहस्तमात्रा स्ताः सर्व्वा स्तत्रस्यु र्नवकोष्ठकाः ।
तत्र पञ्चैव संग्राह्याः चतुष्कोणानि वर्ज्जयेत ॥
तेषु पञ्चसु कोष्ठेषु प्रत्येकं कमलं लिखेत ।
श्वेततण्डुल पुञ्जेषु अष्टपत्रं सकर्णिकम् ॥
तेषु तण्डुल पद्मेषु पञ्चमूर्त्ती र्निवेशयेत ।
सुवर्णनिर्म्मिताः पञ्च मूर्त्तीः कृत्वा विधानतः ॥
ईशं सोवर्णमासीनं केयूर मुकुटोज्ज्वलम् ।
चतुर्बाहुमुदाराङ्गं कटकादि विभूषितम् ॥
दक्षिणे परशुं हस्ते सव्येतु मृगपोतकम् ।
अभयं दक्षिणे सव्येशूलं नेत्रत्रयं न्यसेत ॥
सद्योजातं वामदेव मघोरं पुरुषन्तथा ।
सुवर्णे नैव कुर्व्वीत प्रदानादर्द्धमानतः ॥

---

१ (*) 'शृणुष्व तत्र देवर्षे दानं सर्वाघनाशनम्' इति हेमाद्रौ पाठः ।

२ (†) 'गृहे वायतनेषु वे'ति चतुर्वर्गचिन्तामणौ पाठः ।

सद्यं पश्चादुत्तरे वामदेवं, तथाचान्यद्दक्षिणेचाप्यघोरम् १ (*) ।
तच्छब्दोक्तं पुरुषं पूर्व्व कोष्ठे, तेषां मध्ये चैव मीशान मेव ॥
स्नानं वस्त्रं चार्घ्यं पाद्याचमनीयं, गन्धपुष्पे धूपदीपौ हविष्यम् ॥
अभ्यर्च्चिताः पञ्चमूर्त्तीः क्रमेण, मन्त्रैः पञ्च ब्रह्माभिर्मान पूर्व्वम् २(†) ।
सम्पूज्य चै वं विधिनोदितेन, शच्या(क्रा)दि देवांश्च यथाक्रमेण ॥
सद्योजातादि लक्षणमुक्तं पुराणोक्ततिल—
पर्व्वतदाने हेमाद्रौ द्रष्टव्यम् ।
तेनैव विप्रेण च सर्व्वमेतत्, कृत्वैव दानं स्वयमेव कुर्य्यात् ।
दानकाले तु सम्प्राप्ते दाता नारी नरोऽथवा ॥
स्नापितो गुरुणा तेन मन्त्रपूतैः कुशोदकैः ।
अभ्यर्च्च्य विप्रं गन्धाद्यैः मन्त्रानेता नुदीरयेत् ॥
प्रत्येकमेका दातव्या देवमूर्त्तिरनुक्रमात् ।
नमोऽस्तु सद्योजाताय भवाय भवसंज्ञिने ॥
भवभङ्गो भवेन्मह्यन्तवरूप प्रदाननः ।
सोमाय वामदेवाय शिवाय शिवरूपिणे ॥
सदा मे शिव मेवास्तु तवरूप प्रदाननः ।
नमोऽघोराय घोराय जगत् संहृति कर्म्मणे ॥
शरणं त्वां प्रपन्नोऽसम्यशङ्कं मम शङ्करः ।
पुरुषाय पुराणाय हराय वरदायच ॥
तस्य रूप प्रदानान्मे श्रेयसेऽस्तु नमोऽस्तु ते ।
ईशानो जगतामीशो देवानामभयङ्करः ॥
रक्ष त्वं शेषभूतानां ईशोमां शरणं गतम् ।
विप्र दक्षिण मावृत्य गृहीत कुसुमाञ्जलिः ॥
प्रणिपत्य ततो दद्या दन्यस्मै वा प्रदापयेत् ।
दक्षिणां गुरवे दद्यात् सुवर्णं चैव वाससी ॥
एतन्नरोऽथवा नारी नारदेह समाचरेत् ।
मुच्यते सर्व्वपापेभ्यः शिव सायुज्य माप्नुयात् ॥

१ (*) सद्यं-सद्योजातमित्यर्थः, नामैकदेशग्रहणे पूर्णनामग्रहणात् । यथा भीमः—भीमसेन इति ।
२ (†) पञ्चब्रह्ममन्त्राः सद्योजातादिमन्त्राः तैत्तिरीयाणां तदुपनिषदि च प्रसिद्धाः ।
महानारायणोपनिषद्यपि ते सन्ति ।

तत्र सुतउवाच—

इत्येव मृषयोदानं नारदाय चतुर्म्मुखः ।
यथोवाच तथाप्रोक्तं मयाच पञ्चमूर्त्तिकम् ॥

इति शिवपञ्चमूर्त्तिदानम् ॥

—*—

## (१५४) अथ द्वादशादित्य दानम् १(*) ।

—*—

364. **ब्रह्माण्डपुराणे—**

शृणु नारद भद्रन्ते दानमादित्य संज्ञितम् ।
यथोक्तं लोकगुरूणा विष्णुना प्रभविष्णुना ॥
कर्त्तुःपापहरं पुण्यं आयुष्यं श्रीकरं शुभम् ।
आरोग्यं सर्व्वमाङ्गल्यं दुःस्वप्नाद्भुत नाशनम् ॥
सर्व्वशान्तिकरं ह्येतत् सर्व्वसिद्धि फलप्रदम् ।
चाक्षुष्यं सर्व्वरोगघ्नं भुक्ति मुक्ति फलप्रदम् ॥
विषुवत्ययने राहु-ग्रहणे चन्द्र सूर्य्ययोः ।
जन्मर्क्षे सौर वारे वा पञ्चदश्यर्क संक्रमे ॥
सप्तम्यां वाथ नक्षत्रे सावित्रेऽद्भुतदर्शने २(†) ।
दुःस्वप्नदर्शने कुर्य्याद् दानमादित्य संज्ञितम् ॥
देवालये नदीतीरे तड़ागे वरुणालये ।
अन्येषु पुण्यदेशेषु देवदानं समाचरेत् ३(‡) ॥

१ (*) द्वादशादित्याः, यथा-कश्यपस्यादिति-पत्न्यां जाताः पुत्रास्ते ।
—विवस्वान्, अर्यमा, पूषा, त्वष्टा, सविता, भगः, धाता, विधाता, वरुणः, मित्रः, शक्रः, उरुक्रमः, इति पुराणे ।

२ (†) अद्भुत दर्शनं, दुर्निमित्तम् । महादुर्भिक्ष-महामारी-संक्रामकरोगप्रदम् । एतद्वृत्तं वैद्यके, ज्योतिषे, पुराणेषु, अद्भुतसागरेऽपि । आचरेच्च शान्तीः ।

३ (‡) अन्येषु प्रयाग-कुरुक्षेत्र-पुष्कर-काश्यादिषु ।

आलिप्य वै द्वादशहस्त दैर्घ्याम्,
क्षितिं तथा गोमय-संयुताद्भिः ।
तस्मिन् सितैस्तण्डुल-पुञ्जकैश्च,
विस्तारयेद् द्वादशपङ्कजानि ॥

प्रादेश-मात्राणि शुभानि तानि,
सकर्णिकान्यष्टदलेषु तेषु ।
हिरण्यरूपाणि रवेर्निधाय,
यथाक्रमादुत्तरतोऽपवर्गः ॥

प्रत्यङ्मुखान् प्राङ्मुख एव देवान्,
तच्चूर्णगन्धादिभिरर्च्चयित्वा ।
दद्यादपूपं सघृतं गुड़ाक्तम्,
वस्त्रैरथावेष्ट्य यथाक्रमेण ॥

प्रत्येकमेकं द्विजपुङ्गवानाम्;
आराध्य गन्धादिभिरादरेण ।
सम्प्रीयतामित्य प्यथ च क्रमेण,
प्रत्येकमुच्चार्य तदीय नाम ॥

धाताच मित्रश्च ततः परेण,
मार्त्तण्ड नामाच तथार्य्यमाच ।
शक्रश्च देवो वरुण स्तथासौ,
भगो विवस्वान् नवम स्तथैषाम् ॥

आदित्यनामा सविता तथान्यः,
त्वष्टा तथैकादशमश्च तेषाम् ।
विष्णु स्तथा द्वादशमस्तु मन्त्रैः,
आराधये द्देववरान् द्विजांश्च ॥

पुरा देवर्षये दानं प्रोक्तं कमल-योनिना १(*) ।
तथा मयापि युष्माकं प्रोक्तं मुनिवरोत्तमाः ॥

द्वादशादित्य प्रतिमालक्षणं ब्रह्माण्डदाने उक्तम् ।

इति द्वादशादित्य दानम् ॥

—*—

१ (*) 'मुनिवरोत्तमैः' इत्यपि पाठान्तरम्, अस्य ग्राह्यतत्वं वक्ति-पुरेति ।
नवैवमधुना मयैवोच्यते ।
तथाच—'पूर्वैः पूर्व्वतरैः कृतम्' । इति ।
कलावपि चाभ्युदयाय निःश्रेयसायच कार्य्यम् ।

## (१५५) अथ चन्द्रादित्य दानम् ।

—*—

365. **विष्णुधर्म्मोत्तरे, श्रीभगवानुवाच—**

अतःपरं प्रवक्ष्यामि दानं राजन् महेशयोः १(*) ।
यद्दत्वातु बली राजा शक्रराज्यमवाप्नुहि २(†) ॥
शक्रश्च बलिने राज्यं दत्वा पुन रवापह ।
चन्द्र सूर्य्योपरागेच विषुवे अयने तथा ॥
चन्द्रक्षयेच द्वादश्यां वैशाख्यां पुत्र जन्मनि ।
कार्त्तिक्याञ्च महामाघ्यां दशम्यां जयायान्तथा ३(‡) ॥
चन्द्रादित्यौच दातव्यौ सूर्य्यः सौवर्ण उच्यते ।
शुद्धस्य रजतस्यैव मण्डलं हिम रोचिषः ॥
द्वादशाङ्गुल वृत्तन्तु उभयोरपि मण्डलम् ।
वृत्तौ पद्मसमाकारौ मध्ये चैवतु कर्णिकाम् ॥
भानुन्ताम्रमये पात्रे घृत पूर्णंतु निक्षिपेत् ।
सोमं शङ्ख-क्षीर-पूर्णे उपरि स्थापयेद्बुधः ॥
सूर्य्यन्तु रक्तकुसुमैः सोमं शुक्लै स्तथैवच ।
आदित्याय तु धूपं वै सुगन्धिश्चैव दापयेत ।
कुङ्कुमन्तु पतङ्गाय दीपश्चैव घृतेनतु ॥
एवं सम्पूज्य यत्नेन चन्द्रादित्यौ पृथक् कृतौ ।
अमृत मूर्त्तये सोमं नमोऽन्ते नव पूजयेत् ॥
ॐ भास्करायेति वै सूर्य्यं नमोऽन्तेन पुनः पुनः ।
आहूय ब्राह्मणं भक्त्या वेदवेदाङ्ग-पारगम् ॥
कुटुम्बिनं दरिद्रञ्च आहिताग्निन्तथैवच ।
रक्तेन वाससाच्छाद्य कुङ्कुमेनानुलिप्य च ४(०) ॥

---

१ (*) अत्र दानं—महेशयोरित्यर्थः 'अवापह' (१) इति आदर्शपुस्तकान्तरधृत: पाठः ।
२ (†) (२) अवाप्नुहि, इत्यत्र 'ममापह' इति अन्यादर्शग्रन्थधृत: पाठः ।
३ (‡) 'कार्त्तिक्याञ्च महामाघ्यां सप्तम्यां जयायान्तथा' इति हेमाद्रिधृत: पाठः ।
महामाघ्यां—माघमासस्यपूर्णिमायाम इति ।
४ (०) 'अनुलेपयेत्' इति आदर्शग्रन्थान्तरधृत: पाठः ।

सम्पूज्य पुष्पधूपैश्च द्विजं सूर्य्यमिवापरम्।
रविविम्बं चन्द्रविम्बं घृतस्थन्तु निरीक्षयेत्॥
समर्पयेद्ब्राह्मणाय मन्त्रेणानेन भूमिप!।
रुक्मञ्च पुरुषञ्चैव पूर्णं पुष्करमेवच॥
त्रयीतु विद्यासाङ्गांतु यस्याङ्गं विश्वरुपिणः।
स वै दिवाकरोदेवः प्रीयतां वि प्रमाच्चिरम्॥
एवमुच्चार्य्य भानुन्तु ब्राह्मणाय निवेदयेत्।
क्षीरजं देव देवञ्च द्विजराजं तथैव च।
अमृतमूर्त्ति शीतांशु प्रयच्छामि द्विजोत्तम!॥
गायत्र्या चैव सूर्य्यस्य अर्हणं जायते विभो!।
सोम-सूर्य्य-स्तवं मन्त्रं जपन् शुद्धेन चेतसा॥
एवं चन्द्रं रविन्दत्वा वलीराज्यमवापह।
सर्व्वं तेनतु दत्तं स्या योदद्याच्चन्द्रभास्करौ॥
पूज्यते सिद्धगन्धर्व्वैः स्वर्गलोके महीयते।
इति चन्द्रादित्य दानम्॥

*—

## (१५६) अथ काल पुरुष दानम् १(*)।

—*—

366. **भविष्योत्तरे, श्रीकृष्णउवाच—**

दानानि बहुरूपाणि कथितानि मया तव।
पुनरेव प्रवक्ष्यामि यद्यस्ति तव कौतुकम्॥
कथितानि मया तुभ्यं कथयिष्याम्यहं तव २(†)।
महातीर्थेन सिद्ध्यन्ति प्रयच्छन्ति महत् फलम्॥
काम्योदानं विधिकृत उत्तमः कामवर्ज्जितः ३(‡)।
मध्यमस्तु तदर्द्धेन क्रियमाणं यथा तथम्॥

१ (*) 'तत्रादौ युधिष्ठिरउवाच' इति हेमाद्रौ पाठः।

२ (†) एवमपि हेमाद्रौ पठ्यते।

३ (‡) ···· विधिः पाठे क्रियमाणो यथा तथम' इति चतुर्वर्ग चिन्तामणौ।

फलाय मुनिभिः प्रोक्तोविपरीतो भयाय च ।
ज्ञेयं निष्कशतं पार्थ ! दानेषु विधिरुत्तमः ॥
मध्यमस्तु तदर्द्धेन तदर्द्धेनाधमः स्मृतः १(*) ।
एवं वृक्षे रथेन्द्रेच धेनोः कृष्णाजिनस्यच ॥
अशक्तस्यापि कृष्णोऽयं पञ्चसौवर्णिको विधिः ।
अतोऽप्यल्पेन योदद्याद् महादानं नराधिप ! ॥
प्रतिगृह्णाति वा तस्य दुःख शोक भयापहम् ।
पुण्यन्दिनमथासाध्य भूमिभागे समे शुभे ॥
चतुर्द्दश्यां चतुर्थ्याम्बा विष्ट्याम्बा पाण्डुनन्दन २(†) ।
विष्टि भद्राकरणम् ।
पुमान् कृष्णतिलैः कार्य्यो रौप्यदन्तः सुवर्ण-दृक् ।
सुवर्णादि परिमाणमत्र यथाशक्ति सम्पादनीयम् ।
खड्गोद्यत करो दीर्घो जवाकुसुम-कुण्डलः ॥
रक्ताम्बरधरः स्रग्वी शङ्खमाला विभूषितः ।
तीक्ष्नासि पुत्री बन्धेन विस्फारित कटीतटः ३(‡) ।
असिपुत्री-च्छुरिका ।
उपानद्युग-युक्ताङ्घ्रिः कृष्णकम्बल पार्श्वगः ।
गृहीत मांस-पिण्डश्च वामे करतले तथा ॥
एवं विधं नरं कृत्वा गृहीत कुसुमाञ्जलिः ।
यजमानः प्रसन्नात्मा इमं मन्त्रमुदीरयेत् ॥
सम्पूज्य गन्धकुसुमै र्नैवेद्यं विनिवेद्य च ।
ॐ सर्व्वं कलयसे यस्मात् कालस्त्वं तेनचोच्यते ॥
ब्रह्म विष्णु शिवादीनां त्वमसाध्योऽसि सुव्रत ! ।
पूजितस्त्वं मया भक्त्या पार्थिवश्च तथा सुखम् ॥

---

१ (*) 'तदर्द्धं वा वरः स्मृतः' इति चादर्श ग्रन्थान्तरस्थः पाठः ।

२ (†) 'विष्टिः कर्म्मकरे मूल्ये भद्राजूप्रेषणेषुच' इति हेमः ।
—'तृतीयादशमी शेषे तत् पञ्चम्योस्तु पूर्व्वतः । कृष्णेविष्टिः सितेतद्वत् तासां परतिथि ष्वपि' इति ज्यौतिषे ।

३ (‡) 'पत्री' ति चादर्शान्तर धृतः पाठः ।

यद्बुध्यते तव विभो तत् कुरुष्व नमोनमः।
एवं सम्पूजयित्वातु ब्राह्मणाय निवेदयेत्॥
ब्राह्मणं प्रथमं पूज्य वासोभिर्भूषणै स्तथा।
दक्षिणां भक्तितो दद्यात् प्रणिपत्य विसर्ज्जयेत्॥
दक्षिणात्र पूर्व्वोक्त-निष्कशतादिका।
अनेन विधिना यस्तु दानमेतत् प्रयच्छति।
न च मृत्युभयन्तस्य न च व्याधिकृतम्भवेत्॥
भवत्यव्याहतैश्वर्य्यः सर्व्वबाधाविवर्ज्जितः १(†)।
एवं कृते नरो देवं चिरं जीवेन्नसंशयः॥
देहान्ते सूर्य्यभवनं भित्वा याति परं पदम्।
पुण्यक्षयादिहागत्य राजा भवति धार्म्मिकः २(‡)॥
सत्रयाजी श्रिया युक्तः पुत्रपौत्र-समन्वितः।
सम्पूज्य कालपुरुषं विधिवद्द्विजाय.
दत्वा शुभाशुभ-फलोदय-हेतुमुतम्।
रोगातुरे सकलदोशमयेऽत्र देहे,
देही न मोहमुपगच्छति तत् प्रभावात॥

इति काल पुरुष दानम्॥

—*—

## (१५७) अथ कालचक्र दानम्।

—*—

367. मृत्युञ्जये—

चक्रं रौप्यमयं कृत्वा मुक्तारश्मि मयात्मकम्।
कृत्वा मूर्द्धिन शरच्चन्द्र-रश्मिमध्यान्तरस्थितम्॥
त्वङ्मांसानितु रौप्याणि गात्रेषु च समन्ततः।
एवं ध्यानवतस्तस्य स चन्द्रः कृष्णतां व्रजेत॥

१ (†) 'भव्याहतैश्वं' इति, अन्यादर्शे धृतः पाठः।
२ (‡) इति काल पुरुष दान फल कथनम्।

ततोऽप्यनन्तरं पश्चात् स्थित्वा विप्र प्रदक्षिणम् ।
तं गृहीत्वा व्रजेद्दूरं अदृष्टत्वमपि व्रजेत ॥
स्वयञ्चामृतसङ्घात-पूर्णकाय-स्थिति-स्थितः ।
कालचक्रमिदं नाम्ना दानं मृत्यु-विनाशनम् १(*) ॥
इमन्ते राजतं चन्द्रं रश्मिजाल-समाकुलम् ।
अपमृत्यु-विनाशाय ददामीति समुच्चरन् ॥
सुवर्णं दक्षिणायुक्तं ब्राह्मणाय निवेदयेत ॥
एवं कृते विश्येत अपमृत्यु र्न संशयः ॥
ततोस्तस्मात् सदादेयमपमृत्यु-भयान्वितैः ।
ज्वरादि रोगग्रस्थैर्वा महापत्-पतितैरपि ॥
ततोगृह्योक्तविधिना स्थापयेज्जातवेदसम् ।
जुहुयात् फलनाम्नातु शतमष्टोत्तरं घृतैः २(†) ॥
ततस्तु भोजयेद् भक्त्या विप्रान् द्वादशसंख्यकान् ३(‡) ।
स्वयमक्षारलवणं भुञ्जीत सकृदेवहि ॥
एवं कृतेनरोन्यूनं चिरञ्जीवेन्नसंशयः ।
इति काल चक्रदानम् ॥

—*—

## (१५८) अथ यम दानम् ।

—*—

368. **हेमाद्रौ, मृत्युञ्जये—**

लोह पात्रस्थितं कांस्यं तत्र पद्मन्तु राजतम् ।
तस्मिन् कालेश्वरः स्वर्णैः पुरुषाकारतां गतः ॥

369. **यमरूपमुक्तं ब्रह्माण्डदाने ।**

**महामहिषमारूढो दण्डहस्तो महाबलः ४(०) ॥ इत्यादि ।**

---

१ (*) दानमित्यत्र 'मृ'मिति पाठमंयन्त्रान्तर कृतः पाठः ।
२ (†) 'शतमष्टोत्तरान्वितैः' इति " " " ।
३ (‡) 'संख्यया' इति हेमाद्रीयः पाठः ।
४ (०) 'यमोदण्डधरे ध्याऽऽर्च्यं संयमी यमजिऽपिच' इति क्वचित् ।

वस्त्रालङ्कार-संयुक्तो भयदास्त्राणि सर्वतः ।
त्रिलोहाकार-पुरुषैः कालदूतैश्च पार्श्वतः ॥
भयदास्त्राणि - खड्ग-च्छूरिकादीनि ।
त्रिलोहं—ताम्र-कांस्य-पित्तलाख्यम् ।
कालदूताः—पुरुषाकृतयो दण्डहस्ता त्रयः ।
कृत्वाच महिषं पृष्ठे तन्दद्यादूयममालपन् १(*) ॥
अष्टम्याञ्च चतुर्दश्यां करोति विधिनातु यः ॥
स मुच्यते ध्रुवंनाशाद् दत्वा घृतघटोत्तरम् ।
घृत घट उत्तरेऽदक्षिणस्थाने यस्येति दान विवेके ।
अन्ये सुवर्णं दक्षिणे इत्याहुः २(†) ।

इति यमदानम् ॥

—*—

## (१५६) अथपापपुरुष दानम् ।

—*—

370. **स्कान्दे, नागर खण्डे—**

371. **आनर्त्त उवाच ।**

मूर्खत्वाद्वा प्रमादाद्वा कामाद्वालस्यतोऽपिवा ।
योनरः कुरुते पापं प्रायश्चित्तं करोति न ॥
तस्य पाप विशुद्ध्यर्थं किञ्चिन्मे वद-सत्तम !
येन मुक्तोभवेन् पापाद् यदि तुष्टोऽसि मे प्रभो ॥

372. **भर्त्तृ-यज्ञ उवाच—**

अज्ञानाज् ज्ञानतो वापि यत्पापं कुरुते नरः ।
पापाख्य—पुरुषदानेन मुच्यते नात्र संशयः ॥

---

१ (*) 'यममालपन्निति—महिषपृष्ठस्थित लौहपात्रोपरिस्थितकांस्यपात्रनिविष्ट पलाष्टकं यमरूप-मुद्दिश्य यमनामान्युच्चारयन्नित्यर्थः ।

२ (†) सुवर्णं दक्षिणा सर्व्वदानेषु प्रशस्ता । 'तस्मात् सर्वेषु दानेषु सुवर्णं दक्षिणेष्यते' ।

" घटदक्षिणे उत्तरे इति वा पाठः स्यात् ।
तथाकारः प्रश्लेषः स्यात् ।

373. **आनर्त्त उवाच—**

विधिना केन देवोऽसौ पापपिण्डो महामुने ! ।
ततो विस्तारतोब्रूहि येन वक्ष्याम्यहं द्रुतम् १(*) ॥

374. **भर्त्तृयज्ञ उवाच—**

मन्वादि-दिवसे प्राप्ते यदा सूर्य्य दिनं भवेत ।
तदास्य मूर्त्तिः कर्त्तव्या हैमी विप्राय तुष्टये ॥
तुलापुरुषवत् कार्य्यं कुङ्कुममुभयोर्विधिः ।
परं होमः प्रकर्त्तव्यो गायत्र्या केवलं नृप ! ॥
संस्नाप्य पञ्चगव्येन ततः स्नात्वा मनुं जपेत् २(†) ।
संस्नाप्य प्रतिमामितिविशेषः ।
पञ्चविंशति संख्याभिः श्वेतपुष्पैर्नराधिप !

ॐ पृथिव्यै नमः । यमाय नमः । तेजसे नमः । वायवे नमः । आकाशाय नमः । श्रोत्राय । त्वचे । चक्षुषे । जिह्वायै । घ्राणाय । शब्दाय । स्पर्शाय । रूपाय । रसाय । गन्धाय । वाचे । पाणिभ्याम् । पादाभ्याम् । पाय्वे । उपस्थाय । मनसे । बुद्ध्यै । अहङ्काराय । आत्मने । परमात्मने । इति ।

एवं सम्पूज्य राजेन्द्र ! कर्पूरं दीपमाहरेत् ।
'धूरसीत्यथ मन्त्रेण ह्यग्निर्ज्योतीति दीपकम् ३(‡) ॥
दद्याद् 'युवा सुवासेति'ति वासांसि परिधापयेत ४(०) ।
ततो ब्राह्मणमासीनं वेदवेदाङ्गपारगम ॥
प्रक्षाल्य चरणौ तस्य वस्त्राणि परिधापयेत् ।
कर्पूरकण्टकैश्चैव ह्यङ्गुलीयक भुषणैः ॥
भूषयित्वा तनुस्तस्य ततोमूर्त्तिं समानयेत् ।
मन्त्रेणानेन राजेन्द्र ! ततस्तस्मै निवेदयेत् ॥

---

१ (*) 'वक्ष्याम्यहं द्रुतम्' इति आदर्शग्रन्थान्तरधृतः पाठः । पाप पुरुष इति पापकृत् पुरुषो—जीवः । मन्त्रशास्त्रे भूतशुद्ध्या मन्त्रेण वामकुक्षिस्थं तन्दहेत् इति ।

२ (†) 'इमं' 'मनुं' 'शिव' जपेत् इत्यादयो लिखभेदाः सन्ति ।
—स्नात्वाभिपूजयेत् इति साधुपाठ आदर्शग्रन्थान्तरे ।

३ (‡) 'धूरसिधूर्वधूर्वन्तं' इत्यादि शुक्लयजुः—१।८।
" 'कटकैः कर्णपूरैश्च' इत्यपि भिन्नः पाठः ।
—अग्निर्ज्योतिर्ज्योतिरग्निः' इत्यादि शुक्लयजुः—३।९।

४ (०) 'युवा सुवासा' इत्यादि मन्त्रः प्रागुक्तः ।

### मन्त्रस्तु—

एष आत्मा मयादत्तः तव हेममयो द्विज !
यत्किञ्चिद्दुर्विहितं पूर्व्वं पापं मे नाशयाखिलम् ॥
ततस्तु ब्राह्मणो मन्त्रमिमं राजन् समुच्चरेत् ।
यदेतद्विहितं पापं त्वया पूर्व्वमयाहि तत् ॥
गृहीतं पूर्व्वरूपन्ते यतस्त्वं पापवर्जितः १(*) ।

### इति प्रतिग्रह मन्त्रः—

एवं दत्वा विधानेन ततो विप्रं विसर्ज्जयेत् ।
एवं कृत्वा ततस्तस्य दत्वाथ दक्षिणान्तथा ॥
यथा तुष्टिं समभ्येति ततः पापान्-जयत्यसौ ।
एवं कृते महाराज ! प्रत्यय स्तत्क्षणाद्भवेत ॥
शरीरे लघुतामेति ततो(पो)वृद्धिश्च जायते ।
स्वप्नेच वीक्षते रात्रौ सन्तुष्टमनसः स्थिताः ॥
स्त्रियः सितैर्व्वा वस्त्रैश्च श्वेतमाल्यानुलेपनैः ।
श्वेता गाश्च वृषोन्मत्ताः तीर्थानि विविधानिच ॥
एवन्ते सर्व्वमाख्यातं पापपिण्डस्य दीपनम् ।
श्रवणादपि राजेन्द्र ! सर्व्वपापैः प्रमुच्यते ॥
अन्यत्रापि महादानं पापपिण्डोहरेश्वरः ।
एवं जन्मकृतं पापं निजकायेन निर्म्मितम् २(†) ॥
शिवालये तदेवास्य सहस्रगुणितम्भवेन ३(‡) ।
इति पाप-पुरुष दानम् ॥

—*—

१ (*) 'यतस्त्वं पापनाशनः' इति आदर्शग्रन्थान्तरधृतः पाठः।

२ (†) एवमित्यत्र 'एक' इति पाठः आदर्शग्रन्थान्तरे अस्ति।

३ (‡) हेमाद्रौ, मार्कण्डेय उवाच—भगवान् केनदानेन इत्यादि श्लोकपञ्चकं अधिकं पठ्यते।

# (१६०) अथोदकुम्भ दानम् (*) ।

—*—

375. **शौनकीये,—मार्कण्डेयं प्रति नारद उवाच ।**

मार्कण्डेय शृणुष्वेदं ब्रह्मविष्णोः पुरानघ ।
यदाह भगवांश्छम्भु र्द्वयोपृष्ट स्तयोस्तथा १(*) ॥
श्रूयतामुदकुम्भाख्यं दानं वक्ष्यामि सुव्रतौ ।
यत्कृत्वा पुरुषः स्त्रीवा नयाति नरकं क्वचित् ॥
स्वर्ग्यं यशस्य मायुष्यं आरोग्यं पापनाशनम् ।
मम प्रीतिकरं पुण्यं युवयोश्च प्रियन्तथा ॥
वैशाख्यां पौर्णमास्याञ्च कार्त्तिक्यामथ तद्दिने ।
स्वजन्म दिवसे कार्यं दुःस्वप्नाद्भुत दर्शने ।
भूमौ गोमय-लिप्तायां उदकुम्भं न्यसेद्बुधः ।
पुष्पैःफलैश्च संवेष्ट्य वस्त्रेण सितरुपिणम् ॥
विधानेन तिलै र्मिश्रं गुडं तत्रैव निक्षिपेत् ।
धर्म्मराजं न्यसेद्देवं सौवर्णं शक्तितः कृतम् ॥
सुमुखं द्विभुजं देव मासीनं दण्ड हस्तकम् ।
वरदं कृपयायुक्तं भक्तानां हितकारकम् ॥
एवं शुभान् घटान् कृत्वा गन्धादिभिरथार्चयेत् ।
विप्रेभ्योदापयेत् कुम्भान् एभिर्मन्त्रै र्यथाक्रमम् ॥
'यमाय धर्म्मराजाय मृत्यवे चान्तकायच ।
वैवस्वताय कालाय सर्व्वभुत क्षयायच' २(†) ॥
एवमाराध्य तान् कुम्भान् दद्यादुदक पूर्व्वकम् ।
प्रियताम्भगवान् देवोमन्त्रान्ते समुदाहरेत् ॥

---

१ (*) 'यदाह'—इत्यत्र 'तदाह' इति हेमाद्रौ पाठः ।

२ (†) —'औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वैनमः' इति मन्त्र शेषः । एते चतुर्द्दश संख्यकायमा तर्पणेऽपि प्रसिद्धाः ।

उदकेन वारिणा पूर्णं कुम्भं स्वर्णादिनिर्मितं मित्यर्थः ।

विषुव संक्रान्तौदाने फलाधिक्यं शास्त्रे उक्तम् ।

एवं कुम्भ प्रदानेन देवदेवः स तुष्यति ।
कर्त्ता कारयिता स्वर्गं प्राप्नोतीति न संशयः ॥
नयाति नरकं घोरं न प्राप्नोत्यशुभं कचित् ।
मम स्वरूपी भगवान् प्रीतो भवति तस्य वै ॥
यः कुम्भदानं विप्रेभ्यो ददातिच यथाविधि ।
स गच्छेत् स्वर्गलोकन्तु नात्र कार्य्या विचारणा ॥

इति उदकुम्भदान विधिः ॥

—*—

## (१६१) अथ मकरदान विधिः ।

—*—

### 376. हेमाद्रौ, बौधायनः ।

कुर्य्यात्तु मकरं सम्यग्राजतं ताम्र मेवच ।
पल त्रयेण द्वाभ्यां वा यद्वैकेन शुभाकृतिम् ॥
पुच्छे रत्नानि देयानि कटिं रौप्येण कारयेत् ।
नेत्रे स्वर्णमये कार्य्ये जिह्वां रौप्यैः प्रकल्पयेत् ॥
पादयोः प्रक्षिपे त्तत्र घृत पात्रे पुरद्वयोः १(*) ।
कृष्णवस्त्रेण संवेष्ट्य चन्दनागुरु-चर्च्चितम् ॥
ताम्रेऽथ जल पात्रेऽथ स्थापयेन्मकरं शुभम् ।
ब्राह्मणं वृत्त सम्पन्नं वृद्धं दान्त मलोलुपम् ॥
वस्त्रैः कटक केयुरैः पूजयेदङ्गुलीयकैः ।
होमो वारुणदैवत्यै र्म्मन्त्राध्यायोक्त मार्गतः ॥
ततस्त्वौदारिके विप्रे मकरन्तन्निवेदयेत् २(†) ।
जलाधिदेव देवेश ! पश्चिमाशापते विभो ! ॥
उदरव्याधिनाशं मे कुरु दानेन तोषितः ।

इति मकरदानम् ॥

—*—

१ (*) (पद द्वयं) करद्वयोः, इति वा पाठद्वयं भिन्नमस्ति ।
२ (†) 'परमौदारिके' इत्यं पाठान्तरमस्ति ।

# (१६२) अथ लोकपालाष्टक दानविधिः ।

377. **ब्रह्माण्ड पुराणे—**

दानानामुत्तमं ह्येतत् सर्वसिद्धि करं परम् १(*) ।
करोति दानं नारी वा सायुज्यं ब्रह्मणोव्रजेत् ॥
विषुवत्ययने राहुर्ग्रहणे चन्द्रसूर्य्ययोः ।
अन्येषु पुण्यकालेषु जन्मर्क्षेषु विशेषतः ॥
देवालये नदीतीरे गृहे वा दानमाचरेत् ।
पुण्यकालेषु सर्व्वेषु पुराणोक्तेषु नारद ! ॥
चतुरस्रां समां भूमिं लिप्त्वा गोमयवारिणा ।
षट्करं चाष्टहस्तं वा दश द्वादश वा करान् ॥
प्राच्योदीच्यश्च कर्त्तव्या रेखाश्चतस्रकाः स्मृताः २(†) ।
नवकोष्टानि तत्र स्युः श्वेततण्डुलकु(पु)ञ्जकैः ॥
सितैरष्टदलैर्युक्तान् कमलान्विन्यसेच्छुभान् ।
जातरुपमयं देवं जगत् कर्त्तारमव्ययम् ॥
तेषां मध्यमकोष्टेतु कमलं विनिवेशयेत् (०) ।
इन्द्रमग्निं यमश्चैव निर्ऋतिं वरुणन्तथा ॥
वायुं सोमं तथेशानं प्रागादिषु क्रमान्न्यसेत् ३(‡) ।
जातरुपमयान् देवानष्टौस्वायुध-संयुतान् ।
त्रिपलाद्वा सुवर्णात्तु यथा शक्ति विनिर्म्मितान् ॥
ब्रह्मणोऽभिमुखान् सर्व्वान् सर्वेषु-विनिवेशयेत् ।
जातरूपान् स्वर्णमयान् यथाशक्ति विनिर्म्मितान् ॥
ब्रह्मणोऽभिमुखान् देवान् विनिवेश्यच वारिणा ४(+) ।
योऽसौ कारयिता-विप्र स्त्वेव मेतत् समाचरेत् ॥

---

१ (*) हेमाद्रौ 'ब्रह्माण्डपुराणे'-इत्यत्र भिन्न पुराणे इति पाठः ।
" —तत्रैवादौ 'ब्रह्मनारद इत्यारभ्य—'श्रीवरं शुभ' मित्यन्तः श्लोकोऽधिकः पठ्यते ।
२ (†) 'श्वेततण्डुलकल्कैः' इति हेममाल्यकैः' इतिच पाठान्तरम् ।
" 'चतस्रकाः समाः' इत्यपि पाठान्तरं ग्रन्थान्तरे ।
३ (‡) 'वायुं सोमञ्च रुद्रञ्च' इति हेमाद्रौ पाठः ।
४ (+) 'प्रत्येकं वाससावेष्टा संप्रोक्ष्य कुम्भवारिणा' इति चतुर्वर्गचिन्तामणौ पाठः ।

दानकालेतु सम्प्राप्ते दाता स्नाति कुशा दकैः ।
प्रसन्नचित्तवदनः परमेष्ठि-पुरोगमान् ॥
स्वनाम मन्त्रैरभितोनमोऽन्तैः,
आराध्य गन्धादिभिरादरेण ।
विप्रांस्तथाभ्यर्च्च्य यथाक्रमेण,
सम्प्रीयतां मे त्वय मेवमुक्त्वा ॥
योऽसौ कारयिता विप्र मुस्मै दद्याच्च दक्षिणाम् ।
सुवर्ण-संख्या गणिता हिरण्यश्चैव वाससी ॥
प्रोक्तं देव-ऋषेर्द्दानं लोकपालाह्वयं मया ।
किमन्यच्छ्रोतुमिच्छा ते तदिदं वद साम्प्रतम् १(*) ॥
इति लोकपालाष्टक दानम् ॥

—*—

## (१६३) अथाजादि दानम् ।

—*—

378. **महाभारते—**

अजाविकञ्च महिषं दत्वा विप्राय शक्तितः ।
घृत क्षीरवहा नद्यो यत्र तत्र स मोदते ॥

**तथाच—**

अजामलङ्कृतां दत्वा वह्निलोके महीयते ।
तमेव लोकं प्राप्नोति दत्वाजं विधिवन्नरः ॥
सर्व्वान् कामानवाप्नोति ये ये चेतसि संस्थिताः २(†) ।
इत्यजादानम् ॥

—*—

१ (*) 'किमान्यच्छ्रोतुमिच्छा ते' इति हेमाद्री पाठः ।
२ (†) 'इतिवा' इति चवसाने पाठोऽस्ति । चम्भच्चतुर्वर्ग चिन्तामणौ पुस्तकमस्ति ।

## (१६४) अश्वमेधदानं, भविष्योत्तरे ।

—*—

### भगवानुवाच—

शृणुपार्थ ! परं दानं सर्व्वकिल्बिष-नाशनम् ।
यद्दत्वा विविधं पापं सद्योविलय मृ(मि)च्छति ॥
सुवर्णरोमां सौवर्णीं प्रत्यक्षांवा सुशोभनाम् ।
सुवर्ण-तिलकोपेतां सर्व्वालङ्कार-भूषिताम् ॥
कौपेय परिधानञ्च दिव्यचन्दन-भूषिताम् ।
दिव्यपुष्पोपहारान्तु सर्व्वधातुरसैर्युताम् ॥
सप्तधान्य-समायुक्तां फलपुष्पवतीन्तथा ।
प्रागुधात्वादि परिमाणं परिभाषायामुक्तम् १(*) ।
शतेन कारयेत्तान्तु सुवर्णस्य प्रयत्नतः ।
यथाशक्त्याऽथवा दद्याद् वित्तशाठ्यन्नकारयेत् ॥
अयने विषुवेचैव ग्रहणे शशि-सूर्य्ययोः ।
दुःस्वप्नदर्शनेचैव जन्मर्क्षे तिथि संक्षये ॥
यदावा जायते वित्तं चित्तं श्रद्धा समन्वितम् ।
तदैव दानकालं स्याद्यतोऽनित्यं हि-जीवितम् ॥
दद्यात्तीर्थे गृहेवापि यत्रवा रमते मनः ।
तत्र संस्थाप्य देवेश मुमया सह शङ्करम् ॥
ब्रह्माणं सहगायत्र्या सश्रीकं श्रीधरन्तथा ।
रत्यासह तथानङ्गं लोकपालान् ग्रहांस्तथा २(†) ॥

### शङ्करादि स्वरूपन्तु विश्वकर्म्माह—३(‡) ।

चर्म्माम्बर श्चतुर्व्वाहुः शूल खट्वाङ्ग-पाशधृक् ।
वृषाङ्कः शङ्करो गौरी वामोत्सङ्गे स्थिता भवेत् ॥

---

१ (*) परिभाषातु चतुर्थस्तवकारम्भे द्रष्टव्या ।

२ (†) 'तान्पूज्यविधानेन गन्धपुष्प निवेदनैः' इति चतुर्वर्गचिन्तामणिः ।

३ (‡) 'उमाशङ्कर रूपमाह विश्वकर्म्मा' इति हेमाद्रिः, विश्वकर्म्मशिल्पशास्त्रे चापर इत्यधिकं ।

## ब्रह्मादि रूपमाह, नारदः—

सावित्री दक्षिणे पार्श्वे गायत्री वामभागतः ।
विलोकयन्त्यौ ब्रह्माणं साक्षसूत्र-कमण्डलुम् १(*) ॥
लक्ष्मी-नारायणरूपं हेम-हस्तिदाने ज्ञेयम् ।

अन्येषान्तु परिभाषायाम् । एतानि यथाशक्ति सुवर्णनिर्म्मितानि कुर्य्यात् । मध्येच तैलकुम्भोपरि पूर्व्वोक्त प्रकारेण घटितां मेषीमुक्तोपकरणैः सहस्थापयित्वा-गौरीशङ्करादिभिः सह पूजयेत् २(†) ।

तां संपूज्य विधानेन गन्धपुष्प निवेदनैः ।
तदग्रे कारयेद्धोमं तिलाज्येन महीतले ॥
अलङ्कृत्य द्विजं शान्तं वासोभिः परिपूज्य च ।
तल्लिङ्ग मन्त्रैर्होमश्च कर्त्तव्यो ज्वलितेऽनले ॥
ततस्तां तिलकं भक्त्या लवणाभि मुखस्थिताम् ३(‡) ।
पूजयित्वा विधानेन मन्त्रमेतदुदीरयेत् ॥
लवणाभिमुख स्थिताम् – इति प्रतिमातः पश्चिमायां दिशि ।
लवणाशातोऽनेन तदभिमुखत्वं सम्पद्यते ।

### मन्त्रस्तु—

रोमत्वङ्मांसमेदाद्यैः सर्व्वोपकरणैः सदा ।
जगतः संप्रवृत्तेऽपि त्वामतः प्रार्थयेच्छिवम् ॥
वाङ्मनः कायजनितं यत्किञ्चिन्ममदुष्कृतम् ।
तत्सर्व्वं विलयं यातु तद्दानादुपसेवितम् ॥
एवमुच्चार्य्य तान्दद्याद्ब्राह्मणाय कुटुम्बिने ४(+) ।
नातिभाषे ततोदत्वा तन्मुखं नावलोकयेत ५(×) ॥
दुष्प्रतिग्रहाद् विप्रो नित्यं भवति पातकी ।
नोर्णायुर्दक्षिणा हीना दातव्या ना विधानतः ॥

---

१ (*) हेमाद्रौ दानखण्डे अन्यथा लिखितमस्ति ।

२ (†) 'ततस्तान् तिलकुम्भस्याम्' इति हेमाद्रिः ।

३ (‡) यत्र दिग्भागे लवणानि स्थितानि तदभि मुखस्थितानिति ।

४ (+) 'यज्ञ-समुद्भूतो' इति हेमाद्रौ पाठः ।

५ (×) 'नाभिभाषेत्ततोदद्यात्' इति पादद्मांशन्धृतः पाठः । 'नाभिभाषेत योदद्यात्' इत्यपि पाठः सम्भवति ।

दक्षिणा विधिना हीना दुःखशोकावहा भवेत् ।
पुरा दत्तमिदं दानं गौर्य्या दक्षगृहस्थया ॥
तेन शम्भुः पतिर्लब्धः सर्व्वदेव नमस्कृतः ।
इन्द्राण्या स्वर्णरोमाणां शतं दत्तं विधानतः ॥
पतिः स्वर्गपतिर्लब्धः साद्यापि दिवि मोदते ।
नलेन दत्तमेतद्धि राज्यं कृत्वा दिवङ्गतः ॥
रूक्मिण्याहं पतिर्लब्धः सौभाग्यमतुलन्तथा ।
दानस्यास्य प्रभावेन पुत्रा बहुबलान्विताः ॥
अपुत्रोलभते पुत्रं अधनो लभते धनम् ।
दत्वा दानं शुभां कीर्त्तिं विपुलाञ्च तथा श्रियम् ॥
य इमं शृणुयान्नित्यं दानकल्पमनुत्तमम् ।
अहोरात्र कृतात् पापान्मुच्यते नात्र संशयः ॥
मेषीमशेषकलुषां सं(प्र)हरां सुशस्ताम् ,
दाने सदैव रसधातुयुतां सधान्याम् ।
तामादरेण कुरूनन्दन देहि धन्याम् , १(*)
येनास्तपापतिमिरः सवितेव भासि २(†) ।

इति मेषी दानम् ॥

—*—

## (१६५) अथाजा दानम् ।

—*—

379. **सुमन्तु :—**

प्रजापतिस्तपस्तप्त्वा प्रजामुत्पाद्य यत्नतः ।
यज्ञार्थं तत्सूतं कल्प्य पशुं यज्ञस्य सिद्धये ॥
त्रिरूपं विपुलं श्लक्ष्णं कृष्णसारं युवानकम् ।
असमाप्तेषु यज्ञानां सत्राणां पितृकर्म्मणाम् ॥

---

१ (*) 'देहि दत्वा' इति आदर्शान्तर-स्थित: पाठ: ।
२ (†) 'अपास्त पाप तिमिर:' इति आदर्शान्तर धृत-पाठ: ।

तत् समं विहितं देवै स्तद्दानञ्च निगद्यते ।
अजापालो महीपालो ह्यजादानैर्दिवं गतः ॥
अयने विषुवे चैव युगादौ ग्रहणेषुच ।
अमायां समजादानं पौर्णमास्याञ्च शस्यते १(*) ॥
विधिं तस्य प्रवक्ष्यामि विश्वामित्रेण निर्म्मितम् ।
सर्व्वरत्नोपसम्पन्नां सप्तरत्नोपरि स्थिताम् ॥
वस्त्रमाल्योपमानञ्च भूषितां पशुजानकीम् ।
यज्ञनेत्रां हेमश्रृङ्गीं ताम्रपृष्ठां सुदोहनाम् २(†) ॥
ससुतां रौप्यपादाञ्च कुक्षौ दद्यात्तिलोदकम् ।
गोदानवत् प्रयुञ्जीत मन्त्रेणानेन संयतः ३(‡) ॥
मन्त्रावासे अजे श्रृङ्गे यज्ञसम्पत् करे शुभे ।
सृष्टःत्वं हरमे पापं जन्मान्तरशतैः कृतम् ॥

### इत्यनुमन्त्रणम् ।

एवं समुच्चरेद् भक्त्या द्विजहस्ते जलं क्षिपेत् ।
प्रीयतां यज्ञनाथाय वासुदेवाय वैनमः ॥
एवं प्रदक्षिणी कृत्य सूर्य्यं समवलोकयेत् ।
ततश्च गच्छेत स्वगृहं हरिं संस्मृत्य मानवः ॥
ये वाल्यत्वे कृता दोषाः कामतोवाप्यकामतः ४(+) ।
यौवने वार्द्धकेऽन्यत्र प्रसङ्गेनापि पातकम् ॥
अजादानस्य माहात्म्या न्निष्पापोजायते नरः ।
पुत्रपौत्र-समायुक्तः सदाचारमतिश्चिरम् ५(×) ॥

### 380. विष्णुधर्म्मोत्तरे—

तस्मादजां प्रयच्छ त्वं ततः सर्व्वमवाप्स्यसि ।
मन्त्रेणानेन विधि वदलङ्कृत्य स्वशक्तितः ॥

---

१ (*) 'अमावास्याम्' इति आदर्शान्तर धृतः पाठः ।
२ (†) अत्र 'यज्ञनेत्रां' 'सुदोहनीम्' इति पाठद्वयं अन्यथा भूतंहेमाद्रौ ।
३ (‡) 'संयुतं' इति आदर्शपुस्तकान्तरस्थः पाठः ।
४ (+) महाभारतोक्तं 'अजामलङ्कृत्य'इत्यारभ्य 'यत्र समीहते' इत्यन्तं सार्द्ध श्लोकद्वयं हेमाद्रौ अधिकमस्ति ।
५ (×) 'सदाचार-युतश्चिरम्' इत्यपि पाठः आदर्शपुस्तकान्तरे ।
'यैर्बाल्यत्वे कृताः पापाः' इति हेमाद्रौ ।

त्वं पूर्व्व ब्रह्मणा सृष्टा पवित्रा भवती परम् ।
त्वत् प्रसूतोत्थिता यज्ञा तस्माच्छान्तिकरी भव ॥

**इतिदानमन्त्र ।**

प्रतिगृह्णीत ताश्चैव पृष्ठदेशे द्विजोत्तमः १(*) ।
एवं प्रदाय विप्राय सर्व्वपापैः प्रमुच्यते ॥
अश्वमेधफलं प्राप्य मोदते वैष्णवे पुरे ।

इत्यजादानम् ॥

—*—

## (१६६) अथ मेषदानम् ।

—*—

### 381. हेमाद्रौ, बौधायनः—

अग्नेर्मान्द्यं भवेत्तस्य यस्य नाग्नि-विनाशकः २(†) ।
वक्ष्यामि तत्प्रतीकारं यथोक्तं ब्रह्मणा पुरा ॥
पलार्द्धेन तदर्द्धेन तदर्द्धार्द्धेनवा पुनः ।
राजतंकारयेत् सौम्यमग्ने र्वाहनमुत्तमम् ॥
सौवर्णाश्च खुराः कार्याः श्वेतवस्त्रेण-वेष्टयेत् ।
श्वेतमाल्यैः श्वेतगन्धै धूपन्दद्यान्मधूत्कटम् ॥
तण्डुलोपरि संस्थाप्य पुनस्तं पूजयेत् सुधीः ।
तण्डुलानां परिमाणं द्रोणद्वयमुदाहृतम् ॥
आग्नेय्यान्दिशि होमश्च समिदाज्य तिलैरपि ।
आचार्य्येण विनीतेन सर्व्वशास्त्रार्थ-वेदिना ॥
बह्वृचेनच कर्त्तव्यस्तत्र मन्त्रानिमान् शृणु ।
'अग्निर्मूर्द्धे'तिमन्त्रेण समिद्धोमः प्रशस्यते ३(‡) ॥

१ (*) विष्णुधर्म्मोक्तं 'उद्गच्छागर्भमप्यापि' इत्यारभ्य 'सर्वयज्ञफलं लभेत्' इत्यन्तं श्लोकद्वयं हेमाद्रौ दानखण्डे ऽधिकं दृश्यते ।

२ (†) 'यस्यनाग्नि-विनाशकः' इति आदर्श पुस्तकान्तर स्थितः पाठः ।

३ (‡) 'अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति । इन्द्रस्य त्वौजसा सादयामि' । शुक्लयजुः १३।१४ ।

'अग्नेनये'त्यांज्यहोमोऽ'प्यग्निनाग्नि'स्तिलाक्षतैः १(*) ।
मन्त्राध्यायोक्तमन्त्रेण चाग्निसंस्थापनम्भवेत् ।
अग्नेः प्रागुत्तरे देशे शुभं कुम्भन्तु विन्यसेत् ॥
प्रणीतामोक्ष-पर्य्यन्तं कृत्वा स्नानं विधीयते ।
'आपोहिष्ठे'त्यादित्र्यृचं 'हिरण्येति'चतुर्ऋचः २(†) ॥
पावमानानुवाकेन मार्ज्जयेद्रोगिणन्ततः ।
'शन्नोदेव्य'नुवाकेन शान्तिश्चापि प्रकल्पयेत् ३(‡) ॥
तस्मै हुतवते रोगी प्राङ्मुखाय ह्युदङ्मुखः ।
पूजिताय यथाशक्त्या दद्यात्तन्तु सदक्षिणम् ॥

**दानमन्त्रस्तु—**

देवानां योमुखो हव्य-वाहनः सर्व्वपूजितः ।
तस्य त्वं वाहनः पूज्यः देवैः सेन्द्रैर्म्महर्षिभिः ॥
अग्निमान्द्यं पूर्व्वकर्म्म-विपाकोत्थन्तु यन्मम ।
तत्सर्व्वं नाशय क्षिप्रं जठराग्नि—प्रवृद्धये ॥
एवं विप्राय योदद्याद् अग्नेर्व्वाहनमुत्तमम् ।
बलवान् अग्निमान् मर्त्योजीवेद्वर्षशतं नरः ॥
ततः स्वबन्धुभिर्व्विप्रैः स्नात्वा भुञ्जीत वाग्यतः ।
इत्यग्निमान्द्यहररौप्य मेषदानम् ॥

—*—

## (१६७) अथ महिषी दानम् ।

*—

382. **भविष्योत्तरे. श्री कृष्ण उवाच** ४(०) ।
महिषी दानमाहात्म्यं कथयामि युधिष्ठिर !
पुण्यं पवित्रमायुष्यं सर्व्वकाम-सुखप्रदम् ॥

---

१ (*) 'अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो-भूयिष्ठां ते नमउक्तिं विधेम' । शुक्लयजुः ५।३६ ।

२ (†) 'आपोहिष्ठे' ति त्रयो मन्त्राः शुक्लयजुः प्रसिद्धाः ११।५०।५१।५२ ।
—'हिरण्येति' मन्त्राख्याः चतस्रो ऋचः—१३।४, २३।१०, १०।१६, २८।२०। शुक्लयजुः ।

३ (‡) 'शन्नोदेवीरभिष्टय आपोभवन्तु पीतये । शंयोरभि स्रवन्तु नः' ।
—शान्ति मन्त्रास्तवैव च: १६।१—१७। शुक्लयजुः—३६।१२ ।

४ (०) हेमाद्रौ दानखण्डे—विश्वामित्रोक्तौ 'महिषी सुप्रजा राजन् ! क्षीराढ्या युवतीस्तथा' इत्यारभ्य 'लोकञ्च गच्छति, इत्यन्तौ द्वौ श्लोकौ चारभ्य स्तः ।

चन्द्रसूर्य्यग्रहे पुण्ये कार्त्तिक्यामयने तथा ।
शुक्लपक्षे चतुर्द्दश्यां सूर्य्य-संक्रान्ति-वासरे ॥
यदावा जायते वृत्तं चित्तञ्च कुरुनन्दन !
तदैव देयामहिषी संसार भय-भीरुणा ॥
सुक्षीराच सुजघना सुश्रृङ्गी सुखुरा तथा ।
प्रथम प्रसूता युनी सुशीला दोषवर्जिता १(*) ॥
सुवर्ण-श्रृङ्ग-तिलका घण्टा भरण-भूषिता ।
रक्तवस्त्रावृतारम्या ताम्रदोहनिकान्विता ॥
पिण्याक-पिटकोपेता सहिरण्याच शक्तितः ।
सप्तधान्ययुता देया ब्राह्मणे वेदपारगे ॥
पुराण पाठके तद्वज् ज्योतिः शास्त्र-विदे तथा ।
देया नवेदरहिते नवक-व्रतिने क्वचित् ॥
द्रव्यैरेभिः समायुक्ता पुण्येऽह्नि विधि-पूर्व्वकम् ।
दद्यान्मन्त्रेण राजेन्द्र ! पुराण पठिते नतु ॥

## अत्रेदं दानवाक्यम्—

ॐ अद्येत्याद्यमुकगोत्रप्रवरायेत्यादि समुल्लिख्य इमां महिषीं प्रसूतां तरुणीं सुवर्णश्रृङ्गीं सुवर्ण-तिलकां स्वर्णाभरणां घण्टाताम्र-दोहनिकान्वितां पिण्याकपिटकोपेतां सप्तधान्ययुतां पादुकावतीं यमदैवतां अमुककामस्तुभ्यमहं सम्प्रददे नममेत्युक्त्वा पूर्व्वोक्तं मन्त्रमुदाहरेत् ।

अमुकगोत्रप्रवरेत्यादि, एतन्महिषीदान प्रतिष्ठार्थं दक्षिणामिदं हिरण्यं तुभ्यमहं सम्प्रददे नममेति ।

इन्द्रादि लोकपालानां स्वाराज्यमहिषी शुभा २(†) ।
महिषीदानमाहात्म्यात् साऽस्तुमे सर्व्वकामदा ॥
धर्म्मराजस्य सामीप्ये यस्याः पुत्रः प्रतिष्ठितः ।
महिषासुरस्य जननी या सास्तु वरदा मम ॥

१ (*) अथ युनी युवती तरुणीति यावत् । प्रथमप्रसूता—सर्व्वाग्रप्रसूता

२ (†) इमौ श्लोकौ चादर्शग्रन्थान्तरे नस्तः । हेमाद्रौ विशेषो यथा,—'एवं दत्त्वा विधानेन ब्राह्मणस्य गृहं नयेत् । क्षमापयेत्ततोविप्रान् सुसन्तुष्टो भवे'ति च । अनेन विधिना दत्वा महिषीं द्विजपुङ्गवे । सर्व्वान् कामानवाप्नोति इहलोके परत्र च' । "या स्त्रीं ददाति महिषीं सा राजमहिषी भवेत् । महाराजः पुमान् राजन् व्यासस्य वचनं यथा' ।

### इति दानमन्त्रः—

दत्वा प्रदक्षिणी कृत्य ब्राह्मे लोके परत्र च।
यज्ञ याजी भवेद्विप्रः क्षत्रियोविजयी भवेत्॥
वैश्यस्तु धान्यधनवान् शूद्रः सर्व्वार्थसंयुतः।
तस्मादरेण दातव्या महिषी विभवे सति॥
पुत्र-पौत्र-प्रपौत्रार्थ मात्मनः शुभमिच्छता।
दशधेनुसमां राजन् महिषीं नारोदोऽब्रवीत्॥
विंशद्धेनुसमां व्यासः सर्व्वदानोत्तमां कविः।
सगरेन ककुत्स्थेन धन्धुमारेण गाधिना॥
दत्ता संस्कृत्य विप्रेभ्यो महिष्यः सर्व्वकामदाः।
महिषी दानमाहात्म्यं यः शृणोति सदा नरः॥
सर्व्वपापं विनिर्मुक्तः शिवलोके महीयते।
दुग्धाधिकां हि महिषीं नवमेघवर्णाम्,
सन्तुष्टतर्णकवतीं जघनाभिरामाम् १(*)।
दत्वा सुवर्णतिलकां द्विजपुङ्गवाय.
लोकद्वयञ्च जगतीह किमत्र चित्रम् २(†)॥

इति महिषीदानम्॥

—*—

## (१६८) अथ कृष्णाजिनदानम्।

—*—

३४३. **मत्स्यपुराणे**—३(‡)।

कृष्णाजिन प्रदानस्य विधिङ्ब्रूहि ममानघ!।
ब्राह्मणश्च समाचक्ष्व तत्र मे संशयो महान्॥

---

१ (*) 'तर्णकः तृषः शिशुः'। ताद्दृशवत्समन्तीमित्यर्थः।

२ (†) 'लोकद्वय'' इहलोकः परलोकश्चेति।

३ (‡) यत्र मनुजवार्त्तिक' हेमाद्रीयः पाठः।

384. **मत्स्य उवाच—**

*वैशाखी पौर्णमासीच ग्रहणे शशि-सूर्य्ययोः ।*
*पौर्णमासीतु या माघे आषाढ़ी कार्त्तिकी तथा ॥*
उत्तरायण-द्वादश्यो स्तयोर्दत्तं मया फलम् ।
आहिताग्निर्द्विजोयश्च देयं वै तस्य पार्थिव ! ॥
यथा येन विधानेन तन्मे निगदतः शृणु ः
गोमये नोपलिप्तेतु शुचौ देशे नराधिप १(*) ! ॥
आदावेव समास्तीर्य्य शोभनं वस्त्रमाविकम् ।
ततः सशृङ्गं स खुर मास्तरे कृष्णमार्गणम् ॥
कर्त्तव्यं रुक्म शृङ्गञ्च रौप्यदन्तं तथैवच ।
लाङ्गलं मौक्तिकैर्युक्तं तिलच्छन्नं तथैव च ॥
तिलैरात्मसमं कृत्वा वाससाच्छादयेद् द्विजः ।
आत्मसममिति—उपविष्टस्यात्म तुल्य प्रमाण मित्यर्थः २(†) ॥
सुवर्ण नाभन्तत् कुर्य्या दलङ्कृत्य विशेषतः ।
रत्नेर्गन्धैर्यथा शक्त्या तस्य दिक्षु च विन्यसेत् ॥
कांस्य पात्राणि चत्वारि दिक्षु दद्याद् यथा क्रमम् ।
मृन्मयेषु च पात्रेषु पूर्वा-दिक्षु क्रमेण तु ॥
घृतं क्षीरं दधि क्षौद्र मेवन्दत्वा यथा क्रमम् ।

सुवर्णनाभमित्यादि, अलङ्कुर्य्यादित्य लङ्करण-साधनाकाङ्क्षायाम्, रत्नैर्गन्धैरित्यस्य सन्निहितत्वात् साधनतयान्वयेन निराकाङ्क्षत्वा त्कांस्यपात्रैः सम्बन्धः । ततश्च तेषु चतुर्षु मृन्मय पात्रेषु पूर्वादिक्रमेण घृतादि दध्यादिचेति कल्पतरु काराभिमतोऽर्थः ३(‡) ।

पञ्चकस्य तथा शाखा मन्त्रणं कुम्भ मेवच ।
ब्रह्मोपस्थानकङ्कृत्वा शुभचित्तोनिवेशयेत् ॥

---

१ (*) 'शुचौ देशेच पार्थिव !' इति हेमाद्रौ पाठः ।

२ (†) उपविष्टस्य यजमानस्यात्मनः परिमितं तद्द्रव्यमित्यर्थः ।
—'तिलैस्तु विस्तर' कृत्वेति' क्वचित् पाठ' इति हेमाद्रिः ।

३ (‡) 'सप्तानि कांस्यपात्राणि चतुर्दिक्षु विन्यस्तान्यानि मृन्मयानि पात्राणि घृतादि पूर्णानि यथाक्रमं पूर्वादिदिक्षु स्थापनीयानीति हेमाद्रिः ।

जीर्णवस्त्रेण पीतेन सर्व्वाङ्गानि च मार्ज्जयेत् १(*)।
धातुमयानि पात्राणि पादेष्वस्य प्रदापयेत्॥
वक्ष्यमाण प्रकारेण समन्त्रकं निवेदयेदित्यर्थः।
यानि कानिच पापानि मयाल्लोभात् कृतानि च॥
लौहपात्र प्रदानेन प्रणश्यन्तु ममाशु वै॥
तिल पूर्णन्तु तत् कृत्वा वामपादे निवेशयेत्।
यानि पापान्यकामानि कामोत्थानि कृतानिच॥
कांस्य पात्र प्रदानेन प्रणश्यन्तु सदा मम २(†)।
एतत् पात्रद्वयं पश्चिमपादद्वये स्थापनीयम्।
परापवादपैशुन्या दुष्ट-मांसस्य भक्षणात्॥
तदुत्थितञ्च मेपापं ताम्रपात्रात प्रणश्यतु।
कन्यानृतं गवाञ्चैव परदार-प्रधर्षणम्॥
रौप्यपात्र-प्रदानेन क्षिप्रं नाशं प्रयान्तु मे।
ऊद्‌र्ध्वपादेत्विमेकार्य्याः ताम्रस्य रजतस्य च॥
ऊद्‌र्ध्वपादे—अग्रपादयोः। अत्रैकत्व मविवक्षितम्।
अनेन पूर्व्वोक्तयो लौहकांस्य पात्रयोः।

पश्चिमपादयोः स्थापनमित्यर्थाल्लभ्यते। अनयोश्च पूर्व्व पात्रयोर्दक्षिणे वामेच न्यासः ३(‡)।

अत्र सुवर्णपात्रस्य स्थापनानुक्ते मध्ये पात्रान्तराश्रवणान्मध्यदेशे एव स्थापनम्। एतच्चाक्षत पूर्णस्थापनीय मित्याहुः ४(०)।

---

१ (*) अङ्गोपस्थानकमिति—'पा(धा)दानदेशाद्बहिरुपसमीपे स्थानं न तथोक्तः। यथा-मार्ज्जयेत्—दानानन्तरं कात्यायनेन जीर्णवस्त्रेणाङ्गानि प्रच्छादयेत्'। इति चतुर्वर्ग-चिन्तामणौ।

" वह्निस्थापनमिति शेषम्।

निवेशयेत्—दानानन्तरं कामार्थमिति शेषः।

२ (†) 'यानि पापान्य काम्यानि कर्मो(र्मो)त्थानि कृतानिच।
कांस्यपात्र प्रदानेन तानि नश्यन्तु मे सदा।
मधुपूर्णन्तु तत्कृत्वा पादेवै दक्षिणे न्यसेत्'। इति हेमाद्रौ।

३ (‡) 'अत्र ताम्रपात्रं मधुपूर्णं दक्षिणपादे, रजतपात्रं तिलपूर्णं वामपादे स्थापनीय'मिति =चतुर्वर्गचिन्तामणौ।

४ (०) 'एतच्च सुवर्णपात्रमक्षतपूर्णं मध्यदेशे स्थापनीय'मिति हेमाद्रिः।

हेममुक्ताविद्रुमञ्च दाड़िमं बीज पूरकम् ।
प्रशस्तपात्रं सुवर्णं क्षुरे शृङ्गाटकानिच ॥
एवं कृत्वा यथोक्तेन सर्व्वशाक फलानिच ।
तत् प्रतिग्रहविद्विद्वा नाहिताग्नि-र्द्विजोत्तमः ॥
स्नातो वस्त्रयुगच्छन्नःस्वशक्त्या चाप्यलङ्कृतः ।
प्रतिग्रहश्च तस्योक्तः पुच्छदेशे महीपते! ॥
तत एवं समीपेतु मन्त्रमेतदुदीरयेत् ।
कृष्णकृष्ण विभो देव कृष्णाजिनानघ प्रभो ! ॥
तद्दानाद्धूतपापस्य प्रीयतां मे नमोनमः ।
त्रयस्त्रिंशत् सुराणां त्वमाधारत्वे व्यवस्थितः ।
कृष्णोऽपि मूर्त्तिमान् साक्षात् कृष्णाजिनोनमोऽस्तुते ॥
सुवर्णनाभिकं दद्यात् प्रीयतां वृषभध्वजः ।
अनेन विधिना दद्याद् यथावत् कृष्णमार्ग(णः)शः ॥
नस्पृश्यः स द्विजोराजन् चिति युपसमोहि सः ।
दानेच श्राद्ध कालेच दूरतः परिवर्ज्जयेत् ॥
स्वगृहात् (हं) प्रेष्यतं विप्रं मण्डलं स्नानमाचरेत् १(*) ।
पूर्णकुम्भेन राजेन्द्र ! शाखया चम्पकस्यच ॥
कृत्वाचाचार्य्यः कलशं मन्त्रेणानेन मूर्द्धनि ।
'आप्यायस्व' 'समुद्रज्येष्ठा' ऋचोयाश्चापि षोड़श २(†) ॥
ताश्च ऋचः 'आप्यायस्वेत्याद्यष्टौ 'समुद्रज्येष्ठा' इत्यप्यष्टौ ।
ततोजीर्णवस्त्रेणाङ्ग प्रोक्षणम् ।
अहते वाससी वीतः आचान्तः शुचितामियात् ३(‡) ।
वीतः—( कृतविशुद्ध- ) वस्त्र परिधानः ।
तद्वस्त्रं कुम्भसहितं नीत्वा क्षेप्यं चतुष्पथे ।
इदञ्च दानवाक्यात् पूर्व्वं कार्य्यम् ४(०) ।

---

१ (*) स्नानमाचरे'दिति हेमाद्रिः ।

२ (†) आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् ।
भवा वाजस्य संगथे' । शुक्लयजुः १२।११२ । अन्येच याजुष्यामन्त्राः प्रागुक्ताः ।

३ (‡) 'अहतं अप्रक्षालितं अपरिहितञ्च । वीतः कृतपरिधान' इति हेमाद्रीये ।

४ (०) 'इदञ्च दानवाक्यं पूर्व्वं कार्य्यं'मिति आदर्शान्तर धृतः पाठः ।

## दानवाक्यं यथा—

अद्येत्याद्यमुक गोत्रायेत्याद्युक्त्वा इदं कृष्णाजिनं कुशोपरिगतं कम्बलोपरि स्थितं वस्त्रयुग्म-प्रच्छादितं तिलराशिः सुवर्णशृङ्गं रौप्यक्षुरं रौप्यदन्तं मुक्ताफल - लाङ्गुलं सुवर्णनाभं पञ्चरत्नालङ्कृतं गन्धपुष्पान्वितम्, चतुर्दिगवस्थित-घृत-क्षीर-दधि-मधु पूर्णपात्र चतुष्टय सहितं सधातु ( कांस्य ) पात्रं श्रीशिव दैवतं अमुक कामस्तुभ्य-महं सम्प्रददे नममेति पात्रहस्ते जलन्दद्यात्। पुनरद्येत्याद्युल्लिख्य एतत्कृष्णाजिनदान-प्रतिष्ठार्थं दक्षिणामिदं सुवर्णं तुभ्यमहं सम्प्रददे नममेति।

385. **दक्षिणा मिति गारुडे—**

शतनिष्क समोपेतं तदर्द्धार्द्ध मथापिवा।
अतोन्युनं नदातव्यं ह्यधि-के फल मूर्ज्जितम् १(*) ॥
उत्तमन्तु शतेनैव मध्यमन्तु तदर्द्धतः।
तदर्द्धेन कनिष्ठन्तु देयं कृष्णमृगाजिनम् ॥

**अत्र शतेन निष्काणामितिशेषः।**

न वित्तशाठ्यं कुर्व्वीत फलहानेस्तु कारणात्।

**फलमुक्तं मत्स्यपुराणे—**

कृतेनानेन या तुष्टिः न सा शक्या सुरैरपि।
वक्तुञ्च नृपतिश्रेष्ठ तथाप्युद्देशतः शृणु ॥
समग्रभूमिदानस्य फलमाप्नोति मानवः !
सर्व्वान् लोकान् स चरति कामचारी विहङ्गमः ॥
आभूत-संप्लवं यावत् स्वर्गमाप्नोत्यसंशयम्।
नपितृ-पुत्रमरणं वियोगं भार्य्यया सह २(†) ॥
धन-देश-परित्यागं नचैवेहाप्नुयात् क्वचित्।
कृष्णाक्षतं कृष्णमृगस्य चर्म्म,
दत्वा द्विजेन्द्राय समाहिताय।
यथोक्त मेतन्मरणं नशोचेत्,
प्राप्नोत्यभीष्टं मनसः फलन्तत्।

386. **कालिका पुराणे—**

योऽपि रुक्मादि पात्रेच हुत्वा वह्निं ददन्ति च।
तिलद्रोण-समायुक्तं वस्त्रयुग्मेण वेष्टितम् ॥

---

१ (*) 'अधिकं काममर्ज्जित'मिति हेमाद्रिः।
२ (†) 'नपिता पुत्र' इति आदर्शान्तरधृतः पाठः।

पलार्द्धार्द्धमथार्द्धं वा वित्तवान् हेमसंयुतम् ।
सूक्ष्मवस्त्रेण युग्मेण अन्येनाच्छादयेद् द्विजम् ॥
सोदकं चापरं रुक्मं सतिलं न्यस्य तत्करे ।
ततः कृष्णाजिनन्दद्यात् तिल द्रोणान्विश्च यत् ॥
दत्त्वातु भोजयेत्तत्र नत्वा चैव विसर्ज्जयेत् १(*) ।
अनेनैव विधानेन दशद्रोण-प्रदायकः ॥
आब्रह्मान्तभवं कालं मोदते स पुरोत्तमे २(†) ।

387. **आदित्य पुराणेच—**

वशाख्यां पौर्णमास्याश्च तिलदानं ददन्ति ये ।
कृष्णाजिनश्च सम्पूर्णं प्रच्छाद्याष्टौ तिलस्यवै ॥
स्वर्ण शृङ्गं रौप्यक्षुरं मुक्तालाङ्गूल-भूषितम् ।
श्वेतवस्त्र युगोपेतं कृष्ण चैलाद्यलङ्कृतम् ॥
लोहपात्र-चतुष्कश्च घृतक्षौद्र-प्रपूरितम् ।
दधि क्षीरन्तथा चैव सम्पूर्णश्च ततः परम् ॥
परीक्षिते गुणाधारे ब्राह्मणे सुसमाहिते ।
अग्निहोत्ररते शान्ते देवद्विजपरायणे ३(‡) ॥
तस्मै तद्दीयते दानं कृष्णाजिन मनुत्तमम् ।
इति कृष्णाजिन दानम् ॥

—*—

१ (*) 'अयने विषुवे चैव चन्द्र सूर्य्य ग्रहे तथा ।
युगादौवा प्रयच्छन्ति विधिना ये तुवै द्विजे ॥
तेऽपि तत्पदमासाद्य दशांशं ब्रह्म आयुषः' इति हेमाद्रि. ।

२ (†) 'यो घटं पायस पूर्णं हेमपद्म-नियोजितम् ।
सम्पूज्य वस्त्रयुग्मेण दद्यात् सोऽपि व्रजेद् ध्रुवम्' इति तत्रैव ।

३ (‡) नित्यस्नाते शौचपरे सर्व्वशास्त्राद्यलङ्कृते । ,,
सप्त-द्वीप-सागरांवै सशैल वन काननाम् ॥
पृथिवीं रत्न-सम्पूर्णां दत्त्वा भवति यत्फलम् ।
उद्धृत्य नरकादघोगात् कुलान्ये कोत्तरं शतम् ॥
गच्छति ब्रह्मलोकञ्च विमानैश्चन्द्र सन्निभैः ।
चामरैर्धूयमानस्य गीतवंशमनोरमैः ॥
अप्सरोभिः परिवृतः पताकाध्वज-सङ्कुलः ।
जयघोषश्च क्रियते तस्याये सुरकिन्नरैः ॥
ब्रह्मलोकन्ततः प्राप्य प्रविशेच्च पुरीमिमाम् ।
सर्व्वरत्नोज्ज्वला दिव्या मुक्ताजाल-विभूषिताम् ॥

## (१६६) अथ गृष्टि कृष्णाजिन दानम् १(*)।

—*—

388. **विष्णुधर्म्मोत्तरे—**

वैशाख्यां पौर्णमास्याञ्च कार्त्तिक्यां विषुवे तथा ।
अयने ग्रहणे वापि दद्यात् कृष्ण मृगाजिनम् ॥
भूमौ गोमयलिप्तायां दर्भानास्तीर्य्य मानवः ।
तत्राविकन्तथावस्त्रं प्रागग्रञ्च प्रसारयेत् ॥
आविकं वस्त्र—कम्बलम् ।
तस्मिन् कृष्णाजिनं भूप निर्मा(सं) सम्प्रसारयेत् ।
प्राग्ग्रीव मुत्तरमुखं सशृङ्गं स खुरन्तथा ॥
प्राग्ग्रीवं—प्राक्सिरस्कम् ।
उत्तरदिशि कृतं मुखं सलोमकं प्रसारयेदित्यर्थः ।
स्वर्णशृङ्गं रौप्यक्षुरं मुक्ता लाङ्गूलभूषितम् ॥
अत्र सुवर्ण शृङ्गत्वादिकं यथा शक्ति कार्य्यम् ।
तिलैः संछाद्य कृष्णैस्तु यथा शक्त्या यथा विधि ।
सौवर्णं क्षीरपात्रन्तु पूर्व्वस्यान्दिशि धापयेत २(†) ॥
राजतं दधिपात्रन्तु दक्षिणस्यान्निधापयेत् ।
घृतपूर्णं ताम्रपात्रं पश्चिमायां निधापयेत् ॥

---

१ (*) प्रयात्यथ विमानाग्र्या सौवर्णालङ्कृता मुने ।
त्रिंशत् कोट्यास्तु वर्षाणि यमीत्यभ्यधिका पुरा ॥
सिंहासनोपविष्टस्तु श्वेतवस्त्र-परिच्छदः ।
वसति तत्र वैकालं यावदाभू (त)त संप्लवम् ॥
यदि मानुष्यमायाति कदाचित्काल-पर्य्यये ।
चतुर्व्वेद गृहे जन्म जायते महतां कुले ॥
रूपवान् बलवांश्चैव दीर्घायुः प्रियदर्शनः ।
बहुभः सर्व्वनारीणां दाता भोक्ता तथैव च ॥ इति चतुर्वर्ग चिन्तामणौ ।
हेमाद्रौ, दानेऽप्य 'अथातः कृष्णाजिन-दानविधिं वक्ष्यामः ।
इत्यारभ्य—विधानमन्त्र प्रयोगोक्तान् ततः दानरीतिश्च विलिख्य ततः पुच्छदेशे प्रति-
गृह्णीया'दित्यन्तं सर्व्वमुक्तम् ।
'कृष्णाजिन विधिं ब्रूहि मम माधव पृच्छतः ।
यस्मात्त्वपितु दानानि सर्व्वपाप हराणि च' इति तत्रैव विष्णुधर्म्मोत्तरे ।

२ (†) 'पूर्व्वस्याञ्च निधापयेत्' इति पाठान्तरम् ।

शङ्खं सुनाभिं सुमुखं क्षौद्रपूर्णं तथोत्तरे।
चतसृषु तथा दिक्षु चतस्रोगृष्टिकाः क्रमात्।
गृष्टिः—सकृत्प्रसूता गौः, सकृत्प्रसूता मृगीवा १(*)।
तत् स्वरूपन्तु राजेन्द्र तिलानाच्छाद्य वाससा।
पश्चिमेतु तथा भागे वेधं संस्थाप्य पावकम्॥
तिलान् घृताक्तान् जहुयाद् व्याहृतिभिः समासतः।
आहिताग्निं ततो विप्र मव्यङ्गाङ्गसुपाठकम्॥
प्रवक्तारं याज्ञिकञ्च दातारं स्मृतिवित् परम्।
सम्पूज्य वस्त्रयुग्मेण अलङ्कारैश्च शोभितः॥
दिशः सम्प्रोक्ष्य गायत्र्या तिलमिश्रेण वारिणा।
कृष्णाजिनं द्विजश्रेष्ठ सशिरोगृष्टिसंयुतम्॥
ददामि प्रतिगृह्णीष्व प्रीयतां धर्म्मराडिति।
नाभिं स्पृशंस्तन्निनयेत् प्रतिगृह्णात्वसाविति॥
निनयेत्—प्रतिहीयात् २(०)।
'अदिति द्यौ' रितिज पेत् प्रणवेनादिना ततः।
गो-भू हिरण्य संयुक्तं मार्गमेतद्ददाति यः ३(†)।
स सर्व्व-पाप-कर्म्मापि सायुज्यं ब्रह्मणोव्रजेत्।
गोभू हिरण्येत्यादि—

यथाशक्ति गवादियुक्त—गरूड़पुराणोक्त—दक्षिणा सहितश्चेत्यर्थः।

पौलस्त्योक्तमपि गृष्टिकृष्णाजिनदान मनेन समानार्थम्। इयांस्तु विशेषः चतुर्दिक्षु संस्थाप्य सौवर्णपात्रस्थानेषु प्रागादिक्रमात् ताम्र-कांस्य-रौप्य-सुवर्णमयानि पात्राणि, क्षीर-दधि-घृत-क्षौद्र-पूर्णानि स्थापयेत्। हिरण्य नाभिकं कुर्य्यात्, सर्व्वगुणविशिष्टं कृष्णाजिनं ददामीति नाभिंस्पृशन् दद्यात्। प्रतिग्रहीतातु 'अदितये कृष्णाजिनं प्रतिगृह्णाम्यसा'विति स्वनाम गोत्रादिकमुच्चरेत्। अन्यत् सर्व्वं समानम्।

इति गृष्टिकृष्णाजिनदानम्॥

—*—

१ (*) 'अथ गृष्टिः-सकृत् प्रसूतगवी वदरयीः स्त्रियाम्' इति मेदिनी। गृह उपादाने, गृह्णाति। ततः क्तिच्। पृषोदरादित्वात् साधुः।

२ (०) 'सप्रणवं मन्त्र' प्रतिग्रहादान्तयोः प्रतिग्रहीता जपेत्' इति हेमाद्रौ।

३ (†) 'गोभू हिरण्य संयुक्त' मित्यत्र यथाशक्त्या गोभू हिरण्यं दक्षिणायैति हेमाद्रिः। 'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता सपुत्रः। विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्'। इति शुक्ल-यजुः २५।२३।

## (१७०) अथार्द्रकृष्णाजिन दानम् ।

—*—

389. **विष्णुधर्म्मोत्तरे,—श्रीभगवानुवाच ।**

मुण्डिते नतु या प्रोक्ता प्रायश्चित्तं पुराभवत् ।
हत्यायां ब्राह्मणस्यैव तां प्रवक्ष्यामि नारद ! ॥
भूमिं प्राक्प्रवणां शुद्धां गोमयेनानुपेपयेत् ।
तस्यां हरितदर्भांस्तु घनानास्तीर्य्य यत्नतः ॥
मध्येकृष्णाजिनं राजन् नार्द्रं सर्वाङ्गिकं दृढम् ।
आस्तीर्य्य शृङ्गसहितं प्राग्ग्रीवं शिरसा सह ॥
केतितं ब्राह्मणं पूर्वं पात्र लक्षण-लक्षितम् ।
केतितम्—निमन्त्रित मित्यर्थः १(‡) ।
प्रक्षाल्य पादौ तस्यैव दद्यात् कृष्णेतु वाससी ।
सौवर्णे कुण्डले देये हस्ताभरण मेवच २(०) ॥
स्रग्दामभिस्तु संपूज्य शृङ्गयोर्मध्यदेशतः ।
प्राक्मुखं ब्राह्मणं स्थाप्य मृगं सौवर्ण शृङ्गकम् ॥
तिलैःप्रच्छादयेत् कृष्णे ब्राह्मणं शिरसा सह ।
यदा शिरोब्राह्मणस्य म(भ)प्रंभवति-भूभुजः ! ॥
जपेद्वै मूलमन्त्रन्तु गायत्रींवा समाहितः ।
पापं सञ्चिन्त्य मनसा हननं ब्राह्मणस्यच ॥
नाभिमात्रं समुद्धृत्य तिलैः प्रच्छादयेत् पुनः ।
संच्छादिते पुनर्विप्रे जपेन्मन्त्रंतु पूर्ववत् ॥
पुनरुद्धृत्य विप्रन्तु नाभिं यावत्तु पार्थिव ३(०) ।
पुनः संच्छादयेत्तस्य शिरःकृष्ण-तिलैस्तथा ॥
त्रिकृत्यन्तु निमज्ज्यैवं दाता दद्यान्मृगा जिनम् ४(०) ।
पात्रं मनसि सञ्चिन्त्य तोयमप्सु विनिक्षिपेत् ॥

---

१ (*) मध्यतु चतुर्वर्गचिन्तामणि ग्रन्थे महाब्रह्माजिनाख्या इति ।
'केतनन्तु ध्वजंकार्य्ये निमन्त्रण-निवासयोः' इत्यजयः ।
२ (†) 'कण्ठाभरण मेवच' इति हैमाद्रीयः पाठः ।
३ (‡) 'नाभिमात्रन्तु पार्थिव' । इति हैमाद्रिः ।
४ (०) 'दानं दद्यान्मृगाजिनम्' ,, ,, ।

प्रीयतां विश्वकर्म्मातु विश्वात्मा विश्वरूपधृक् ।
एवं कृष्णाजिनं दत्वा ब्रह्म हत्यां व्यपोहति ॥
पापिष्ठः परमं स्थानं याति यत्र नशोचति ।
इति ते गुह्यमाख्यातं दानं सर्व्वाघ-नाशनम् ॥
मुण्डितेनतु कृच्छ्राय ब्राह्मणे घातिते सति ।
सहस्रं दक्षिणान्दद्याद् नियतं ब्राह्मणाय तु ॥
इत्याद्रं कृष्णाजिन दानम् ॥

—*—

390. **वह्निपुराणे—**

योददाति द्विजेभ्यस्तु तृतीयाया मुपानहौ १(*) ।
वैशाखे शुक्लपक्षेतु तृतीयायां विशेषतः २(†) ॥
यद्दाति नर श्रेष्ठ ! तदक्षयं समश्नुते ।

391. **भविष्यपुराणे—**

माघमासे तृतीयायां गुडस्य लवणस्य च ।
दानं श्रेयस्करं राजन् स्त्रीणां पुंसां तथैव च ॥
तथा तामेव प्रकृत्य,—
यत्किञ्चिद्दीयते दानं स्वल्पं वा यदि वा बहु ।
तत्सर्व्वं अक्षयं याति तेनेय मक्षया स्मृता ॥
योऽस्यान्ददाति करकान् वारिपूर्णान् अनेकशः ।
स याति पुरुषोवीरः लोकंवै हेममालिनः ॥
द्वादश्यां चैत्रशुक्लस्य चित्रवस्त्र-प्रदोनरः ।
अक्षयं फलमाप्नोति नागलोकञ्च-गच्छति ॥

392. **वराहपुराणे—**

मार्गशीर्षेऽथ-वैशाखे द्वौमासौ मम वल्लभौ ।
अनयोर्म्मासयोर्यस्तु द्वादश्यां नियतात्मवान् ॥

१ (*) हेमाद्रौ, चतान्तरे भविष्यपुराणोक्त विष्णुधर्मोत्तरोक्तपूजादानादि विषयाः, वराह-पुराणोक्त विषयाश्च बहुधा वर्णिताः सन्ति ।

२ (†) 'अयने वा चैत्रविषुवे वेदवेदाङ्गपारगे' इति हेमाद्रिः ।

द्वादशानान्तु विप्राणां योददाति वसुन्धरे ! ।
एकैकस्यतु गां श्रेष्ठां सर्व्वोपस्कर संयुताम् ॥
वस्त्रोपानद् युगे चैव कर्णालङ्कार मेवच ।
आतपत्रं पादुकेच अङ्गुलीयक मेवच ॥
विलिप्य चोपवीतञ्च मां ध्यायन् भक्ति संयुतः ।
दद्याद् अशक्तौ पञ्चानां त्रयाणां द्वयोवेरच ॥
अशक्तौ त्वथवैकस्य दद्याद्वेदविदेऽपि गाम् ।
मन्वन्तराणां कोट्यस्तु दश सप्तच पञ्चच ।
मच्छरीर गतश्चान्ते सर्व्वद्वन्द्-विवर्जितः ॥
यद्यपि स्युर्ग्रहाः सर्व्वे मूर्द्धिलिङ्गे शनैश्चरः ।
सर्वे ते सौम्यतां यान्ति द्वादश्यां विधिनाऽमुना ॥

393. **यमश्च—**

माम्यान्धकार-द्वादश्यां तिलैर्हुत्वा हुताशनम् ।
तिलान्दत्वाच विप्रेभ्यः सर्व्वपापैः प्रमुच्यते ॥

394. **विष्णुधर्म्मोत्तरे—**

वैशाख्यां पौर्णमास्यान्तु ब्राह्मणान् पञ्च सप्तवा ।
क्षौद्रयुक्तैस्तिलैः कृष्णैः अर्च्चयेद् यदिवै नरः ।।
प्रीयतां धर्म्मराजेति यद्वा मनसि वर्त्तते ।
तिलै र्हुतैरिति शेषः ॥
यावज्जीवकृतान् पापात् तत्क्षणादेव मुच्यते ।

**तत्रैव—**

सोपवासस्तथा ज्यैष्ठे पूर्णेच शश-लक्षणे ।
उपानहौ तथा च्छत्रं दत्वात्यन्तं सुखी भवेत ॥
आषाढ्यामन्नदानेन प्राप्नोत्यन्नं तथा बहु ।
जल धेनु प्रदानेन श्रावण्यां स्वर्गमाप्नुयात ॥
गोदानं प्रोष्ठ पद्याञ्च पौर्णमास्यां महाफलम् ।
आश्वयुज्यां कांस्यपात्रं घृतपूर्णं द्विजातये ॥
ससुवर्णन्तथा दत्त्वा दीप्तौजास्त्विह जायते ।
कार्त्तिक्यां चन्द्रवर्णाभं अन्यवर्णमथापि वा ॥
रत्नैर्गन्धै स्तथाधान्यै र्बीजैर्वस्त्रैस्तथैवच ।

एतैर्युक्तमिति विशेषः ।

कृत्वाचोक्तमथोक्षाणां दत्वा दीपं समन्ततः ।
चन्द्रोदये नरो दत्वा सर्व्वपापैः प्रमुच्यते ॥
कान्तारे यममार्गेतु तेनासौ व्रजते सुखम् ।
प्राप्नोति पुत्रपौत्रांश्च सूर्य्यलोकञ्च गच्छति ॥
मार्गशीर्षे तथा मासि पूर्णेच शश-लक्ष्मणे १(*) ।
महारजत रक्तेन वाससातु महीपते ! ॥
आच्छाद्य कांस्यपात्रेतु कृत्वा सोमं समाहितः ।

शशलक्ष्मणे चन्द्रे २(†) । महारजतम्—हरिद्रा लाक्षा वा । चन्द्रलक्षणं परिभाषायां ज्ञेयम् ।

लवणस्यतु मुख्यस्य सम्पुर्णकृष्णमार्गकम् ।

अत्र मुख्यं सैन्धवादि ।

कृष्णमार्गकम्—कृष्णाजिनम् ।

( दत्वा सुवर्णनाभस्य मुख्यस्य कृष्णमार्गणम् ) ३(‡) ।
कृष्णाजिनं नरोदत्वा तस्मै चैव द्विजातये ।
सौभाग्यरुपलावण्य-युक्तो भवति मानवः ॥
गोरसं पञ्चकुम्भेन पौष्णे (षे) उत्साहितो जनः ।
नव ब्राह्मण कुम्भेन सोऽभिषिक्तश्च तत्परः ॥

तदिति—प्रकृत कुम्भादिकं परामृश्यते ।

घृतेन स्नापितं विष्णुं शक्त्या सम्पूजयेत्ततः ।
घृतञ्च जुहुयाद्वह्नौ तच्च दद्याद् द्विजातये ॥
कन्ये वस्त्रयुगं दद्यात् सोपवासः समाहितः ।
कर्म्मणा तेन धर्म्मेण सर्व्वपापैः प्रमुच्यते ॥
माघ्यां कृष्ण तिलैः श्राद्धं कृत्वा पापैः प्रमुच्यते ।
स्वास्तीर्ण-शयनन्दत्वा फाल्गुन्यां ब्राह्मणायच ॥

---

१ * 'पूर्णे शिशिरदीधितौ' इति दान खण्डे हेमाद्रिः ।

१ (†) इत्यारभ्य—'युगादिषु महाराज पथ्यानि भवन्तिहि'—इत्यन्तोयमभागः एतावन् पादमध्ये नास्ति । कृष्णमार्गकम्—कृष्णसारचर्म इत्यर्थः ।

२ (‡) अत्र ग्रन्थस्यादर्शभूतस्य पाठ-सौकर्यं नास्ति ।

रूपद्रविण संयुक्तां भार्य्यां पक्षवतीन्तथा १(*) ।
तेन प्राप्नोति धर्म्मज्ञः श्रियश्चैव तथोत्तमाम् ॥
पक्षवतीं—पित्रादिबन्धुवर्गोपेताम् । तेन प्राप्नोत्यपितु प्राप्नोत्येव ।
तथा नार्य्यपि भर्त्रादीन् नात्र कार्य्यं विचारणा ।

—*—

## (१७१) अत्र तिथिप्रयुक्त दानम् ।

—*—

### 395. भविष्ये—

पौर्णमास्यां वृषोत्सर्गं कारयित्वा विधानतः ।
चन्द्रे रजसि निष्पन्नं वृषेणैकेन शोभनम् ॥
पूजयित्वा च यत्नेन नैवेद्यं विनिवेद्य च ।
दद्याद् विप्राय सत्कृत्य वस्त्रालङ्कार-भूषणैः ॥
मन्त्रेणानेन राजेन्द्र तन्निबोध मयो दितम् ।
क्षीरोदार्णव-सम्भूत-त्रैलोक्यगण-दीपकः ॥
उमापति-शिरोरत्न शिवायास्त्र नमोनमः ॥
दानेनानेन नृपति र्जायते चन्द्रवद्दिवि ।
अप्सरोभिः परिवृतो यावदाभूत संप्लवम् ॥

### 396. विष्णुधर्म्मोत्तरे—

यानि चान्यानि दानानि दत्तानि सुबहून्यपि ।
युगादिषु महाराज अक्षय्यानि भवन्तिहि ॥
अत्यल्पमपि यत्किञ्चित् प्रदद्यान्निर्द्धनोऽपि सन् ।
अक्षय्यन्तद् भवेत् सर्व्वं युगादिषु नसंशयः २(†) ॥
इति तिथिप्रयुक्त-दानानि ॥

—*—

१ (*) 'भार्य्यां पुत्रवतीन्तथा' इत्यपि पाठः सम्भवति ।
२ (†) चादर्श पुस्तकान्तरे श्लोकोऽयं नास्ति । अत्रभाति ।

## (१७२) अथ वारप्रयुक्त-दानानि ।

—*—

397. **ब्रह्मपुराणे**—

ग्रहान् स्वर्णमयान् कृत्वा यो विप्रेभ्यः प्रयच्छति ।
तद्दिनेषु यथाशक्त्या सर्वान् कामान् स विन्दति ॥
ग्रह प्रतिमा लक्षणं प्रागुक्त—परिभाषायां ज्ञेयम् ।

398. **स्कान्देऽपि**—

आदित्यादिषु वारेषु सहिरण्याः सदैवतु ।
यः प्रयच्छति तन्मूर्त्तीं स्तस्य तुष्यन्ति वैग्रहाः ॥

इति वारप्रयुक्त-दानानि ।

—*—

## (१७३) अथ नक्षत्रप्रयुक्त-दानानि ।

—*—

399. **विष्णुधर्म्मोत्तरे**—

कृत्तिकासु सुवर्णस्य दानं बहुफलं स्मृतम् ।
रक्तवस्त्रस्य रोहिण्यां सौम्ये भे लवणस्यच १(*) ॥
कृषरस्य तथार्द्रायां आदित्ये रजतस्यतु ।
घृतस्यतु तथापुष्ये गन्धानामथ सर्पभे ।
क्षेत्रस्यच तथा शाक्रे मूले मूलफलस्यच २(†) ॥
हेमाश्च मधु युक्तस्य दानमाप्ये महाफलम् ।
वैश्वदेवेऽन्नपानस्य श्रवणे वसनस्यच ३(०) ॥
धान्यस्य वासरे विप्रा वारुणे चौषधस्यच ।
आजे पुराणबीजानां सस्यानां तदनन्तरे ॥

१ (*) सौम्येभे—ज्योतिषोक्त मृगनक्षत्रे इति ।

२ (†) अत्र 'क्षेत्र' इत्यत्र रूप्य स्यैवेति हेमाद्रीये पाठः ।
भमाप्ये—वारुणे नक्षत्रे इति।

३ (०) 'विश्वंभरे' इति हेमाद्रौ पाठः ।

गोरसानां तथा पौष्णे स्नानानां अथवाश्विने।
तैलादि ब्राह्मणानां स्नानानामिति।
तिलानाञ्च महादानं भरणीषु महाफलम् १(*)।

इति नक्षत्र (निमित्त) दानानि।

—*—

## (१७४) अथ योगादि-दानानि।

—*—

400. **विष्णुधर्म्मोत्तरे—**

विष्कम्भे सर्व्वधान्यानां दानं सर्व्वाघ-नाशनम्।
प्रीतौ तथान्न पानानां आयुष्मति मृतस्यच॥
कुङ्कुमस्यच सौभाग्ये यवदानञ्च शोभने।
अतिगण्डेच वस्त्राणां पायसस्य सुकर्म्मणि॥
धृतौ रजतदानञ्च शूले मूलादि दानकम्।
गण्डे मण्डन दानञ्च वृद्धौ गोदानमिष्यते॥
ध्रुवेच पञ्चरत्नानां व्याघाते फाणितस्यच २(†)।
हर्षणे गन्धदानं स्याद्वज्रे दद्यान्मणीनपि॥
सिद्धौ सिद्धार्थका देया व्यतीपाते तु काञ्चनम्।
वरीयसि तिलान्दद्याद् वस्त्राणि परिघे तथा॥
जलकुम्भा शिवे देयाः सिद्धे सिद्धान्नमिष्यते।
साध्येऽलङ्करणानाञ्च च्छत्रदानं शुभे शुभम्॥
शुक्ले चोपानहोर्दानं शस्तं ब्रह्माणि सर्पिषः।
ऐन्द्रेच दीपकन्दद्या द्वैधृतौ कनकं हितम्॥
दानान्येतेषु योगेषु यथोक्तानि द्विजोत्तमाः ३(‡)
भक्तियुक्तो द्विजे दत्त्वा लोके वसति चक्रिणः ४(+)॥

इति योगदानानि ५(§)।

---

१ (*) 'महादान' मित्यत्र सदादान मिति पाठः हेमाद्रौ।

२ (†) अत्र 'फाणितं गुड शर्करादिजातम्' मत्स्यण्डी, तल्लड्डुकं वेति। 'मत्स्यण्डी फाणितं खण्डविकारे'।

३ (‡) 'यथा शक्त्या द्विजोत्तमाः' इति हेमाद्रिः।

४ (+) 'भक्तियुक्तोद्विजे' इति आदर्शग्रन्थान्तरस्थः पाठः।

५ (§) एतेषु विष्कम्भादियोगेषु उक्तानां धान्यादि द्रव्याणां दानं देयफलप्रदमिति भावः।

## (१७५) अथ करण-दानानि ।

—*—

करणेषु प्रवक्ष्यामि दानानि द्विजपुङ्गवाः ।
ववे पायसदानं स्या च्छत्रदानञ्च वालवे ॥
कौलवे गोरसान् दद्यात्तिलांस्तैतिल-नामनि ।
गराभिधाने लवणं वणिजे देय मम्बरम् ।
विष्टौच यष्टिकान्नानि शकुनौ सर्पिरेवच ॥
मधुदानं चतुष्पादे शङ्खं नागेच वाससाम् १(*) ।
दानं प्रियङ्गोः किन्तुघ्ने श्रेष्ठमुक्तं द्विजोत्तमाः ॥
इति करण-दानानि ।

—*—

## (१७६) अथ संक्रान्ति-दानानि ।

—*—

401. **विश्वामित्र**—

मेष संक्रमणे भानो मेषदाने महाफलम् ।
वृष संक्रमणे दानं गवां प्रोक्तं तथैवच ॥
वस्त्रान्नपान-दानानि मिथुने विहितानिच ।
घृतधेनुप्रदानञ्च कर्कटे परिशस्यते ॥
ससुवर्णं च्छत्रदानं सिंहे वै विहितं सदा २(†) ।
कन्या प्रवेशे वस्त्राणां सुरभीनां तथैवच ।
तूला प्रवेशे धान्यानां वीजानामेव कीर्त्तितम् ॥
कीट प्रवेशे वस्त्राणां वेश्मनां दानमेवच ।
कीटो वृश्चिको-मार्गशीर्ष इति ।
धनुः प्रवेशे वस्त्राणां यानानाञ्च महाफलम् ।
झष प्रवेशे दारूणां दानमग्ने स्तथैवच ॥

---

१ (*) 'शस्त्रं नागेच वाससाम्' इति हेमाद्रिः ।
२ (†) 'सिंहेऽपि' इति हेमाद्रिः ।
संक्रान्ति नामानि संक्रमणप्रकरणे ज्योतिषतत्त्वे सन्ति ।

झषो मकरो माघ इति।
कुम्भ प्रवेशे दानन्तु गवामम्बु-तृणस्यच।
मीन प्रवेशे स्नानानां माल्यानामपि चोत्तमम्॥]
दानान्यथैतानि मया द्विजेन्द्राः,
प्रोक्तानि कालेषु नरः प्रदाय।
प्राप्नोति कामान् मनसस्त्वभीष्टान्,
तस्मात् प्रसंसन्ति हि कालदानम्॥
इति संक्रान्ति दानानि।

—*—

## (१७७) अथ मास-दानानि।

—*—

402. **वामने—**

माघे मासि तिलाः शस्ता स्तिल धेनोश्च दानव!।
इध्मेन्धननदा श्चान्ये माधव प्रीणनाय तु॥
फाल्गुने व्रीहयो गावो वस्त्रं कृष्णाजिनान्वितम्।
गोविन्द प्रीणनार्थाय दातव्यं पुरुषर्षभ! १(*)॥
चैत्रे विचित्र वस्त्राणि शयनान्यासनानिच २(†)।
विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्मणे ष्वथ॥
गन्धाश्चमाल्यानि तथा वैशाखे सुरभीनिच।
देयानि द्विजमुख्येभ्यो मधुसूदन-तुष्टये॥
उदकुम्भाम्बुधेनूच तालवृन्तं सुचन्दनम् ३(‡)।
त्रिविक्रमस्य प्रीत्यर्थं दातव्यं साधुभिः सदा॥
उपानद् युगलं छत्रं लवणामलकानिच।
आषाढे वामन-प्रीत्यै दातव्या नितु भक्तितः ४(+)॥

---

१ (*) 'भरतर्षभ'! इति हेमाद्रिः।
२ (†) 'चैत्रे चित्राणि वस्त्राणि' इति तत्रैव।
३ (‡) 'उदकुम्भस्तु धेनुश्चे'ति ,, ,,। उदकुम्भः वारिपूर्णकुम्भः। अम्बु धेनुः— प्रागुक्तः जलधेनुः इति वा।
४ (×) अन्यत्र —'लवणामलकानिच' इतिभिन्न. पाठः।

घृतञ्च क्षीर कुम्भांश्च घृतधेनुः फलानिच ॥
श्रावणे-श्रीधर प्रीत्यै दातव्यानि विपश्चिते ।
मासि भाद्रपदे दद्यात् पायसं मधुसर्पिषी ॥
हृषीकेश प्रीणनार्थं लवणं सगुड़ौदनम् ।
तिलां स्तुरङ्ग-वृषभं दधिताम्रायसादिकम् ॥
प्रीत्यर्थं पद्मनाभस्य देयमश्वयुजि नरैः ।
रजतं कनकं दीपान् मणिमुक्ता फलादिकम् ॥
दामोदरस्य प्रीत्यर्थं प्रदद्यात् कार्त्तिके नरः ।
खरोष्ट्राश्वतरान् नागान् शूकरांश्च मजाविकम् १(*) ॥
दातव्यं केशवप्रीत्यै मासि मार्गशीर्षे नरैः ।
प्रासाद नगरादीनि गृह प्रावरणानिच ॥
नारायणस्य तुष्ट्यर्थं पौषे देयानि यत्नतः ।
दासी-दास मलङ्कार मन्नं षड्रस-संयुतम् ।
पुरूषोत्तमतुष्ट्यर्थं प्रदेयं सार्वकालिकम् ॥
यद्यदिष्टतमं किञ्चिद् यश्चाप्यास्ति(स्ति)शुभं गृहे ।
तत्तद्धि देयं प्रीत्यर्थं देवदेवस्य चक्रिणः २(†) ॥

### 403. देवीपुराणेच—

मार्गे रसोत्तमं दद्याद् घृतं पौषे महाफलम् ।
अत्र रसोत्तमं लवणम् ।
तिलान् माघे मुनिश्रेष्ठ सप्तधान्यानि फाल्गुने ।
विचित्रानिच वस्त्राणि चैत्रे दद्याद्द्विजोत्तमे ॥
वैशाखे द्विज गोधूमान् ज्यैष्ठे तोयभृतं घटम् ।
आषाढ़े चन्दनन्देयं सकर्पूरं महाफलम् ॥
नवनीतं नभोमासि छत्रं पौष्ठपदे मतम् ।
गुड़ शार्कर-वर्णाड्यान् लड्डुकानाश्विने मुने ! ॥
दीपदानं महापुण्यं कार्त्तिके यः प्रयच्छति ।
सर्व्वान् कामानवाप्नोति क्रमेणेदमुदाहृतम् ॥

---

१ (*) 'शकटोष्ट्र मजादिकम्' इति हेमाद्रौ ।

२ (†) चक्रिणोनारायणस्य इति ।

व्रतान्ते गां शुभान्दद्यात् सवत्सां कांस्य दोहनीम् ।
सयुगं सस्रजं वत्सं दापयेद्विधिनाऽमुना १(*) ॥
देवीं विरञ्चिं सूर्य्यञ्च विष्णुंवाथ यथाविधि ।
स्वभाव-शुद्धौ विधिवत् पूजयित्वा द्विजोत्तमम् ॥
दातव्यं वीतरागेतु काम-क्रोध-विवर्ज्जिते ।
व्रतान्ते मासदान-समाप्तौ, इति ज्ञेयम् ।

इति मासदानानि ।

—*—

## (१७८) अथर्त्तु दानानि ।

—*—

404. **विष्णु धर्म्मोत्तरे—**

स्नानानुलेपनादीनां वसन्ते दानमिष्यते ।
पानकानां तथाग्रीष्मे छत्राणान्तदनन्तरे २(†) ॥
शरद्यन्नस्य धर्म्मज्ञा वस्त्राणामपि हैमने (न्ते) ।
वह्निर्दानं नरः कृत्वा सूर्य्यस्योदयनं प्रति ३(‡) ॥
शिशिरे सततं वह्निं तर्पयित्वा तथानि(ति)लैः ।
कुल्माषं सघृतन्दत्त्वा यथाशक्त्या द्विजातिषु ॥
कायाग्नि दीप्ति प्राकाश्यं शत्रुनाशञ्च विन्दति ।
कुल्माषं स्विन्नधान्यम् ४(०) ।

405. **यमश्च—**

कृषरं भोजयित्वातु स्वशक्त्या शिशिरे द्विजान् ।
दीप्ताग्नित्व मवाप्नोति स्वर्गलोकञ्च गच्छति ॥

इत्यृतु दानानि ।

—*—

१ (*) श्लोकोऽयं भादर्शग्रन्थान्तरे नास्ति ।

२ (†) 'सयुगां सस्रजंवत्सां दापयेद्विधिना मुना' इतिच पाठो ग्रन्थान्तरे ।

३ (‡) 'वह्निदानं नरःकृत्वा' इति तत्रैव । वह्निदानं—शीतापनुत्त्यर्थं तुषिनैर्वह्निदानं कार्य्यम् । वह्निर्दानमन्यत् ।

४ (०) ग्रन्थच—कुत्सिता माषाः कुल्माषाः । कुलत्थाख्यमाष इति । छान्दोग्ये कुल्माषा उक्ताः ।

## (१७९) अथायन-दानम् ।

—*—

406. **स्कान्धे—**

धेनुन्तिलमयं राजन् दद्याद् यश्चोत्तरायणे ।
सर्व्वकामानवाप्नोति विन्दते परमं शुभम् ॥

407. **विष्णु धर्म्मोत्तरे—**

उत्तरेत्वयणे विप्रा वस्त्रदानं महाफलम् ।
तिलपूर्ण मनड्वाहं दत्वा पापैः प्रमुच्यते ॥

इत्ययन दानम् ॥

—*—

## (१८०) अथ सम्बत्सर-दानानि ।

—*—

408. **विष्णु धर्म्मोत्तरे—**

सम्बत्सरेतु दातृणां तिलदानं महाफलम् ।
परिपूर्व्व महादानं यवानां द्विजसत्तम १(*) ॥
परिपूर्वे (र्ण) परिवत्सरे, एवमग्रेऽपि बोध्यम् ।
इदा पूर्व्वेच वस्त्राणां धान्याणां वानुपूर्व्वके ।
इतपूर्व्वे रजतस्यापि दानप्रोक्तं महाफलम् २(†) ॥
सम्बत्सरादयश्च ज्योतिःशास्त्रे प्रसिद्धाः तेषां नामानिच ।

इति सम्बत्सर-दानानि ।

इति श्रीमद्विद्वज्जन कृपापात्रीभूतेनानन्ताचार्येण विरचिते विधान पारिजाते निबन्धे कालविशेष विहित दानानि ॥

—*—

१ (*) 'परिपूर्णतथादानं' इति हेमाद्रिः, मार्त्तविशेषश्च ।

२ (†) इदापूर्व्वं इति—इदावत्सरः, अनुवत्सरः, इद्वत्सरः । 'सम्बत्सरे तथादानं तिलस्यतु महाफलम् । परिपूर्व्वे तथादानं यवानाञ्च द्विजोत्तमाः । इदापूर्व्वेऽम्बवस्त्राणां धान्यानाञ्चानुपूर्व्वके । उदासम्बत्सरे दानं रजतस्य महाफलम्' । इत्यपि पाठभेदोविष्णुधर्म्मोत्तरे । ज्योतिः शास्त्रे पुराणेष संवत्सराणां संक्रान्तीनां नामानि सन्ति । धर्म्मशास्त्रे च संक्रान्तिषु दानं विशेष फलप्रदम् ।

## (१८१) अथारोग्य दानम् ।

—*—

### 409. नन्दी पुराणे—(१)

धर्म्मार्थ-काममोक्षाणां आरोग्यं साधनं यतः ।
अतस्त्वारोग्य दानेन नरोभवति सर्व्वदः १(*) ॥
आरोग्यशालां कुर्व्वीत महौषध परिच्छदाम् ।
विदग्ध-वैद्य संयुक्तां भृत्यावसथ संयुताम् ॥

तथा—(२)

वैद्यस्तु शास्त्रवित्-प्राज्ञो दृष्टौषध पराक्रमः ।
औषधी-मूल-वर्णज्ञः समुद्धरण-कालविद् ॥
रसवीर्य्य-विपाकज्ञः शालि-मांसौषधिगणे ।
योगविद्देहिणां देहं योधिया प्रविशेद्बुधः ॥
धातु-पथ्यमयज्ञश्च निदानविदतन्द्रितः २(†) ।
व्याधीनां पूर्व्वलिङ्गज्ञ स्तदुत्तरविधानवित् ॥
देश काल-विधानज्ञः चिकित्सा शास्त्रवित्तथा ।
अष्टाङ्गायुर्वेदवेत्ता मुष्टियोग-विधानवित् ॥

अष्टाङ्गानि—आयुर्वेदस्य यथा—

शल्यं, शालाक्यं, कायचिकित्सा, भूतविद्या, कौमारभृत्य, मगदतन्त्र, वाजीकरण, तन्त्रमिति, शुश्रुतोक्तानि ।

एवम्विधः शुभोवैद्यो भवेद् यत्राभि योजितः ।
आरोग्यशालामेवन्तु कुर्य्याद् यो धर्म्मसंश्रयः ॥
सपुमान् धार्म्मिको लोके सकृतार्थः स बुद्धिमान् ३(‡) ।
सम्यगारोग्य शालाया मौषधैः स्नेह-पाचनैः ।
व्याधितं निरूजीकृत्य अप्येकं करूणायुतः ।
प्रयाति ब्रह्मसदनं कुलसप्तकसंयुत. ॥

---

१ (*) वैद्यकेच—'धर्म्मार्थकाममोक्षाणां आरोग्यमुत्तमं बलम् । रोगास्तस्यापहर्त्तारः श्रेयसो-जीवितस्य च' ॥

२ (†) 'वैद्यस्तु' इत्यारभ्य 'योगविधानवित्' इत्यन्तोविषय आदर्शान्तरे हेमाद्रौचास्ति, नास्ति चैकस्मिन् ग्रन्थे । अपरं नन्दिकेश्वर पुराणेचास्ति ।

३ (‡) अस्मात् सर्व्वं गृह्णाते तद्दीकायाञ्चाहि नमस्ति ।

### 410 सौर पुराणे—

रोगिणां रोगशान्त्यर्थं औषधं यःप्रयच्छति ।
रोगहीनः सदीर्घायुः सुखी भवति सर्व्वदा ॥
आकाशस्य यथा नान्तः सुरैरप्युप लभ्यते ।
तद्वदारोग्य दानस्य नान्तो विद्यते वैक्वचित् ॥

इत्यारोग्य दानम् ।

—*—

## (१८२) अथरत्न दानम् ।

—*—

### 411. मदनरत्ने, विश्वामित्रः—

यः प्रयत्नेन रत्नानि विप्रेभ्यः सम्प्रयच्छति ।
स सर्व्व-गुण-सम्पन्नान् पुत्रान् विन्दति नन्दति ॥

### 412. सम्बर्त्तः—

समुद्रजानि रत्नानि नरो विगत-कल्मषः ।
दत्वा विप्राय महते प्राप्नोति महतीं श्रियम् १(*) ॥

### 413. स्कन्द पुराणे, प्रतिरत्नं फलमुक्तम् ।

विद्रुमाणां प्रदानेन रुद्रलोकं व्रजेद् ध्रुवम् ।
सर्व्व-पातक-निर्म्मुक्तो मुक्तादानेन जायते ॥
लोकमाप्नोति दानेन नरोवज्रस्य वज्रिणः ।
तथा प्रदत्ते गोमेदैः मोदते नन्दने वने ॥

---

१ (*) 'जाबालिरुवाच—
रत्नानि च द्विजे दद्याद्बहुमूल्यानि मानवः ।
अलङ्कार-निमित्तं वा देवताभ्योऽपि यत्नतः ।
अपाप-ताप निर्म्मुक्तो मुक्तिमेव समश्नुते ॥
नरत्नेभ्यः परं वस्तु नचास्ति भुवनत्रये ।
अतस्तद्दानतोयत्स्यात् फलंतत् केन वर्ण्यते' इति हेमाद्रौ दान खण्डे ।

सर्वे ग्रहाः प्रतुष्यन्ति पुष्परागस्य दानतः ।
गारुत्मतैर्म (र्ग) रुत्मन्तः पद्मरागैर रोगतः १(*) ॥

## दत्तै रत्नैरिति शेषः ।

प्रदानादिन्द्र नीलानां लीलानां भाजनम्भवेत् ।
सुखी शङ्खप्रदानेन शर्क्ति शुक्ति-प्रदानतः ॥
भूमिजानिच रत्नानि गजकुम्भोत्थितान्यपि ।
योददाति श्रियायुक्तः स देवोजायते ध्रुवम् २(†) ॥

इति रत्नदानम् ।

—*—

## (१८३) अथ श्रीमुक्ताफल दानम् ।

—*—

तत्र स्कान्दे एवं प्रकारान्तरेण रत्नदानमुक्तम् ।
सर्व्वेषामेव दानानां रत्नदानं महा फलम् ।
सर्व्वसिद्धिकरं प्रोक्तं मुनिभिर्लोमशादिभिः ॥
विधानन्तस्य वक्ष्यामि शृणु शौनक ! यत्नतः ।
इन्द्राण्या हि पुरा चीर्णमिन्द्रस्य प्रियकाम्यया ॥
शापादिन्द्रे पुरा नष्टे बृहस्पति-समीरितम् ।

414. **पुलोमजोवाच—**

बृहस्पति-सुराचार्य्य-ऋषिपत्नी-समागमात् ।
सहस्रभगतां प्राप्य लज्जितः सुरनायकः ॥
मेरौ सरसि तोयाढ्ये पुष्करं हि समाश्रितः ।
तत्र च्छिन्नः प्रवसति नहुषो मामभीप्सति ॥
इन्द्रत्वं प्रापितो देवैः किं कार्य्यं वद मे प्रभो ! ।

---

१ (*) वेदव्यासश्च—'रत्नदानञ्च सुमहत् पुण्यमुक्तं जनाधिप ! ।
तानि विक्रीय यजति ब्राह्मणोस्य भयङ्करः' ॥

२ (†) 'वैदूर्य्यः मुख्यलं.काश्च पद्मरागैररोगताम्' इति हेमाद्रौ ।

३ (‡) सर्व्वमन्यत् श्रीभोजराजीये युक्तिकल्पतरौ मानारत्न प्रकरणे मुक्ताफलवर्णनमस्ति ।

415. **बृहस्पतिरुवाच—**

सुरेशः स्वापराधेन पुष्करे वसति ध्रुवम् ॥
तद्दोषपरिहारार्थं दानमेकं समाचर ॥
अश्वमेधः क्रतुश्रेष्ठो ज्योतिःश्रेष्ठो दिवाकरः ।
द्विपदां ब्राह्मणः श्रेष्ठा देवश्रेष्ठो यथा हरिः ॥
स्वर्णदी सरितां श्रेष्ठा शब्दश्रेष्ठा यथा श्रुतिः १(*) ।
दानानामुत्तमं दानमिदं वक्ष्ये पुलोमजे ! ॥
मुक्ताफलमिति ख्यातं ब्रह्मणा नारदाय च ।
सर्व्वपाप-क्षयकरं सर्व्वसम्पत्-प्रदायकम् ॥
सर्व्वदुःखप्रशमनं सन्तति-प्रतिवर्द्धनम् ।
तस्मिन्नाचरिते देवि ! दोषं प्रक्षाल्य वासवः ॥
समायास्यति स्वर्लोकं नहुषश्च विनश्यति ।
तत्रोपायास्त्वया कार्या नहुषस्य प्रणाशने ॥
मुनिभिर्विहितं यानं समाम्नाय च मामिह २(†) ।
नान्यथा नौ हि संशम्यादिति वाच्यो हि स त्वया ३(‡) ॥

—*—

## (१८४) आरोग्याद्यर्थं मुक्ताफल दान विधानानि ।

—*—

ऋषिभिः शापितो यायादधोगतिमनुत्तमाम् ।
यस्मात् सुरेशः स्वपदमिति मे निश्चिता मतिः ॥

416. **इन्द्राण्युवाच—**

कथं विधेयं तद्दानं कस्मिन् काले द्विजोत्तम ।
कश्चास्य विधिरुद्दिष्टस्तत् सर्व्वं ब्रुहि मे गुरो ! ॥

---

१ (*) 'गायत्र्या ब्राह्मणमसृजत्'। 'द्विपदां ब्राह्मणोवरः इति' विराटपर्व्वणि ।
२ (†) 'विहित'मित्यत्र 'वाहित'मिति पाठः क्वचिदपरे ।
३ (‡) 'नान्यथा नौ हि संशमयेत् इति वाच्यो हि स त्वया'। इति पादशंयग्यान्तरधृतः पाठः ।

417. **बृहस्पतिरुवाच—**

शुभे काले शुभे देशे चन्द्रताराबलान्विते ।
व्रतानामुत्तमं कार्य्यं श्रीमुक्ताफलनामकम् ॥
स्वस्ति वाच्या द्विजैः पूर्व्वं कर्म्मसंकल्प-पूर्व्वकम् ।
मनोरथानां संसिद्ध्यै सर्व्वरिष्ट-निवृत्तये ॥
आचरिष्ये व्रतमिदं श्रीमुक्ताफल-संज्ञितम् ।

## इति सङ्कल्प—मन्त्रः ।

सश्रीकं विष्णुमावाह्य शङ्खचक्रगदाम्बुजैः ।
चतुर्भुजं तार्क्ष्यसंस्थं प्रद्युम्नसहितं विभुम् ॥
प्रतिमायाः सुवर्णस्य पूजयेदुपचारकैः ।
पुष्पमण्डपमध्ये च छत्रचामर-संयुते ॥
एकादश्याञ्च सम्पूज्य द्वादश्यां दानमाचरेत् ।
मुक्ताफलानि प्राग् दद्यात्त्र्यत्रिंशति संख्यया ॥
यद्वा षोड़श-संख्याकं (कं) स्ववित्तस्यानुसारतः ।
अतो मुक्ताफलं दानमित्याहु र्म्मुनयस्त्विदम् ॥
द्वितीये हीरकन्दद्यादेवमेव शुभानने ।
तृतीये चेन्द्रनीलं स्याद्गोमेदन्तु चतुर्थके ॥
प्रवालं पञ्चमे प्रोक्तं षष्ठेवै पुष्परागकम् ।
गारुत्मकं सप्तमे तु वैदुर्य्यञ्चाष्टमे स्मृतम् ॥
प्रवालं नवमे दद्याद् दशमे वज्रसंज्ञितम् ।
एकादशे पञ्चरत्नं द्वादशे नवरत्नकम् ॥
एवं द्वादशमासेषु देयं पूर्व्व-विधानतः ।
यथा रत्नेषु सर्वेषु सर्वे देवा व्यवस्थिताः ॥
तथा शान्तिं प्रयच्छन्तु रत्नदानेन मे सुराः ।
इति मन्त्रेण योदद्यात् पूर्व्वोक्त-विधिपूर्व्वकम् ॥
क्षेत्रे कालान्तरे चापि सर्वान् कामानवाप्नुयात् ।
एवमेव फलानान्तु च्यूतादीनां विधिः स्मृतः ॥
दक्षिणा धान्यसहिता सम्यग् देया न चान्यथा ।

सूतउवाच—

बृहस्पतेर्मुखादेवं श्रुत्वेन्द्राण्या कृतं व्रतम् ।
श्रीमुक्ताफलसंज्ञन्तु सर्व्वसिद्धिप्रदायकम् ॥
रत्नान्तरप्रदाने तु तत्तच्छब्दं प्रयोजयेत् ।
समस्तरत्नदानानामशक्तौ शक्तितो ददेत् ॥
अभीप्सितं यथेन्द्राण्या व्रतादस्मादभूच्छुभम् ।
तथान्येषामनुष्ठानाद् व्रतस्यास्य भविष्यति ॥

इति मुक्ताफलदानानि ॥

—*—

## (१८५) अथालङ्कार दानम् ।

—*—

418. ब्रह्मवैवर्त्त पुराणे—

द्विजातिभ्यस्तु यो दद्यादलङ्कारान् समुज्ज्वलान् ।
सोऽलङ्कृतः सर्व्वलोके क्रीड़त्यप्सरसां गणैः ॥
अलङ्कारप्रदानेन सुरूपः सुभगो भवेत् ।
तथालङ्कारदानेन दीर्घायुश्चैव विन्दति ।
अलङ्कारास्तु नानाविधाः ।
ग्रन्थगौरव भीत्या न लिख्यन्ते ।

इत्यलङ्कार दानम् ।

—*—

## (१८६) अथ वस्त्रदानम् ।

—*—

419. नन्दि पुराणे—

वस्त्रं यश्चार्थिने दद्याच्छुभं चापि यदृच्छया ।
स भवेद्धनवान् श्रीमान् बृहस्पतिपुरे वसेत् ॥

420. **विष्णुधर्म्मोत्तरे—**

वासो हि सर्व्वदैवत्यं सर्व्वप्रायोज्यमुच्यते।
वस्त्रदानात् सुरेशःस्या द्रूपद्रविणसंयुतः १(*)॥
युक्तो लावण्य सौभाग्यै र्विरोगश्च तथा द्विजः।

**तथाच—**

दत्वा कार्पासिकं वस्त्रं स्वर्गलोके महीयते।
दत्वा सरोमन्तत्रापि फलन्दशगुणं लभेत्॥
आविकं वसनन्दत्वा भृगूणां लोकमाप्नुयात।
छागन्दत्वा चाङ्गिरसं क्षौमं दत्वा बृहस्पतेः॥
वसूनां लोकमाप्नोति दत्ते च मृगलोमिके।

**तथा—**

सर्व्वदो वस्त्रदः प्रोक्तो मतः सर्व्वत्र वस्त्रवान्।
श्रियमाप्नोति धर्म्मज्ञ स्तद्धि तस्माद्विशिष्यते॥

421. **अथ भविष्य पुराणे—**

यो वस्त्रं भानवे दद्यादहतञ्च महाजनः २(†)।
सचेन्द्रलोकमासाद्य वन्द्यस्तु त्रिदशैरपि ३(‡)॥

422. **आदित्य पुराणे—**

वह्ने वस्त्रप्रदानेन ब्रह्मलोकं प्रपद्यते।

423. **नन्दि पुराणे—**

वासांसितु विचित्राणि स्वर्गलोके महीयते।
स्नापितानि शिवे दद्याद् विकेशानि नवानिच॥

---

१ (*) 'वस्त्रदाने'ति हेमाद्रिधृतः पाठः।
—तत्रैव 'मोलं वस्त्रं तथा जीर्णं न देयं ब्राह्मणस्य तु।
देयं वरं चाङ्गिरसं लोकं याति तदर्पणैः'।
मानवे धर्म्मशास्त्रे च—
'वासोदश्चन्द्रसालोक्यं अश्विसालोक्यमश्वदः'।
तत्रैवान्यच्च 'न रक्तमुल्वणं वासो न नीलञ्च प्रशस्यते' इति।
२ (†) 'महाधन' इति हेमाद्रिः।
३ (‡) 'सहपितृलोकम्' इति चादर्श ग्रन्थान्तरस्थः पाठः।

यावत्तद्वस्त्ररूपाणि परिमाणं विधीयते १(*) ।
तावद्वर्ष सहस्राणि स्वर्गलोके महीयते ॥
क्षापितानि—क्षालितानि ।
विकेशानि—नरकेश रहितानि ।

### 424. वराह पुराणे—

क्षौमाम्बराणि योदद्यात् पत्रोर्णानिच चक्रिणे ।
कार्पासजानि वा दद्या द्भक्त्या वित्तानुसारतः ।
तत्र वासांसि यावन्त स्तन्तूनां परिमाणतः २(+) ॥
तावद्वर्ष सहस्राणि विष्णुलोके महीयते ३(×) ।

### 425. देवी पुराणे—

अण्डजैर्वीजजैर्व्वापि वस्त्रैरभ्यर्च्च्य शैलजाम् ४(०) ॥
सम्भूज्याभरणैः शक्र ! चक्रवर्त्तित्व-माप्नुयात् ।

### 426. नन्दि पुराणे—

उष्णीषदायिनो मर्त्या जायन्ते मुकुटोज्ज्वलाः ।
विस्तीर्ण-राजवंशेषु सितच्छत्राग्रय लक्षणाः ॥

### 427. नारदीय पुराणे—

निष्किञ्चनेभ्यो दीनेभ्यः शीत-वात महातपैः ।
अर्द्दितेभ्यः करुणया वस्त्रमौर्णं ददाति यः ॥
न तस्य सुकृतं वक्तुं शक्यते त्रिदशैरपि ।
आधिव्याधि विनिर्म्मुक्तः सोऽक्षयं सुखमश्नुते ॥
इति वस्त्रदानानि ।

*—

१ (*) यावत्तद्वस्त्रतन्तूनाम्' इति हेमाद्रिः ।
२ (+) 'तत्र वासांसियावन्ति' इति वा ग्रन्थान्तरे पाठान्तरम् ।
३ (×) 'स्वर्गलोके महीयते' इति हेमाद्रिः ।
४ (०) 'चर्मजै'रिति हेमाद्रिः ।

## (१८७ अथ शय्या दानम् ।

—*—

428. **तत्र वेदव्यासः—**

सुगन्धि-चित्रास्तरणोपपन्नम्,
दद्यान्नरोयः शयनं द्विजाय ।
रूपान्वितां पक्षवतीं मनोज्ञाम्,
भार्य्यामयत्नोपचितां लभेत् सः ॥

429. **अथ विष्णुसंहितायाम्—**

शय्यादानञ्च योदद्यात्तस्यापि शृणु विस्तरम् ।
सर्व्वकालेषु दातव्या तथा पुण्यदिनेषुच ॥
गजदन्तैःप्रवालैर्वा सुवर्णरजते नवा ।
कार्य्या गात्राणि पादाश्च वलभ्यश्च सदक्षिणाः ॥
अलाभेऽपिच कर्त्तव्या स्तुल्यकाष्ठमयाः शुभाः ।
सन्ध्याभ्रपटलाकारै रास्तीर्णा परितःशुभैः ॥
शिरोधरैः सवितानैः प्राकारै र्निर्म्मितैरिति ।
मणिसौवर्णपात्रैश्च रौप्यैस्ताम्रैश्च संयुताः ॥
फलपुष्पसुगन्धैश्च ताम्बुलाद्यैः सुविस्तरैः ।
दर्पणैश्च पदत्राणै र्नानाद्रव्यैर्विभूषणैः ॥
चतुष्कोणेषु संस्थाप्य यथाशक्ति युधिष्ठिर ! ।
घृतकुङ्कुम-गोधूम पूर्णपात्रं जनस्यच ॥
शय्यां सम्पूज्य यत्नेन मद्भक्तोमतपरायणः ।
कृताञ्जलि पुटोभुत्वा कुर्य्याच्छय्यां प्रदक्षिणम् ॥
नारायणाय देवाय प्रणम्यच चतुर्द्दिशम् ।
ब्राह्मणाय दरिद्राय श्रुताध्ययन-शालिने ॥
तथा प्रज्ञान-विदुषे शय्यां दद्याद्विचक्षणः ।
तस्य दानस्य यत् पुण्यं विमानं कनकोज्ज्वलम् ॥
नाना पुरुष-संकीर्णं नानापुष्प-समन्वितम् ।
नाना दिव्याप्सरःसेव्यं नानारत्नैः समावृतम् ॥

नाना द्रव्योपसंयुक्तं विमानमधितिष्ठति ।
तस्मादिन्द्रपुरं गच्छेत सेव्यमानोऽप्सरोगणैः ॥
षष्ठिवर्षसहस्राणि क्रीढ़यित्वा तथा सुखम् ।
इन्द्रलोकात् परिभ्रष्ट इहलोके नृपोभवेत् ॥
षष्ठियोजनविस्तीर्णे स्वामी भवति मण्डले ।

430. **महाभारते—**

शय्यामास्तरणोपेतां सुप्रच्छादन संयुताम् ।
प्रच्छाद्य यस्तु विप्राय शृणु तस्यापि यत्फलम् ॥
सुरूप सुभगः श्रीमान् स्त्रीसहस्राभिसंवृतः ।
दशवर्षसहस्राणि स्वर्गलोके महीयते ॥

431. **स्कान्दे रेवाखण्डे—**

शय्यान्दद्यात् प्रयत्नेन श्लक्ष्नां तुलवती युताम् ।
प्रच्छादनपटैर्युक्तां गन्धधूपादि-वासिताम् ॥
तस्यां संस्थापयेद्धेमं हरिं लक्ष्म्या समन्वितम् ।
उच्छीर्षके घृतभृतं कलशं परिकल्पयेत ॥
विज्ञेयः पाण्डवश्रेष्ट हरिद्रा-कलशोऽम्बुधैः ।
ताम्बुल-कुङ्कुम क्षोद-कर्पुरागरु-चन्दनम् ॥
दीपकोपानहच्छत्रं चामरासन-भाजनम् ।
पार्श्वेषु स्थापयेद्भक्त्या सप्तधान्यानि चैवहि ॥
शयनस्थस्य भवति यदन्यदुपकारकम् ।
भृङ्गार-करकाद्यन्त-पञ्चवर्णं बितानकम् ॥
शय्यामेवम्बिधां कृत्वा ब्राह्मणायोपपादयेत ।
सपत्नीकाय सम्पूज्य पुण्येऽह्नि विधिपूर्वकम् ॥
प्राग्वितानैर्मथैवास्य-प्रातर्होमं समाचरेत् ।
पूरुषसूक्तै र्होतव्यं तिलाज्यैर्यवमिश्रितैः ॥
शत मष्टोत्तरञ्चैव ततः शय्यां प्रदापयेत् ।

**ततो दानमन्त्रः—**

यथा नकृष्ण शयनं शून्यं सागर जातया ।
शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥

यस्मादशून्यं शयनं केशवस्य शिवस्यच ।
तथा ममाप्यशून्यास्तु शय्या जन्मनि जन्मनि ॥ इति
दत्त्वैवं तल्पममलं प्रणिपत्य विसर्ज्जयेत् ।
एवं शय्या प्रदानस्य विधिरेषः प्रकीर्त्तितः ॥
स्वर्गे पुरन्दरगृहे सूर्य्यपुत्रालयेऽथवा ।
सुखं वसेदसौ जन्तुः शय्यादान-प्रभावतः ॥
मृतस्यैकादशाहेतु विधिरेषः प्रकीर्त्तितः ।
ददाति यदि धर्म्मार्थी वान्धवेऽवान्धवे मृते ॥
विशेषश्चात्र राजेन्द्र कथ्यमानं निशामय ।
तेनापि भुक्तं यत्किञ्चित् किञ्चित् पूर्व्वं गृहे धृतम् ॥
तद्गात्र-लग्नञ्च तथा वस्त्रवाहन-भाजनम् ।
यद् यदिष्टञ्च तस्यासीन् तत्सर्व्वं परिकल्प्यते ॥
तमेव पुरुषं हैमं तस्यांशं स्थापयेत्तदा ।
पूजयित्वा प्रदातव्या मृतशय्या यथोदिता ॥
एवं कृते मृतोजन्तुः यमलोकं नगच्छति ॥

432. **वेदव्यासः—**

'सुगन्धि चित्रास्तरणोपपन्न' मिति प्रागुक्तम् १(*)

433. **विष्णुसंहितायाञ्च—**

'शय्या प्रदान-ममलं तव पाण्डुपुत्र !
सङ्कीर्त्तितं सकलसौख्य विधानभूतम् ।
योवै ददाति विधिवत् स्वयमेव नाके,
कल्पं विकल्परहितः स विभाति मर्त्यः २(†) ॥

इति शय्या दानम् ॥

—*—

१ (*) शय्यादान प्रारम्भे श्लोकः व्यासोक्तः ।
२ (†) हेमाद्रीये चतुर्वर्गचिन्तामणौ दानखण्डे चत्वत् पुष्पकर्माणि ।
चत्र तल्पमित्यत्र कल्पमिति च पाठः ।

## (१८८) अथ देव-शय्या दानम् ।

—*—

434. **शिवधर्म्मे—**

हंसतुली समायुक्तां मृद्वीं खट्वामलङ्कृताम् ।
सर्व्वोपकरणोपेतां शिवशय्यां निवेदयेत् १(*) ॥
तदूर्णातूली वस्त्राणां परिसंख्यातु यावती ।
तावद्वर्ष सहस्राणि रुद्रलोके महीयते ॥
विष्णवेऽप्येवमेवं स्याच्छय्यादानं महाफलम् ।

इति देव-शय्या दानम् ॥

—*—

## (१८९) अथासन दानम् ।

—*—

435. **लिङ्गपुराणे—**

आसनं शयनञ्चैव योददाति यशस्विने ।
समं सर्वेषु भूतेषु तस्य दुःखं नविद्यते ॥

436. **स्कन्दपुराणे—**

आसनं यः प्रयच्छेत सम्वीतं ब्राह्मणायवै ।
स राजस्थानमाप्नोति तेजस्वी विगत-ज्वरः २(†) ॥

---

१ (*) 'शिवं देवीसमाकीर्णं पीठं कृत्वा निवेदयेत् ।
शिवज्ञानार्थतत्त्वज्ञे चाचार्ये वा निवेदयेत् ।
'तन्मूर्णतूलवस्त्राणां परिसंख्यातु यावती' ।
'शिवज्ञानार्थतत्त्वज्ञे चाचार्य्ये च दद्यान्विति' ।
समपूज्य पत्रपुष्पाद्यै वस्त्रालङ्कारभास्वरैः ।
भोज्यभोज्यैरशेषैश्च ततः शय्यां निवेदयेत्' । इति ग्रन्थान्तर धृतः पाठः ।
—एवमेव हेमाद्रिधृतश्च ।

२ (†) 'स्वाराज्य मिति' हेमाद्रिधृतः पाठः ।

437. **आदित्य पुराणे—**

सुगन्धिचित्राभरणोपशोभितम्,
यस्त्वासनं वेदविदे प्रदद्यात ।
ग्रामाधिपत्यं स लभेत शीघ्रम्,
कुले महत्वं लभते समग्रम् ॥

इत्यासनदानम् ।

—*—

## (१६०) अथ दर्पण-दानम् ।

—*—

438. **मार्कण्डेय पुराणे—**

दर्पणं योनरोदद्या न्निर्मलञ्च द्विजातये ।
स चन्द्र लोकमासाद्य मोदते शरदां शतम् ॥

439. **नन्दिप्रोक्ते—**

शिवस्य पुरतो दद्याद्दर्पणं चारु-निर्म्मलम् ।
पर्य्यन्तशोभितं कृत्वा श्वेतमाल्यैश्च चन्दनैः ।
चन्द्रांशु-निर्म्मलः श्रीमान् सुभगः कामरूपधृक् ।
कल्पायुत सहस्राणि रुद्रलोके महीयते ।
चन्द्रमण्डल-संकाशं नक्षत्रे विष्णुदैवते ।
द्वादश्यां पुण्यकालेच विष्णुं सम्पूज्य भक्तितः ।
दर्पणं योनरो दद्यात् स्रक्चन्दन-विभूषितः ।
रूपवान् सुभगः श्रीमान् ज्ञानवान् जायते नरः १(*) ।

इति दर्पणदानम् ॥

—*—

१ (*) अयमंशः हेमाद्रीदानखण्डे नास्ति ।

## (१६१) अथ व्यजन दानम् ।

—*—

440. **भविष्य पुराणे**—

तालवृन्तं द्विजेभ्यस्तु यः प्रयच्छति भक्तितः ।
सदिव्य-भोग-सम्भोग-अरोगः सर्व्वदा भवेत् ॥
महातप-परिश्रान्ति-घर्म्म-निर्मूल न क्षमम् ।
न तालवृन्त-पवना दपरं सुखकारणम् ॥
अतोदद्यात्तालवृन्तं घर्म-श्रम-निवृत्तये ।

441. **महाभारतेऽपि**—

योददाति द्विजाग्रेभ्यो व्यजनं श्रमनाशनम् १(*) ।
स नन्दन-वनामोद-मोदमानः सदानघः २(†) ॥
वसेदशेष-कल्पान्त पर्य्यन्तं स्वर्गधामनि ३(‡) ।

इति व्यजनदानम् ॥

—*—

## (१६२) अथ चामर दानम् ।

—*—

442. **महाभारते**—

यस्तु दद्याद्विजाग्रेभ्यो भक्त्या चामरमुज्ज्वलम् ।
स भूपत्वमवाप्नोति निःशेषेऽवनीमण्डले ॥

443. **वायुपुराणे**—

चामरं चामरेशाय यः शिवाय निवेदयेत् ।
स सर्व्वकामः सम्पूर्णः स्वर्णशैलतटे वसेत् ॥

१ (*) 'अतः सदा सुदायुकस्ताव्यजनं द्विजातये ।
दद्यादघ-निर्मुक्तं मुक्तिसम्भुक्तिहेतवे' इति हेमाद्रिः ।
व्यजनं जननन्दनं' इति तत्रैव पाठः ।
२ (†) 'मोदमानः सदानरः' इति तत्रैव पाठः ।
३ (‡) 'स्वर्गलोकेऽक्षयः' इति च तत्रैव ।
"— 'चदिवमितमयमेव भूपतेः शशिप्रभं चामरमुमेवचामरे' इति महाकविः ।

मायुरं चामरं योऽपि विष्णवे विनिवेदयेत् ।
स विमान वरारूढःवीज्यतेऽप्सरपां गणैः १(*) ॥
इति चामरदानम् ॥

—*—

## (१६३) अथ वितान दानम् ।

—*—

444. **कालिकापुराणे—**

चन्द्रोदये सुविस्तीर्णं वर्णकै र्मिश्रितन्तथा ।
प्रलम्बि-मुक्तास्तवकैः शोभितं श्लक्ष्णमुत्तमम् ॥
सुरक्त-पट्टसूत्रादि-बन्ध-सम्बन्ध-बन्धुरम् ।
सर्व्वतोभद्रमुख्यानां मण्डलानां विभक्तिभिः ॥
लिखिताभिश्च पुरतो महाविस्मय कारकम् ।
एवम्बिधं वितानं यो विधायाथ द्विजन्मने ॥
शिवाय विष्णवे वाथ पुण्येऽह्नि प्रतिपादयेत् ।
स समुद्धरते न्यून मात्मनःपुरुषत्रयम् २(†) ॥
स्वयं शिवपुरे रम्ये भोगान् भुक्त्वा मनोरमान् ।
क्रमादागत्य लोकेऽस्मिन् सुखी ज्ञानी धनी भवेत् ॥
इति वितानदानम् ।

—*—

## (१६४) अथ गन्ध दानम् ।

—*—

445 **अत्र सम्वर्त्तः**—

गन्धानाभरणाद्यांश्च द्विजाय यः प्रयच्छति ३(†) ।
स सुगन्धोमुदायुक्तो यत्र यत्रापि जायते ।

१ (*) चामरविषये श्रीभोजराजीये युक्तिकल्पतरुग्रन्थे बहुधा वर्णित मस्ति ।
२ (†) 'चात्मतः पूर्व्वपुरुषान्' इति हेमाद्रिः ।
३ (‡) 'यःप्रयच्छति धर्म्मवित्' " " ।

तत्र सुगन्धिदेहत्वं गन्धदाना दवाप्नुयात् ॥
सौभाग्यकारकं प्रोक्तं प्रदानं कुङ्कुमस्यतु ।
तथा कर्पूरदानेन सर्व्वान् कामानवाप्नुयात् ॥
मृगदर्प-प्रदानेन यशसा भुवि जायते १(*) ।
यक्षकर्द्दमदानेन साम्राज्यं प्राज्यमश्नुते ।

इति गन्धदानम् ॥

—*—

## (१६५) अथ ताम्बूल दानम् ।

—*—

### 446. भविष्य पुराणे—

ताम्बूलं योनरोदद्यात् प्रत्यहं नियमान्वितः ।
देवेभ्योऽथ द्विजातिभ्यः स महाभाग्यमश्नुते-
इह संसारिणां नृणां मनुष्यत्वं सुदुर्लभम् ॥
ताम्बूलदाना त्तन्नृणां अनायासेन जायते ।

### 447. ब्रह्माण्ड पुराणे—

ताम्बूलमुज्ज्वलं दद्याद् यो विप्रेभ्यः समाहितः ।
शिवाय विष्णवेवाथ नाग-लोके महीयते ॥

### 448. विष्णु धर्म्मोत्तरे—

ताम्बूलस्य प्रदातेह सौभाग्यमपि विन्दति ।
दत्त्वा जातीफलं विप्रे सफलां विन्दति क्रियाम् ॥
मुखवास प्रदानेन सुखसौभाग्यमाप्नुयात ।

इति ताम्बूलदानम् ।

—*—

'मृगदर्प.—मृगमदः कस्तूरीति यावत् ।
—नरः सुगन्धि-देहत्वं गन्धदानादवाप्नुयात् ।
भोगवान् जायते नित्यं शरीरं नास्य नश्यति' । इति हेमाद्रिः ।

## (१६६) अथ पुष्पदानम् ।

—*—

449. **महाभारते**—

मनोह्लादयते यस्माच्छ्रियञ्चापि ददाति यत् (यः) ।
तस्मात् सुमनसः प्रोक्ता नरैः सुकृत कर्म्मभिः ॥
देवताभ्यः सुमनसः यो ददाति नरः शुचिः ।
स सर्व्व-कामानाप्नोति प्रेत्य स्वर्गे महीयते ॥

450. **नन्दिपुराणे**—

धूपदः सुरभिर्नित्यं पुष्पदः सुभगः सदा ।
तस्माद्देवाय विप्राय दातव्यं तत सुखार्थिभिः ॥

451. **लैङ्गे, (यमः)**—

पुष्टिर्भवेत सदा कालं प्रदानाद् गन्धमाल्ययोः ।
देवता-पुष्पदानेन जायते श्रीसमन्वितः ॥
ऊर्द्ध्वाङ्गतिमवाप्नोति यश्च धूप-प्रदोनरः ।

452. **विश्वामित्रः**—

देयाःसुमनसोनित्यं नरैःपुण्य-फलार्थिभिः ।
किमस्ति दैवतं तादृग् यत् पुष्पैर्नैव तुष्यति ॥

इति पुष्पदानम् ।

—*—

## (१६७) अथ गीतादि दानम् ।

—*

453. **नन्दि पुराणे**—

यो गान वाद्यं दद्यात् ब्राह्मणाय सुबुद्धिमान १(*) ।
स गन्धर्व्वे पुरे गच्छे द्वसेत्तत्र युगत्रयम् ॥

---

१ (*) 'यो गीतवाद्यं' इति हेमाद्रौ पाठः ।

गायन् याति पिबन् याति खादन् याति गृह्णन्तथा ॥
यो भोजनस्य वेलायां विप्राणां गेयमाचरेत् ।

454. विष्णुधर्म्मोत्तरे—

देवतायतने यस्तु ब्राह्मणानां गृहेषु वा ।
गानं गीतस्य मधुरं गन्धर्वाणां पुरे वसेत् १(†) ॥
अतोद्यविद्यया राजन् प्रीणयन् द्विजदेवताः ।
स स्वर्ग-लोकमासाद्य देवताद्यैर्विनोद्यते ॥
देवताग्रे द्विजाग्रे यो नित्यं सुनृत्यमाचरेत् ।
विनोदयन्ति तं स्वर्गे नित्यमप्सरसां गणाः ॥
योगीत-नृत्य-वाद्यानि मूल्यं दत्वातु कारयेत् ।
स शक्र-भवने तिष्ठेद् यावदाभूत संप्लवम् ॥
योवापि मुखवाद्येन विनोदयति देवताम् ।
स धौत कल्मषमलः स्वर्गं याति नसंशयः ॥
वचने ने न्द्रियेणापि यः प्रीणयति मानवान् ।
विमत्सर-मना भूत्वा यस्तौति गुणिनोगुणान् ॥
स्वीयैःपरकृतैर्व्वापि यस्तोत्रैः स्तौति देवताः ।
तस्य पुण्यवतः पुण्यमगण्यं केन वर्ण्यते ॥

तत्तु—

शङ्खचक्राद्यङ्कनञ्च नृत्यगीतादिकन्तथा ।
एकजातेरयं धर्म्मः नजातस्य द्विजन्मनः । इति ।

तत्तु—

वृथा वृत्त्यर्थत्वेनापि न कर्त्तव्य मित्येतत्पर-विहिते-
निषेधानवकाशादतएव—
ब्राह्मणः क्षत्रियो वैश्यः शूद्रोऽथ प्रतिलोमजः ।
शिवस्य विष्णोः प्रीत्यै वा गायन् नित्यं दिवंव्रजेत् ॥
इति विष्णुधर्म्मोत्तरे उक्तम् ॥

—*—

१ (†) 'गायन् गीत' सुमधुरं' इति हेमाद्रौ पाठः ।

इति गीतादि-दानम् ॥

## (१६८) अथ छत्रोपानड् दानम् १(*)।

455. **तत्र बृहस्पतिः—**

असिपत्रवनं मार्गं क्षुरधारा समन्वितम्।
तीक्ष्णातपञ्च तरति छत्रोपानत् प्रदोनरः॥

456. **आदित्य पुराणे—**

निदाघ-काले वर्षायां छत्रं यः सम्प्रयच्छति।
तस्यकश्चिन्मनोदाहः कदापिच नजायते॥

457. **महाभारते—**

उपानहौ प्रयत्नादूयो ब्राह्मणेभ्यः प्रयच्छति।
मर्द्दते कण्टकान् सर्व्वान् विषमान् सन्तरिष्यति २(†)॥
शकटं दम्यसंयुक्तं दत्तं भवति तेनवै।
यानञ्चाश्वतरीयुक्तं तस्य स्वर्गे विशाम्पते॥
उपतिष्ठति कौन्तेय रौप्यकाञ्चन शोभितम्।
तत्रैव सूर्य्येण यमदग्नेरूपदेशे—३(‡)
तस्मात् प्रयच्छ विप्रेभ्यश्छ त्रोपानहमुत्तमम्।
धर्म्मस्ते सुमहान् भावी नमेऽत्रास्ति विचारणा॥

458. **देवलः—**

च्छत्रदश्छायया याति यानेनोपानहप्रदः।

459. **यमश्च—**

छत्रदोगृहमाप्नोति गृहदो नगरन्तथा॥

१(*) षोड़शदानेषु छत्रोपानड्दानमस्ति। अतो च—
'छत्री वर्षातपे चैव रात्रौ दग्धाटवी सुच।
शरीरबाधकामी वै सोपानत्कः-सदा व्रजेत्'॥

२(†) 'विषम' सन्तरत्यपि' इति ग्रन्थान्तर-धृतः पाठः।

३(‡) सूर्य्यकरसन्तप्त रेणुकादर्शन कोपितस्य जमदग्नेः सूर्य्येण सह सम्वादः

460. **यमदग्निः—**

दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ ।
स्नातकाय महाबाहो संशिताय द्विजातये ॥
गोलोके स मुदायुक्तो वसत्यपि हि भारत ! १(*) ।

इति छत्रोपानद्दानम् ॥

—*—

## (१६६) अथ पात्रदानम् ।

—*—

भाजनं यः प्रयच्छेत्तु हैमं रत्न-विभूषितम् ।
सोऽप्सरः-शतसंकीर्ण-विमाने दिवि मोदते ॥
राजतं यः प्रयच्छेत्तु विप्रेभ्योभाजनं शुभम् ।

461. **ब्रह्मपुराणे—**

औदुम्बराणि पात्राणि योदद्यादायसानि वा ।
महतीमृद्धिमाप्नोति दुर्लभां त्रिदशैरपि ॥

462. **अत्रिः—**

श्राद्धकालेतु योदद्याद्भाजनेच उपानहौ ।
तस्य वैविपुलं पुण्यं चाश्वदान फलं लभेत् ॥

463. **कालिकापुराणे—**

रौक्मं क्षीरान्वितं पात्रं दधिपूर्णञ्च राजतम् ।
द्विजेभ्योयः प्रयच्छेत्तु तस्य पुण्यमनन्तकम् ॥

464. **वायुपुराणे—**

स्वर्णरौप्यमयं भाण्डं देवतार्थे ददाति यः ।
कुवेर-लोकमासाद्य मोदते बहुवत्सरान् ॥

इति पात्रदानम् ॥

*—

१ (* इति फलकथनम् । एवं ग्रन्थान्तरस्थः पाठः ।

## (२००) अथापाक-दानम् १(*) ।

—*—

465. **भविष्योत्तरे, श्रीभगवानुवाच—**

आपाकाख्यं महादानं कथयामि युधिष्ठिर ! ।
दत्तेन येन कामानां पुमान् भवति भाजनम् ॥
ग्रह तारा-बलं लब्ध्वा कुम्भकारं प्रपूजयेत् ।
वासोभिर्भूषणैश्चैव पुष्पैश्चागुरु चन्दनैः ॥
ब्रूयात्तथेदं सामान्यं यथा तुष्टोऽभि जायते ।
त्वं मे भाण्डानि पात्राणि गुरूणिच लघूनिच ॥
मणिकादीनि शुभानि स्थाल्यश्च सुमनोहराः ।
घटकान् करकांश्चैव प्रणीताः कुम्भकानिच ॥
शरावादीनि पात्राणि भाण्डान्युच्चावचानिच ।
अलिञ्जराः प्रतिघटाः मन्थानि कटहानिच २(†) ॥
एवमन्यच्च यत्किञ्चिदुपभोग्यं भवेद्गृहे ।
सम्पादय महाभाग ! विश्वकर्म्मा त्वमेवहि ॥
भार्गवोऽपि प्रयत्नेन भाण्डौघैरन्वितं शुभम् ।
आपाकं कल्पयेदेवं विधिदृष्टेन कर्म्मणा ॥
भार्गवः—कुम्भकारः ।
सहस्रमेकं भाण्डानां स्थापयित्वा विचक्षणः ।
सन्ध्याकाले मथित्वातु दद्यादथ हुताशनम् ॥
रात्रौ जागरणं कुर्य्याद् गीतमङ्गलनिःस्वनैः ।
ततः प्रभाते विमले ज्ञात्वा निर्व्वापितं शनैः (तैः) ॥
रक्तवस्त्रैः समासाद्य पुष्पमालाभिरर्च्चयेत् ।
यजमानस्ततः स्नात्वा शुक्लाम्बरधरः शुचिः ॥
हेम रौप्याणि भाण्डानि ताम्रलोहमयानिच ।
परितःस्थापयित्वाच स्वशक्त्या,चापि षोडश ॥।

---

१ (*) अत्र 'मन्यनी' 'मन्थानि' इति पाठद्वयं संभवति ।
२ (†) 'आपच्यते इत्यापाकः' पच-धातोः पाकम् ।
अमरेतु 'सर्व्वमावपनं भाण्डं पात्रामत्रञ्च भाजनम्' इत्युक्तम् ।
अपरेतु—कुम्भकारस्यकृत् पात्रादिदहनस्थानमापाकं वदन्ति ।

तानि चत्वारि चत्वारि न्यसेत् पूर्व्वादि दिक्क्रमात् ॥
पूजयित्वा प्रयत्नेन कृत्वाचापि प्रदक्षिणम् १(*) ।
नार्य्यश्चाविधवास्तत्र समानीय प्रपूजयेत् ।
ततः प्रदक्षिणं कृत्वा मन्त्रेणानेन पूजयेत् ॥
आपाक ब्रह्मरूपोऽसि भाण्डानीमानि जन्तवः ।
प्रदानात्ते प्रजापुष्टिः स्वर्गश्चास्तु ममाक्षयः ॥
भाण्डरूपाणि यान्यत्र कल्पितानि मयाकिल ।
भूत्वा सत्वानु रूपाणि उपतिष्ठन्तु तानिवै ॥

## अत्रेदं दानवाक्यम् ।

ॐ अद्येत्यादि यथाकालादि कीर्त्तनानन्तर मिदमापाको नामभाण्डरचितं यथोपक्लृप्त-हेमादि पात्र सहितं श्रीविष्णुदैवतं सौभाग्यारोग्यावैधव्यसर्व्वगुणोपेत-गृहप्राप्ति-पुत्र पौत्रादि सन्तति—सदाभर्त्र-वियोग-सदासुखोत्तमरूपावाप्ति कामोऽहं २(†) नानाजनेभ्यः समुत्सृजामीत्युत्सृज्य यथाशक्त्या सुवर्णादि दक्षिणा देया ।

अथ—योयदर्थी भाण्डेन तस्मै तत् प्रतिपादयेत् ।
स्वेच्छया चैव गृह्णन्तु न निवार्य्यस्तु कश्चन ॥
अनेन विधिना यस्तु दानमेतत् प्रयच्छति ।
विश्वकर्म्मा भवेत्तुष्टः तस्य जन्मत्रयं भवेत् ३(‡) ॥
नारी दत्वाच सौभाग्यमतुलं प्रतिपाद्यते ।
गृहं सर्व्वगुणोपेतं भृत्य मित्र जनैर्वृतम् ॥
अवियोगं सदा भर्त्त्रा रूपश्चानुत्तमं लभेत् ।
प्रदानमेतन्निर्दिष्टं प्रकारेण तवानघ ! ॥
विद्यते वहुभिर्भेदै र्भूमिरेषा नरोत्तम ।
निष्पाद्य भाण्डनिचयं प्रवरं प्रयत्नात्,
आपाकदानमिह या कुरुते वरस्त्री ।
सा पुत्र-पौत्र-पशुवृद्धि सुखानि लब्ध्वा,
प्रेत्याशु भर्त्तृसहिता सुखिनी सदास्ते ॥

इत्यापाक-दानम् ।

---

१ (*) 'क्रतावपि प्रयत्नत' इति हेमाद्रिः ।
२ (†) 'स्वाम्ययोग्य सदासुख कामोऽहं' इति हेमाद्रिः ।
३ (‡) 'तस्य जन्मत्रयं नृप' इति तत्रैव पाठः ।

## (२०१) अथान्नदानम् १(*)।

—*—

466. **स्कान्दे—**

अन्नदः प्राणदः प्रोक्तः प्राणदश्चापि सर्व्वदा।
तस्मादन्न-प्रदानेन सर्व्वदान-फलं लभेत्॥
धर्म्मार्थ-काम-मोक्षाणां देहः परम-साधनम्।
स्थिति स्तस्यान्नदानाभ्यामत स्तत् स्वर्ग साधनम्॥
अन्नं प्रजापतिः साक्षात् अन्नं विष्णुः शिवः स्वयम्।
तस्मादन्न समं दानं न भूतं न भविष्यति॥

467. **ब्रह्मवैवर्त्ते—**

तस्मादह रहै र्देय मन्नमेव विचक्षणैः।
अपरीक्ष्यैव सर्वेभ्य इति स्वायम्भुशासनम्॥

### तथाच—

आममन्नं गृहस्थाय नैव पक्वं कदाचन।
नाध्वगाय निषिद्धं तदिति देवोऽब्रवीद्धरः॥
श्राद्ध-यज्ञे गृहस्थाय देयमन्नं विशेषतः २(†)।
नात्र पात्रपरीक्षा स्या न्नकाल नियमस्तथा॥
नच देश परीक्षाऽत्र देयमन्नं सदैव तत्।
श्वभ्यश्च श्वपचेभ्यश्च पतितेभ्य स्तथैवच॥
कृमिकीट पतङ्गेभ्यः देयमन्नं सदैवतु।
यस्यान्नेनोदरस्थेन ब्राह्मणो म्रियते द्विजः!॥
तान्तु योनिमवाप्नोति नात्र कार्य्या विचारणा।
भक्ष्यदः स्वर्गमाप्नोति शक्रलोकन्तु भोज्यदः॥
लेह्यदोऽप्सरसां लोकं वसूनामपि चोष्यदः।

---

१ (*) अत्र प्रकारान्तरेणान्नदान माहात्म्यं प्रकटितम्।

२ (†) एंवञ्चोक्तं हेमाद्रौ—
अन्नेन धार्य्यते सर्व्वं जगदेतच्चराचरम्।
—'सर्व्वेषामेव दानानां अन्नदानं विशिष्यते।
अन्न दानात् परं दानं न भूतं न भविष्यति'॥

वारुणं लोकमाप्नोति तथा पान प्रदोनरः ।
परमान्न प्रदानेन तृप्तिर्भवति शाश्वती ॥

468. ब्रह्माण्ड पुराणे—

यस्यान्नपानपुष्टाङ्गः कुरुते पुण्यसञ्चयम् ।
अन्नप्रदातु स्तस्यार्द्धं कर्त्तु श्राद्धं न संशयः ॥

469. ब्रह्मवैवर्त्ते—

सर्व्वावस्थ मनुष्येण न्यायेनान्नमुपार्ज्जितम् ।
कार्य्यन्तत् पात्रसादत्र तदेव परमा गतिः ॥
यस्यत्वन्नं समश्नाति ब्राह्मणानां शतं सदा ।
हृष्टेन मनसा दत्तं न स तिर्य्यग् गतिर्भवेत् ।
ब्राह्मणानां सहस्राणि दशभोज्यं नरर्षभ ! ॥
नरोऽधर्म्मात् प्रमुच्येत पापेष्वपि रतः सदा ।
भोजयित्वा दशशतं नरोवेद-विदां नृप ! ॥
न्यायविद्धर्म्मविदुषां स्मृ(श्रु)तिभाष्यविदान्तथा ।
न याति नरकं घोरं संसारञ्च न सेवते ॥

470. स्कन्दपुराणे—

एकं पाशुपतं भक्त्या भोजयित्वा प्रणम्य च ।
नानाविधैर्महाभक्ष्यैः शिवलोके महीयते ॥

471. देवलः—

मृष्टमन्नं स्वयं भुक्त्वा पश्चात् कन्दं ततो लघु ।
ब्राह्मणान् भोजयेन्मूर्खान् निरये चिरमावसेत् ॥
गृहस्थ मिष्टभुक् भिक्षां यतिभ्यो न प्रयच्छति ।
विमुक्तः सर्व्वपापेभ्यो नासौ मुक्तिमवाप्नुयात् ॥
ग्रासमात्रा भवेद्भिक्षा नित्या यत्र प्रदीयते ।
तद्गृहं गृहमन्यत्तु श्मशानमिव दृश्यते ॥
पापं गृही क्षालयति ददद्भिक्षां दिनं प्रति १(*) ।

१ (*) 'दिनं प्रति' प्रतिदिनं प्रत्यहमित्यर्थः। यथा दीनं दरिद्रं प्रति इति।

472. व्यास—

यस्त्वेक पङ्क्त्यां विषमं ददाति,
स्नेहाद्भयाद्वा यदिवार्थ हेतोः ।
देवैश्च दृष्टं मुनिभिः प्रगीतम्,
तां ब्रह्महत्यां मुनयो वदन्ति ।
इत्यन्नदानम् ॥

—*—

## (२०२) अथामान्नदानम् ।

—*—

473. विष्णुधर्म्मोत्तरे—

धान्यानामुत्तमं दानं कथितं मुनिपुङ्गवैः ।
धान्येभ्योऽपि परं दानं रक्तशालिः प्रकीर्त्तितः ॥
षष्टिकान्न प्रदानेन लोकं नैर्ऋतिकं लभेत् ।
सचीन-चणकन्दत्वा वारुणं लोकमाप्नुयात् ॥
वायव्यञ्च मसूराणि राजमाषाणि धान्यदः ।
अन्येषां शमीधान्यानां दानात् स्वर्गमवाप्नुयात् ॥
इक्षु मृद्वीकयोर्दानात् परं सौभाग्यमाप्नुयात ॥
कलसानां प्रदानेन शक्रलोके महीयते ॥
काष्टशालिं नरो दत्वा अलकायां स मोदते ।
रक्तशालिं नरो दत्वा सूर्य्यलोके महीयते ॥
दत्वा तथा सुगन्धाढ्यं गन्धर्वैः सह मोदते ।
यव प्रदानेन नरः इन्द्रलोके महीयते ॥
तथा गोधूम दानेन वसूनां लोकमाप्नुयात ।
प्रियो भवति लोकस्य प्रियङ्गुं यः प्रयच्छति ॥
ददाति यस्तु श्यामाकं तस्य प्रीणन्ति देवताः ।
मुद्गदः शक्रलोकन्तु यमलोकन्तु माषदः ॥
यथेष्टं लोकमाप्नोति तथा विप्रस्तिलप्रदः ।

पक्वान्नदानात् फलदं नृलोके,
शुष्कान्न मुक्तं हि तदग्रमस्मात १(*) ।
यजन्ति यज्ञैश्च ततो द्विजेन्द्राः,
तस्मात्तु तत पुण्यतमं प्रदिष्टम् ॥
इत्यामान्नदानम् ॥

—*—

## (२०३) अथोदक दानम् ।

—*—

474. **स्कान्दे—**

त्रयाणामपि लोकानामुदकं जीवनं स्मृतम् ।
पवित्रममृतं तस्मात्तद्देयं पुण्यमिच्छता ॥

475. **भविष्योत्तरे—**

ग्रीष्मे चैव वसन्ते च पानीयं यः प्रयच्छति ।
वक्तुं जिह्वा-सहस्रेण तस्य पुण्यं न शक्यते ॥

476. **नन्दी पुराणे—**

योऽपि कश्चित्तृषार्त्ताय जलपानं प्रयच्छति ।
स नित्यतृप्तोवसति स्वर्गे युगशतं नरः ॥

477. **गारुडे—**

मूल्येन कृत्वा धर्म्मज्ञ जलदानं प्रयच्छति २(†) ।
स याति चन्द्रसालोक्यं शुभमानांशुकावृतः ॥
क्षीरकुल्यांस्तमायान्ति तथा यान्ति मधुस्रवाः ।
घृत दध्युदकास्तस्य समुद्रा वशवर्त्तिनः ॥

478. **देवलः—**

सतोयां पथिके विप्रे योदद्यात् कर पात्रिकाम् ।
फलं स कूप खातस्य न्यून माप्नोति मानवः ॥

१ (*)　'तदाग्निरक्षात्' इति हेमाद्रौ पाठः ।
२ (†)　'मूल्येन कृत्वा धर्म्माग्नि जलदानं प्रयच्छति' इति आदर्श ग्रन्थान्तर धृतः पाठः ।

479. **महाभारते—**

पिपासया नम्रियते स्वोपच्छन्दश्च जायते ।
न प्राप्नुयाच्च व्यसनं करकान् यः प्रयच्छति ॥

480. **आदित्य पुराणे—**

यो ददाति घटी पात्रं कुण्डिकां करकांस्तथा ।
तृष्णार्त्तस्तु तथा धर्म्मे लभते शीतलं जलम् ॥

इत्युदकदानम् ॥

—*—

## (२०४) अथ धर्म्मघटदानम् ।

—*—

481. **तत्र विष्णुः—**

शीतलेन सुगन्धेन वारिणा पूरितं घटम् ।
शुक्लचन्दनदिग्धाङ्गं पुष्पमालोपशोभितम् ॥
दध्योदनयुतं कुर्या च्छरावं तस्य चोपरि ।
उपानच्छत्त्र संयुक्तं धर्म्माख्यं कल्पयेद् घटम् ।
पुष्पाक्षतं गृहीत्वातु इमं मन्त्रमुदीरयेत् ।
ॐ नमो विष्णुरूपाय नमः सागर-सम्भवे ! ॥
अपां पूर्णोद्धरास्मां स्त्वं दुःखसंसारसागरात् ।
उदकुम्भोमया दत्तो ग्रीष्मकाले दिने दिने ॥
उदकुम्भ - प्रदानेन प्रीयतां मधुसूदनः ।

482. **भविष्योत्तरे—**

प्रत्यहं धर्म्मघटको वस्त्रसंवेष्टितो नवः ।
ब्राह्मणस्य गृहे नेयः शीतामल-जलः शुचिः ॥
बसन्त ग्रीष्मयोर्मध्ये यः पानीयं प्रयच्छति ।
पले पले सुवर्णस्य फलमाप्नोति मानवः ॥
मार्गशीर्षात् समारभ्य उदकुम्भन्तु योददन् ।
दिने दिने सहस्रस्य गवां पुण्य फलं लभेत् ॥
तस्यै वोद्यापनं कार्य्यं मासि मासि नरोत्तम ।
मण्डका वेष्टकाभिश्च पकान्नैः सार्वकामिकैः ॥

उद्देश्य शङ्करं विष्णुं ब्रह्माणमथवा पितॄण्।
सतिलं प्रोक्षयित्वातु मन्त्रेणानेन मानवः॥
मन्त्राश्च—१(*)
एषधर्म्म घटोदत्तो ब्रह्म-विष्णु-शिवात्मकः।
अस्य प्रदानात् सततं मम सन्तु मनोरथाः॥
अनेन विधिना यस्तु धर्म्मकुम्भं प्रयच्छति।
बसन्त ग्रीष्म समये प्रपादान फलं लभेत्॥
प्रपादान फलं सोऽपि प्राप्नोतीह न संशयः।

इति धर्म्मघटदानम्।

—*—

## (२०५) अथाश्वत्थ सेवनम् २(†)।

—*—

483. **भविष्योत्तरे—**

उदकुम्भ प्रदानेऽपि ह्यशक्तो यः पुमान् भवेत्।
तेनाश्वत्थतरोर्म्मूलं सेव्यं (च्यं) नित्यं यतात्मना॥
सर्व्वपापप्रशमनं सर्व्वदुःखप्रणाशनम्।
सर्व्वरोगप्रशमनं नित्यं सन्ततिवर्द्धनम्॥
अश्वत्थरूपी भगवान् प्रीयतां मे जनार्द्दनः।
इत्युच्चार्य्य नमस्कृत्य प्रत्यहं पापनाशनम्॥
यः करोति तरोर्मूले सेकं मास चतुष्टयम्।
सोऽपि तत् फलमाप्नोति श्रुतिरेषा सनातनी॥

इत्यश्वत्थ सेव(च)नम्॥

—*—

१ (*) अन्यत्रमन्त्रौ—

'पानीयं प्राणिनां प्राणाः पानीयं पावनं महत्।
पानीयस्य प्रदानेन वरुणः प्रीयतां मम॥'
'धर्म्मस्त्वं घटरूपेण ब्रह्मणा निर्मितः पुरा।
त्वयि दत्तेऽक्षया लोकाः मम सन्तु निरामयाः'॥

२ (†) अपरमन्त्रश्च—

'चक्षुः स्पन्दं भुजस्पन्दं तथा दुःस्वप्न दर्शनं।
शत्रूणाञ्च समुत्थानमश्वत्थ शमयाशु मे।
अश्वत्थरूपी भगवान् प्रीयतां मे जनार्द्दन!'।

## (२०६) अथ तरुपुत्रक विधिः ।

—*—

484. **नन्दि—पुराणे—**

तरुपुत्रन्तु यः कुर्य्याद्विधिवद्वह्नि सन्निधौ ।
स महापातकैर्मुक्तः समुद्धृत्य कुलत्रयम् ॥
नरकेभ्यो नरो याति प्रजापति-पुरं शुभम् ।

485. **पद्मपुराणे—**

अपुत्रस्यच पुत्रत्वं पादपा इह कुर्व्वते ।
यच्छन्ति रोपकेभ्य स्ते स तीर्थे तर्पणादिकम् । १(*)
तीर्थे पुत्रसहस्राणामेक एव करिष्यति ॥
पुत्र सहस्राणां कर्त्तव्यमिति शेषः ।
धनीचाश्वत्थ वृक्षेण ह्यशोकः शोकनाशनः ।
प्लक्षो यज्ञप्रदः प्रोक्त श्चिश्चात्वायुःप्रदा स्मृता ॥
जम्वुः कन्याप्रदा प्रोक्ता भार्य्यादा दाड़िमी तथा ।
अरलू रोगनाशाय पलाशो ब्रह्मदस्तथा ॥
प्रेतत्वं जायते तस्य रोपयेद् यो विभीतकम् ।
कङ्कोलः कुलवृद्धिः स्यात् खदिरे चाप्यरोगता ॥
निम्बप्ररोपको यस्तु तस्य तुष्टो दिवाकरः ।
श्रीवृक्षे शङ्करो देवः पाटलायान्तु पार्व्वती ॥
शिंशपायामप्सरसः कुन्दे गन्धर्व्व मत्तमाः ।
तिन्तिड़ीके दासवर्गो वकुलो दस्युदस्तथा ॥
सौभाग्यदश्चम्पकः स्यात् करीरः पारदारिकः ।
अपत्यनाशकस्तालो निदीशः कुलवर्द्धनः ॥
बहुभार्या नारिकेले द्राक्षा सर्व्वाङ्ग सुन्दरी । २(†)
रतिप्रदा तथा केली मोचकी शत्रुनाशिनी ॥

---

(*) 'स तीर्थं' पुत्र शतं तर्पणादि—कन्यादि जन्यफलम् रोपकस्य मे तरवः प्रयच्छन्तीत्यर्थः'। अनेनापि च राजेन्द्र पिप्पल्यारोपणं कुरु'। पिप्पली—चञ्चलः।

(†) 'बहुः सर्वाङ्ग सुन्दरः' इति पाठं ग्रन्थान्तरस्थः पाठः।

मोचकः—शाल्मलि वृक्षः ।

एवमन्येऽपि ये वृक्षा स्तेऽपि नानाफल स्मृताः ।
इत्यादय स्तथा येऽन्ये येनोक्ता स्तेऽपि दायकाः १(*) ।
प्रतिष्ठान्ते गमिष्यन्ति ये नरा वृक्षरोपकाः ॥

486. **स्कान्देऽपि—**

महादेवो महादेवी मिदं वचनमब्रवीत् ।
शृणुष्व येन विधिना गृह्यतेऽवनिजः सुतः ॥

अवनिजः—वृक्षः ।

सुपुत्रार्थं भूमिरुहं ग्रहीष्यामीति पार्वती ।
सोपवासा भवेन्नारी शुचिवस्त्रा शुचिव्रता ॥
ततश्चैव सहस्रांशावस्त शृङ्गगते सति ।
उदिते विमले वापि तथादा विन्दु सन्निभे ॥
विप्रानामन्त्रयेद्रात्रौ पावनान् वेदवादिनः ।
शुचीनां मन्त्रयित्वातु शुचिवस्त्रा शुचिव्रता २(†) ॥
शयीत सनमस्कारा सदर्भां भूमिमाश्रिता ।
गमयित्वा तथा रात्रिं सवितर्युदिते सति ॥
भक्ष्यं भोज्यं समादाय व्रजेद्यत्र भवेत्तरुः ।
तत्र तं स्नापयित्वातु सातपत्रं सभूषणम् ॥
तन्तरुन्तरुणी कृत्य ततश्छायानुगामिनम् ।
यथोपपन्नं अन्नान्तान् भोजयित्वा द्विजां स्ततः ।
पुण्याहं वाचयित्वातु ऋत्विग्भिरथवात्मना ॥
तृप्तानां ब्राह्मणानां वै तत्त्वेनाकृतमात्मना ।
निवेद्य कृतमुद्दिश्य सद्भावेन परेणतु ॥
अपुत्रा भगवन्तोऽहं पुत्रप्रतिकृतिं तरुम् ।
ग्रहिष्यामि ममानुज्ञां कर्त्तुमर्हत सत्तमाः ॥

पुत्रप्रतिकृतिं—पुत्रसदृशमिति शेषः ।

अतस्तैरभ्यनुज्ञातं तरुन्तन्तरुणायुषम् ३(‡) ।

---

१ (*) इत्यर्द्धः श्लोको ग्रन्थान्तरे नास्ति ।
२ (†) 'शुचि विधा शुचिव्रता' इत्याद्यर्द्धं ग्रन्थान्तर च्युतः पाठः ।
३ (‡) 'तद्वयाकृतिम्' इति चतुर्वर्गचिन्तामणौ पाठः ।

भूमिदेव-समक्षं वै गृह्णीयात्तनयं प्रिये ! ॥
भूमिदेव समक्षम्—ब्राह्मणाग्रतः।
अनेन विधिना यस्तु गृहीतस्तरुपुत्रकः।
पितॄणां निरयस्थानां मधुधारां स वर्षति ॥
गृहीतो विधिनानेन सुद्रु(भ्रु) भूमिरुहात्मजः।
शुभावहः स भवति विपरीतेतु दुःखदः ॥
स पुत्राणां शताच्चापि पीनश्रोणि-पयोधरे १(*)! ॥
एकोऽपि भूरुहः श्रेष्ठः पुत्रत्वे कल्पितः शुभः।

इति तरुपुत्रक-ग्रहण विधानम् ॥

--*--

## (२०७) अथाश्वत्थोपनयनम्।

—*—

487 **शौनकीये—**

शौनकोहम्प्रवक्ष्यामि ह्यश्वत्थस्योपनायनम्।
स्थापनादष्टमे वर्षे द्वादशेकादशेऽथवा ॥
शस्ताः कालास्त्रय स्तेषु कुर्य्यात्तस्योपनायनम्।
तत्रोत्तरायणं श्रेष्ठं गुरौ शुक्रे प्रकाशिते २(†) ॥
माघ फाल्गुनयोःकुर्य्यां चैत्र-वैशाख-मासयोः।
क्षयमासेऽधिमासेच नकुर्य्यान्मौञ्जि बन्धनम् ॥

तत्तत् स्थानीयतया तत्तद्वर्णनापत्तौ तत्तद्वर्ण वटुसंस्कार कालस्यैवोचितत्वात्। अतएव शूद्रादि जयमानकेऽश्वत्थसंस्कारे पौराणिकागम प्रतिष्ठामात्रं कर्त्तव्यम्। नचोपनयनं, शूद्रसम्बन्धिन स्तस्य प्रागुक्तन्यायेनोपनयन संस्कारा नर्हत्वादित्याहुः।

न कुर्य्याच्छेदिताऽश्वत्थे विद्युद्वाताग्निनाहते।
उपनीतिं प्रकुर्व्वीत स्कन्दपूर्णाङ्कुरान्विते ॥
शुक्लपक्षे शुभर्क्षंच सुवार स्योप लक्षणम्।
अपराह्णेचोपनीतः पुनः संस्कार मर्हति ॥

---

१ (*) 'सुपुत्राणां शतं वापि' इति इमाद्रि—धृतः पाठः।
२ (†) गुरौ जीवे शुक्रे भार्गवे प्रकाशिते नास्तंगते वा वक्रातिचारे, इत्यर्थः।

इत्यग्निष्टोमोक्तेः १(*) ।
दन्तानां धावनं कृत्वा कर्त्ता स्नात्वा सचेलकम् ।
कृत्वैव नित्यकर्म्माणि पूजयित्वेष्टदेवताम् ॥
नान्दीश्राद्धं प्रकुर्व्वीत गृहे पुण्याह व्पूर्वकम् ।
तस्मिन्नेव दिने कर्त्ता चान्नहेम फलादिभिः ॥
कृ(क)त्वा शीर्व्वचनं गृह्य ततो गच्छेत् समाहितः ।
तूर्य्य घोषैश्च विविधैः पुण्यस्त्रीभिः समन्वितः २(†) ॥
पण्यस्त्रीति कचित् पाठः ।
ब्राह्मणैर्वेदघोषैश्च पुण्यवादित्र-निःस्वनः ।
ब्रह्मयज्ञोपवीतादी न्मौञ्जी दण्डाजिनादिकम् ॥
पूजाद्रव्यञ्च हैम्यञ्च गृहीत्वाश्वत्थ सन्निधौ ।
गत्वा प्रक्षालिताङ्घ्रिश्चैत्याचम्योपविशेद् भुवि ३(‡) ॥
त्रिपञ्चदशहस्तं वा गोमये नोपलिप्यते ।
धातुपिष्टेन समपूज्य रङ्गमालिकया तथा ॥
अश्वत्थेशानदिग्भागे कृत्वा पुण्याहवाचनम् ।
आचार्य्यंवरयेत् पश्चाद्ब्राह्मणं वेदपारगम् ॥
आचारवन्तं धर्म्मज्ञं कुलीनञ्च कुटुम्बिनम् ।
सर्व्वावयव-सम्पूर्णं रोगदोष-विवर्ज्जितम् ॥
शान्तं तपस्विनं दान्तं सर्व्वप्राणि-हितेरतम् ।
वस्त्रोपवीतगन्धाद्यै रङ्गुलीयक-कुन्तलैः ॥
कर्त्ता तम्पूजयेद्भक्त्या वित्तशाठ्यं नकारयेत् ।
तेनैव कारयेद्विद्वान् अश्वत्थस्योपनायनम् ॥
कुर्य्यात् पञ्चामृतैः स्नानं तत्तन्मन्त्रैः पृथक् पृथक् ।
अश्वत्थपूर्व्वदिग्भागे होमं कुर्य्यात् स्वशाखया ॥
उपलेपादि यत्तत्रं चाक्षुष्यं तं प्रकल्पयेत् ।
वस्त्रयुग्मं ततोदद्याद् धूपं वस्त्राणि मन्त्रतः ३(०) ॥

१ (*) 'इत्येके' इति ग्रन्थान्तर धृतः पाठः ।
२ (†) 'आचम्योपवीती भुवि' पाठान्तरः धृतः पाठः ।
३ (‡) धूपवस्त्राणि मन्त्रतः ।

यज्ञोपवीतं दद्यात्तु 'यज्ञोपवीत'मित्यपित्यपि १(*)।
मेखलाञ्च त्रिरावेष्ट्य प्रदेयामिति मन्त्रतः॥
तूष्णीं कृष्णाजिनं दण्डं प्रदद्याच्च यथाक्रमम्।
गन्धपुष्पाक्षतैःशुक्लैः अश्वत्थस्यच पश्चिमे॥
'अश्वत्थेवोपनिषदन' मित्यृचा पूजयेत् सुधीः २(†)।
ॐ भूर्भुवःस्वः पूर्वन्तु गायत्रीन्त्रिजपेदथ।
निरीक्ष्ययेत्तथाश्वत्थं 'देवस्यत्वे'ति मन्त्रतः ३(‡)॥
'आत्वे'तिध्रुवसूक्तेन व्याहृति त्रितयेनच ४(+)॥
अश्व(त्थ)नामचोच्चार्य्य विभक्त्यातु द्वितीयया।
शलाकया सुवर्णस्य स्थापयामि पदं पठेत्॥
हुत्वा स्विष्टकृतं पश्चाद्धोमशेषं समापयेत्।
गन्धाक्षतैः शुक्लपुष्पैः धूपदीपोपचारकैः॥
भक्ष्याद्यैः फलताम्बुलै स्तथाश्वत्थं प्रपूजयेत्।
पुरस्तादुपविष्टाश्च हुत्वा व्याहृतिभिः क्रमात्॥
जुहुयादाज्यमग्नौतु 'आपु षन्'इत्यनुक्रमात् ५(×)।
'या औषधी''र्याःफलिनी'रश्वत्थे वदति त्वथ॥
'वनष्पते शतवलो' 'द्वासुपर्णा' इति क्रमात् ६(०)॥
समिद्भिश्चरूणाञ्चैव पालाशोभिः पृथक्पृथक्।
हुत्वा द्वादशभिः सम्यगेवं कृत्वा समाहितः॥

वस्त्रोपवीतालङ्कारादिभिस्तावच्चर्चयेत्। अथाचार्योऽश्वत्थस्योपनयनं यजमानानुज्ञातः करिष्ये इतिसङ्कल्प्याश्वत्थ-पश्चाद्भागे प्राङ्मुख उपविश्य दुग्धादि प्रकाशकैः पञ्चामृत-

---

१ (*) 'यज्ञोपवीतं परमं पवित्रं बृहस्पतिर्यत् सहजं पुरस्तात्।
आयुष्यमग्र्यं प्रतिमुञ्चशुभ्रं यज्ञोपवीतं बलमस्तु तेजः'।
ब्रह्मोपनिषदि। अत्र 'शुभ्रं पुष्पाणि' इत्यन्यः पाठः।
अत्र बृहस्पतेर्यदित्यत्र 'प्रजापतेर्यदिति' पाठोऽप्यस्ति।

२ (†) शुक्ल यजुर्वेदे २५—४।
३ (‡) ,, ,, ९—१८।
४ (+) ,, ,, १२—११।
५ (×) ,, ,, १२—९३।
६ (०) ,, ,, १२—८९।

मन्त्रैः पृथक्त्वेन पञ्चामृतैरश्वत्थं संस्नाप्य शुद्धोदकेन स्नापयित्वा गन्धपुष्पादिभिरलंकृत्याश्वत्थपूर्वदिग् भागे होमार्थं स्थण्डिलं विधाय होमसामग्रीमासाद्य स्वशाखोक्तविधिनोपलेपनेनोल्लेखनादिकं कृत्वाऽग्निं प्रतिष्ठाप्यान्वाधानं विधाय वायुसूर्य्यादि वक्ष्यमाणदेवतोद्देशेन चरुं श्रपयित्वाज्यभागान्तं कुर्यात्। अश्वत्थपश्चाद्भागे प्राङ्मुखोपविष्ट-आचार्य्यः 'युवंवस्त्राणी'ति मन्त्रेण वस्त्रद्वयेनाश्वत्थमावेष्ट्य, 'यज्ञोपवीत' मिति(१) मन्त्रेण यज्ञोपवीतं प्रतिमुच्य, 'प्रावे वामे'ति मन्त्रेण मेखलां त्रिरावेष्ट्य तूष्णीमजिनं दण्डञ्च दत्वा 'अश्वत्थेवो निषदनं (२) इतिमन्त्रेण श्वेतगन्धपुष्पाक्षतैर्माल्यैः संपूज्य सप्रणवव्याहृतित्रयां गायत्रीं त्रिवारं जप्त्वा, (३) 'देवस्यत्वे'ति मन्त्रेणाश्वत्थं निरीक्ष्य. 'आत्वाहार्षमन्तरभूत्' (४) इति ध्रुवसूक्तं पठित्वा ॐ भू भुंवः स्वरित्युक्त्वा अश्वत्थं स्थापयामीति स्वर्णशलाकया संस्पृशेत्।

ततः स्थण्डिलमेत्याज्येन ॐ भूः स्वाहा इदमग्नये नमः। ॐ भुवः स्वाहा इदं वायवे नमः। ॐ स्वः स्वाहा इदं सूर्यायः। 'ॐ अग्न आयूंषि – दुच्छुनाम्'(५)स्वाहा इदमग्नये पवमानाय। ॐ 'अग्निर्ऋषिः – महागयम्' (६) स्वाहा इति पूर्व्ववत्यागः ॐ 'अग्ने पवस्व – पोषं' स्वाहा पूर्व्ववत्। (७) ॐ 'या ओषधीः = सप्तच स्वाहा' इदमोषधीभ्यः। (८) ॐ 'याः फलिनीः = हसः स्वाहा'। त्यागः पूर्व्ववत्। ॐ 'अश्वत्थेवः पुरुषं स्वाहा' (९) पूर्व्ववत्। ॐ 'वनस्पते शतवल्शः – रुहेम स्वाहा' इदं पिप्पलाय। ॐ द्वा सुपर्णा – चाकशीति स्वाहा' इदं पिप्पलाय नमः। ॐ भूर्भुवः स्वः स्वाहा इदं प्रजापतये नमः।

एतैरेव मन्त्रैः पालाशीभिः समिद्भिः श्चरुणा पृथक् पृथग् हुत्वा स्विष्टकृदादि होमशेषं समाप्याश्वत्थ पश्चिमे देशे गन्धाक्षत-स्वर्णपुष्पधूपदीपनैवेद्यफलताम्बुलैः, 'ॐ अश्वत्थेव' इति मन्त्रेण सम्पूजयेत्।

गन्धाक्षतैः स्वर्णपुष्पैः धूपदीपोपहारकैः।
भक्ष्याद्यैः फलताम्बुलै स्ततोऽश्वत्थं प्रपूजयेत्॥

अश्वत्थ पश्चिमे देशे प्राङ्मुखश्चोपविश्यच।
दक्षिणे नैव हस्तेन स्पृष्ट्वाश्वत्थं समाहितः॥

धेनुं पयस्विनीं दद्यादाचार्याय सवत्सकाम्।
अश्वत्थस्याच्छादनं वस्त्रं आचार्याय प्रदापयेत्।

अन्येषामपि विप्राणां स्वशक्त्या पूजयेत्ततः।
ब्राह्मणे दक्षिणान्दद्याद्धेमं वित्तानुसारतः॥

ब्राह्मणान् भोजयेदष्टौ भुञ्जीयाद्बन्धुभिः सह ।
एवं यः कुरुते भक्त्या ह्यश्वत्थ स्योपनायनम् ॥
कुलकोटी समुद्धृत्य विष्णु सायुज्यमाप्नुयात् ।
इति शौनकीये ऽश्वत्थस्योपनयन विधिः ॥

## अथास्य प्रयोगः ।

यजमानः कृतनित्यक्रियो मन्त्रपूर्व्वकं दन्तधावनं कृत्वा जिह्वां समुल्लेख्य सचैलं स्नात्वा शुक्लाम्बरधरः कृताचमनद्वयं शुद्धासने उपविश्य कुशतिलयवानादायाद्येत्यादि संकीर्त्तनान्ते सकलपापक्षयपूर्व्वक-कुलकोटिसमुद्धरण-विष्णुसायुज्यकामोऽश्वत्थोपनयन-महंकरिष्य इति सङ्कल्प्य ततः पुण्याहवाचनं नान्दीश्राद्धं स्वगृहे कृत्वा तस्मिन्नेव दिने पूर्व्वाह्णे तुर्य्यघोष-वेदध्वनि सहित पुण्यस्त्रीब्राह्मणैः सह सर्व्वसम्भाराणादाय अश्वत्थ-सन्निधिं गत्वा प्रक्षालितपाणिपादोऽश्वत्थेशानदिग्भागे त्रिहस्तं पञ्चहस्तं दशहस्तं वा स्थलं गोमयेनोपलिप्य धातुपिष्टेन रङ्गमालिकयाऽलङ्कृत्य पुण्याहं वाचयित्वा, आचार्य्य-मुख्यं गुणवन्तं वृत्वा ब्राह्मणं वृणुयात् ।

अथ यजमान स्तत्रैवोपविश्य दक्षिणहस्तेनाश्वत्थं स्पृष्ट्वा प्रणम्य स्वदक्षिणतः उपविष्टा योदङ्मुखायाचार्य्याय सवत्साम् गान्दद्यात् ।

कृतैतदश्वत्थोपनयनप्रतिष्ठासिद्धयर्थं यथाशक्त्यालङ्कृत सवत्सां गां रुद्रदैवताममुकगोत्रा यामुकशर्म्मणे तुभ्यमहंसम्प्रददे, इति प्रयोगेन दत्त्वाऽश्वत्थाच्छादन-वासोद्वयं तस्मैदत्त्वा वृतेभ्यो-ब्राह्मणेभ्योऽन्येभ्यश्च ब्राह्मणेभ्यः पूजापूर्व्वकं यथाशक्ति दक्षिणान्दत्वा, अग्न्यादि देवताप्रीतयेऽष्टौब्राह्मणान् भोजयित्वा दीनाऽनाथान् सन्तोष्य बन्धुभिः सह स्वयं भुञ्जीत । य एवं कुर्य्यात् स कुलकोटीः समुद्धृत्य विष्णुसायुज्यमाप्नुयात्, इत्याह भगवान् शौनकः ।

इति अश्वत्थोपनयन प्रयोगः ।

—*—

## (२०८) अथ गलन्तिकादानम् १(*) ।

—*

४८८. **भविष्योत्तरे—**

वसन्त समयं ज्ञात्वा गत्वा देवालयं परम ।
यत्र स्वायम्भुवं लिङ्गं आर्षवा देवपूजितम् ॥

---

१ (*) गलन्तिका—'कर्कर्यालु गलन्तिका'। 'कर्करीभाण्डभेदेना दाँड वाडिनी चिप' इति विश्वः। काष्ठोर्मेर्या दष्टतपक्ष नक्षागमनसाधनपात्रमित्यर्थः।

तस्य गर्भगृहान्तस्थं घटन्तोयेन सम्भृतम् ।
कुर्यात सुरभिगन्धैश्च वासितं वस्त्रगालितम् ॥
स्रवन्तश्च दिवा रात्रं तज्जलं लिङ्गमूर्द्धनि १(*) ।
एवं यः कारयेत् कुम्भं श्रद्धाभक्ति समन्वितः ॥
शिवस्य विष्णोरर्कस्य इष्टदेवस्य वा पुनः ।
स्रवन्तंकारयेन् कुम्भं अच्छिद्रं देवमस्तके ॥
अनेन विधिना दत्वा नरोमास चतुष्टयम् ।
ततः कर्कटके प्राप्ते देवं पञ्चामृते नतु २(†) ॥
संस्नाप्य पूजयेद् गन्धै र्नैवेद्यैश्च मनोहरैः ।
प्रणिपत्य महेशानं मन्त्रमेतदुदीरयेन् ॥
ॐ नमः शङ्करः शम्भु र्भवोदाता शिवोहरः ।
प्रीयतां मे महादेव जलकुम्भ प्रदानतः ॥
एवं सङ्कल्प्य दातातु पश्चादागत्य वेश्मनि ।
स्व शक्त्या शिव भक्तानां विप्रमुख्यांश्च भोजयेत् ॥
एवं यः कुरुते ग्रीष्मे जलदान—क्रियां हरे ! ।
यावद्विन्दूनि लिङ्गस्य पतितानि जलस्यच ॥
स वसेच्छाङ्करे लोके तावत् कोट्योनरेश्वर ! ।
इति गलन्तिकादानम् ॥

—*—

## (२०६) अथ मणिकदानम् ।

—*—

489. **भविष्ये, युधिष्ठिर उवाच—**

मणिकस्य कथं दानं कस्मिन् कालेच दीयते ।
किं फलं तस्य दानेन तदाचक्ष्व जनार्द्धन ! ॥

---

१ (*) लिङ्गमस्तके निर्झरजलबिन्दुवत् पातनं युक्तम् ।
२ (†) मन्त्रशोधितपञ्चगव्येनापि स्नापनसूचितम् ।

## श्रीकृष्ण उवाच—

प्रपा दातुं अशक्तेन विशेषाद्धर्म्ममिच्छता ।
दानन्तेन प्रकर्त्तव्यं मणिकस्य युधिष्ठिर ! ॥
वैशाखस्य तृतीयायां पौर्णमास्यां विशेषतः ।
वसन्ते ग्रीष्मकालेच मणिकन्तत्र दीयते ॥
चत्वारिंशद्घटैः श्रेष्ठं त्रिंशद्भिर्मध्यमं स्मृतम् ।
विंशत्या कन्यसं प्रोक्तं अतोहीनं न कारयेत् ॥
जलपूर्णन्ततः कुर्य्यात् सहिरण्यं स्वशक्तितः ।
शुक्लचन्दनदिग्धाङ्गं पुष्पदामोपशोभितम् ॥
सम्परिच्छाद्य वस्त्रेण रत्नभाण्डकृतोपरि ।
तस्यो परि न्यसेदेवं पूर्णहोम-विनिर्म्मितम् ॥
सदक्षिणन्तु विप्राय दद्यात् संस्मृत्य केशवम् ।
आपोनारा इति प्रोक्ता आदित्योवरुणोपमः ॥
मणिकः पृथिवी सर्व्वा दातुः शान्ति प्रयच्छतु ।

## पूजामन्त्रोऽयम् ।

ॐ आपः पवित्रं लोकानां अप्सु शेते जनार्दनः ।
मणिकस्य प्रदानेन प्रीयतां जलशायिकः ।

## अथश्च दानमन्त्रः ।

अनेन विधिना दत्त्वा मणिकं द्विजपुङ्गवे ।
दाता यत्फलमाप्नोति तच्छृणुष्व नरोत्तम ! ।
वियोगो नैव तस्यास्ति पुत्रैर्भ्रातृ धनैर्नच ॥
गृहसंभारवैकल्यं न प्राप्नोति नरः क्वचित् ।
या स्त्री ददाति मणिकं तस्याः पुण्यफलं शृणु ॥
अपुत्रा लभते पुत्रं दुर्भगा सुभगा भवेत् ।
विधवा न पुनर्जन्म लभेत मणिवत्सदा ॥
गृहदानफलं प्राप्य विष्णुलोके महीयते ।
अश्वयुजि नवम्याश्च हरिवासरे कृते फलाधिक्यम ।
ग्रीष्मप्रवेशे मणिकं दद्यात् सर्व्वसुखावहम् ।
तस्य पुण्यफलं प्राप्य विष्णुलोके महीयते ।

आश्वयुज्ये नवम्याञ्च शुक्लायां भरतर्षभ ! ।
संरूढः पुष्पके दिव्ये आखण्डल-पुरे वसेत् ॥
इति मणिकदानम् ॥

—*—

## (२१०) अथान्यद् मणिकदानम् ।

—*—

190. **तत्र देवलः**—

ग्रीष्मप्रवेशे मणिकं ददाति द्विजसद्मनि ।
योऽम्बु पूरितमाप्नोति स तड़ाग फलं लभेत् ॥
इत्यपर मणिकदानम् ।

—*—

## (२११) अथ प्रपादानम् १(०) ।

—*—

191. **भविष्योत्तरे**—

अतीते फाल्गुने मासि प्राप्ते चैत्रमहोत्सवे ।
पुण्येऽह्नि विप्र कथिते मण्डपं कारयेत्ततः ॥
पुरस्य मध्ये पथिच चैत्यवृक्षतलेऽथवा ।
सुशीतलं सुरम्यञ्च विचित्रासन-संयुतम् ॥
तन्मध्ये स्थापयेद्रम्यान् मणिकुम्भांश्च शोभनान् ।
अकालमूलान् करकांन् वस्त्रैरावेष्टितानननान् ।
ब्राह्मणः शीलसम्पन्नो भृतिन्दत्वा यथो चिताम् ।
प्रपापालः प्रकर्त्तव्यो बहुपुत्र परिच्छदः ।
पानीयपान मश्रान्तो यः कारयति मानवान् ।
एवं विधां प्रपां कृत्वा शुभेऽह्नि-विधिपूर्वकम् ॥

१ (०) 'प्रपादानस्य माहात्म्यं वद देवेश किञ्चन ।
कथन्देया कदा देया दानस्यास्य किं फलम्'। इति तत्र युधिष्ठिर वाक्यम् ।

यथाशक्त्या नरश्रेष्ठ प्रारम्भे भोजयेद्द्विजान् ।
ततश्चोत्सर्ज्जयेद्विप्रान् मन्त्रेणानेन मानवः ।
प्रपेयं सर्व्वसामान्या भूतेभ्यः प्रतिपादिता ।।
अस्य प्रदानात् पितरः तृप्यन्तु प्रपितामहाः ।
अनिवारितं ततो देयं जलं मासचतुष्टयम् ।।
त्रिपक्षं वा महाराज जीवानां जीवनं परम् ।
गन्धाढ्यं सरसं शीतं निर्म्मलं भाजने स्थितम् ।।
प्रदद्या दप्रतिहतं मुखं स्वमवलोकयेत् ।
पिवतां सारासारत्वे मुखेन प्रविलोकयेत् ।।
विप्रान् मन्त्रेण चानेन मानयेदित्यर्थः ।
प्रत्यहं कारयेत्तस्यां भोजनं कारयेद्द्विजान् ।।
अनेन विधिना यस्तु ग्रीष्मे तापप्रणाशनम् ।
पानीयमुत्तमं दद्यात् तस्य पुण्यफलं शृणु ।।
कपिलाशतदानस्य सम्यगदत्तस्य यत्फलम् ।
तत् पुण्यं फलमाप्नोति सर्व्वदेवैः सुपूजितम् ।।
पूर्णचन्द्र प्रतीकाशं विमानमधिरुह्य सः ।
याति देवेन्द्रनगरं पूज्यमानोऽप्सरोगणैः ।।
त्रिंशत्कोट्योहि वर्षाणां यक्षगन्धर्व्व सेवितः ।
पुण्य-फलादिहागत्य चतुर्वेदी द्विजो भवेत् ।।
ततः परपदं याति पुनरावृत्ति दुर्लभा १(*) ।

इति प्रपादानम् ।।

## (२१२) अथ पान्थोपचारः ।

—*—

### 492. गारुडे —

पान्थं परिचरेद्यस्तु शयनासन-भोजनैः ।
स स्वल्पेन प्रयासेन सर्व्वक्रतु फलं लभेत् ।।

---

'दुर्लभम्' इति आदर्शपुस्तकान्तरधृतः पाठः ।

प्रतिश्रयं सुनिर्व्वाधं (तं) शुचि भूमितलं शुभम् ।
अध्वनीनाय संपाद्य सद्योदहति पातकम् ॥
वर्षासु तूष्ण १(*) भवने हेमन्तशिशिरेषुच ।
ग्रीष्मेच शीतलं पथ्यं विश्राम्य नाकभाग्भवेत् ॥
दत्वा वासो विवस्त्राय रोगिणे रुक्प्रतिक्रिया ।
तृष्णार्त्ताय जलन्दत्वा श्रृतमन्नं वुभुक्षवे २(†) ॥
पथिकाय पादत्राणं सर्व्वं तरति दुष्कृतम् ।
अध्वन्यमनुमान्यापि शाकमूलफलैर्जलैः ॥
सकृत् सत्कृत्य पथिकं श्रेयसे भाजनम्भवेत् ।

तथा—

अभावे तृणभूम्यम्बु (पा)पत्रे धन फलानिच ॥
दत्वा ध्वगाय निर्विघ्न सर्व्वं यन्ति च निर्द्धनाः ।

493. **विष्णुधर्म्मोत्तरे—**

उपानद्भ्यांश्च छत्रेण श्रान्तोऽसौ योग्य मानवः ॥
संस्थाप्य शुभदेशेतु क्षणाद्बहु फलं लभेत् ।

तथा—

मूल्येन वाहयित्वाऽपि परभारं विचक्षणः ॥
अश्वमेधाख्य यागस्य फलं दशगुणं लभेत् ।

तथा—

चौरेभ्योरक्षणं कृत्वा शक्रलोके महीयते ॥

494. **स्कान्दे ।**

यस्तु मार्ग परिश्रान्तं द्विजाति श्रमकर्षितम् ।
तैलेनाभ्यञ्जयेत् प्राज्ञःस सुखी मोदते दिवि ॥
सर्पिसा कपिला धेनु रथवान्येन सर्पिसा ।
उत्तरायणमासाद्य योऽभ्यञ्जयति धूर्ज्जटिम् ॥
महापूजां घृतेनैव तस्मिन्नेव दिने शिवे ! ॥
कृत्वा मनुष्यो लभते राज्यं निष्कण्टकं सदा ॥

---

१ (*) 'तुष्ण' इति पुस्तकान्तर धृतः पाठः ।
२ (†) 'श्रृतमन्नम्' „

सर्पिः पलसहस्रेण गोविन्दस्य शिवस्यच।
महास्नानं नरः कृत्वा ब्रह्महत्यां तरिष्यति॥

495. **नन्दिपुराणे—**

पादाभ्यङ्गन्तु योदद्यात् पान्थाय परिखे दिने।
स शुभाभरणैः सर्वैर्वन्दिभिर्नित्य वन्दितः।
भवेन्नृपो महाभागो मण्डलं दशयोजने।
संवाह्याध्व-परिश्रान्तं पादाभ्यङ्गादिना नरः॥
धर्म्मस्य पुरमाप्नोति सर्व्वकाम गुणाज्ज्वलः।
दत्वा वारि सुखस्पर्शं पादाभ्यङ्गं द्विजातये॥
उच्छिष्ट मार्ज्जनाच्चापि गोदानफलमश्नुते।

496. **भविष्यपुराणे—**

ब्राह्मणस्यतु यो भक्त्या पादौ प्रक्षाल्य यत्नतः।
घृतेनाभ्यज्य पादौतु विष्णुलोके महीयते॥
इति पान्थोपचारः॥

—*—

## (२१३) अथ गो-परिचर्य्या।

—*—

497. **तत्र विष्णुः—**

गवां कण्डुयनं चैव सर्व्व-कल्मषनाशनम्।
गवां ग्रास प्रदानेन स्वर्गलोके महीयते॥

498. **आदित्यपुराणे—**

लवणञ्च यथाशक्त्या गवां भुक्त्यै ददन्तिच।
तेषां पुण्यकृतां लोका गवां लोकं व्रजन्ति च॥

499. **महाभारते—**

कृत्वा गवां वै शरणं शीतवातक्षमं महत्।
आसप्तमं तारयति कुलं भरतसत्तम !॥

500. **हारीतश्च—**

द्वौमासौ पायये द्वत्सं द्वितृतीये स्तनं दुहेत् १(*) ।
चतुर्थे द्विस्तनश्चैव यथान्यायं यथाबलम् ।

501. **ब्रह्मपुराणे—**

आदौ विचार्य्य वयसः परिमाणं बलं रुचिम् ।
आकस्मिकन्तु दातव्यं पुण्यार्थन्तु गवाह्निकम् ॥

502. **विष्णुधर्म्मोत्तरे—**

गवां कण्डुयने चैव सर्व्व कल्मष नाशनम् ।
तासां शृङ्गोदकं नाम जाह्नवी जलसन्निभम् ॥
तथा,—दत्वा पर गवे ग्रासं पुण्यं सुमहदाप्नुयात् ।
शिशिरं सकलं कालं ग्रासं परगवे तथा ।
दत्वा स्वर्गमवाप्नोति सम्वत्सरशतानि षट् ।
अग्रभक्तं नरोदद्यान्नित्यमेव तथा गवाम् ।
नित्यमतन्त्रितः ।
द्वितीयं स्वर्गमाप्नोति तेन सम्वत्सरं नरः ।
गवां लोकमवाप्नोति यावन्मन्वन्तरं द्विजः ॥
प्राण-त्राणं गवां कृत्वा गृहे पुरुषसत्तमः ।
वासवं लोकमाप्नोति यावदिन्द्राश्चतुर्दश ॥
प्राण प्रयाने पानीयं दत्वा पुरुषसत्तमः ।
वारुणं लोकमाप्नोति क्रीड़त्यप्सरसां युतः ॥

**तथा—**

सिंहव्याघ्र भयात्त्राणं पङ्कलग्नां जले गताम् ।
समुद्धृत्य नरः स्वर्गे कल्पभागमुपाश्नुते ॥
तासां सम्प्राशनं धन्यं सर्व्वकल्मष-नाशनम् ।
दाने जलं तथा तासां कुलान्यपि-समुद्धरेत् ॥
उदक्या सूतिकादोषो नैव तत्र गृहे भवेत् ॥

इति गो-परिचर्य्या ॥

---

१ (*) चमेन दोहन काल तत् प्रकाशाय कथ्यते ।

## (२१४) अथ यज्ञोपवीतदानम् १(*)।

—*—

503. **तत्र बौधायनः—**

यज्ञोपवीतदानेन जायते ब्रह्मवर्चसम् (सी)।
तस्मात्तानि प्रदेयानि ब्राह्मणेभ्यो विपश्चिता ॥

504. **अत्रिः—**

क्षौमजं वाथ कार्पासं यादृक्सूत्रमथापिवा।
यज्ञोपवीतं योदद्याद् धृतवर्णं शुशोभनम् ॥
यथा शक्त्या विधानेन ह्यग्निष्टोमफलं लभेत्।

505. **नन्दि-पुराणे—**

यज्ञोशवीतदानेन सुरेभ्यो ब्राह्मणाय वा।
भवेद्विप्रश्चतुर्वेदः शुद्धधी नात्र संशयः ॥

506. **विष्णुप्रोक्ते—**

उपाकर्म्मणि विप्रेभ्योदत्वा यज्ञो पवीतकम्।
आयुष्मान् जायते तेन कर्म्मणा मानवोभुवि ॥

इति यज्ञोपवीतदानम् ॥

—*—

## (२१५) अथ यष्टि-दानम्।

—*—

507. **स्कान्दे—**

यष्टिं येतु प्रयच्छन्ति दृष्टिहीनेऽथ दुर्व्वले।
तेषां सुविपुलः पन्था फल मूलोपशोभितः ॥
पेयं भोज्यञ्च पान्थेभ्योदीनेभ्योऽपि दयालवः।
यष्टिदानं प्रकुर्व्वन्ति नीरोगास्ते न संशयः ॥

---

१ (*) "यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्। आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः"। यथा बौधायनः "कौशंसौत्रंत्रिस्त्रिवृतं यज्ञोपवीतमानाभेः"। वल्कोत्थं क्रमिकोषोद्भवं पट्टसूत्रादिमयमित्यर्थः। क्षौमं कार्पासोद्भवम्। अथवा [illegible] कौसुमादी चापि।

पङ्कोद्धरण कार्य्याणि यष्टिः प्रकुरुते सदा ।
गो-सपर्य्यादि वृत्तिश्च जायते यष्टि धारणात् १(*) ॥
भीतानां शरणं यष्टि र्गच्छतां निशि वा वने ।
शङ्कां पङ्कादि मार्गोत्थां नियमेन निरस्यति ॥

508. **स्कान्दे**—

यतिभ्योवैणवन्दण्डं द्विजेभ्योऽपि खनित्रकम् ।
प्रदाता परलोकेऽसौ यमदण्डं न गच्छति ॥

**तत्रैव**—

प्रददाति पथापन्ने योदण्डं ब्रह्मचारिणि ।
समहा पुरुषोलोके ब्रह्मवर्चसमश्नुते ॥

इति यष्टिदानम् ॥

—*—

## (२१६) अथेन्धन दानम् ।

—*—

509. **वह्निपुराणे**—

य इन्धनानि काष्ठानि ब्राह्मणेभ्यः प्रयच्छति ।
सर्व्वार्थास्तस्य सिध्यन्ति तेजस्वीचापि जायते ॥
हेमन्ते शिशिरे चैव धन्योऽग्निं यः प्रयच्छति ।
सर्व्वलोक-प्रतापार्थं पुण्याङ्कृतिमवाप्नुयात् ॥

510. **यमः**—

इन्धनानां प्रदानेन दीप्ताग्निर्भुवि जायते ।

511. **महाभारतेच**—

यश्चेन्धनार्थं काष्ठानि ब्राह्मणेभ्यः प्रयच्छति ।
प्रतापनार्थं राजेन्द्र प्रवृत्ते शिशिरे नरः ॥
सिध्यन्त्यर्थाः सदा तस्य कार्य्याणि त्रिविधानिच २(†) ।
उपर्य्युपरि शत्रूणां वपुषा दीप्यते नरः ॥

---

१ (*) 'गोसपर्यादि' इति पुस्तकान्तरधृतः पाठः ।
२ (†) 'कार्य्याणिविविधानिच' इति चादर्शे ग्रन्थान्तरधृतः पाठः ।
" चतेन्धनं-पाकयोग्य' काष्ठखण्डम् ।
न तु काष्ठसामान्यमार्द्रेन्धनादि ।

भगवांश्चास्य सुप्रीते वह्निर्भवति नित्यदः ।
नतं जयन्ति पशवः संग्रामेषु जयन्त्यपि ॥

इतीन्धन दानम् ॥

—*—

## (२१७) अथाग्निष्टिका-दानम् ।

—*—

512. **भविष्योत्तरे,—श्रीकृष्ण उवाच १(*)।**

आदौ मार्गशीर्षे मासि शोभने दिवसे शुभे ।
अग्निष्टिकां कारयित्वा सुखासीनवतोद्दढ़ाम् ॥

देवाङ्गने पथि हट्टे विस्तीर्णे चत्वरे तथा ।
सुत्वक्षकः संग्रहं कृत्वा सुशुद्धं काष्ठसञ्चयम् ॥

ततः प्रज्वाल्येदग्निं हुत्वा व्याहृतिभिः क्रमात् ।
ब्राह्मणान् भोजयेद् भक्त्या तेभ्योदद्याच्च दक्षिणाम् ॥

अनेन विधिना कृत्वा प्रत्यहं ज्वालयेत्ततः ।
यदि कश्चितक्षुधार्त्तःस्याद्भोजनं तस्य कल्पयेत् ॥

ॐ अद्येत्यादि—हेमन्तशिशिराख्यमृतुद्वयं यावत्—प्रत्यहं शीतार्त्त-प्राणि-तापार्थ-मिमामग्निष्टिकां श्रीविष्णुदैवतां षष्ठिसहस्र-षष्ठिशतावच्छिन्न-ब्रह्मलोकमहित्वानन्त-सर्व्वार्थ-सम्पन्न-चतुर्वेदित्व प्राणि-तापार्थ मिमामिष्टिकामहमुत्सृजे ।

### दानफलन्तु—

विमानेचार्क संकाशे समारूढ़ोमहातेजाः ।
षष्ठिवर्षसहस्राणि षष्ठिवर्षशतानिच ।

अर्चितोतृप्त-सन्तुष्टो ब्रह्मलोके महीयते ।
इह लोकेऽवतीर्णश्च चतुर्वेदी द्विजोभवेत् ॥

---

१ (*) "अग्निष्टिकाभवं प्रायं कथयामि निबोधताम्। यत्रयेन विधानेन सर्व्वसत्त्वसुखप्रदाम्" ॥

नीरोगः सत्यवादीच अमिततेजाः प्रभावतः

चैत्रे सुरालयसभावसथेषु नद्याम्,
येऽग्नीष्टकां प्रचुरकाष्ठवतीं प्रदद्युः ।
हेमन्तशिशिरऋतौ सुखदां जना(ला)नाम.
कार्य्याग्नि दीप्तममलञ्च पुरं वहन्ति ॥

इत्यग्निष्टिका दानम् ॥

—*—

## (२१८) अथ दीपदानम् ॥

—*—

513. **तत्र सम्वर्त्तः—**

देवागारेद्विजानांवा दीपं दत्त्वा चतुष्पथे ।
मेधावी ज्ञानसम्पन्नश्चक्षुष्मांश्च सदा भवेत् ॥

514. **गारुड़े—**

नीलकण्ठस्य मोक्षेण गङ्गायाञ्च तिलोदकैः १(*) ।
वर्षासु दीपदानेन पितॄणामनृणो भवेत् ॥
नीलकन्ठस्य वृषभस्य ।
यस्तु ब्राह्मणगेहेपु दीपमालां प्रयच्छति ।
स निर्ज्जित्य तमोघोरं ज्योतिषां लोकमाप्नुयात् ॥

515. **भारतेच—**

दीपप्रदानं वक्ष्यामि फलयोगमनुत्तमम् ।
पथा येन यदा चैव प्रदेया यादृशाश्च ये ॥
ज्योतिस्तेजः प्रकाशं वा ऊर्द्ध्वंगत्यापि वर्द्धनम् ।
प्रदान न्तेजसस्तस्मा त्तेजोवर्द्धय(प) तेनृणाम् ॥
अन्धन्तमस्तमिस्रञ्च प्रक्षीणमायत मेवच ।
उत्तरायणमेतस्माद्दीपदानं प्रशस्यते ॥

---

१ (*) 'नीलं वृषभस्य' इत्यं पाठान्तरं पुस्तकान्तरेऽपि । अयं पाठः साधुः ।

यस्मादूद्र्ध गातस्तत्तमस श्चैव भेषजम् १(*) ।
तस्मादूर्द्धगतिर्दातु र्भवेत्तत्रेति निश्चयः ॥

516. **विष्णु-धर्म्मोत्तरे—**

महावर्त्तिः सदा देया भूमिपालै र्महाफला ।
कृष्णपक्षे विशेषेण तत्रापिच विशेषतः ॥
अमावस्या विनिर्दिष्टा द्वादशीच महाफला ।
अश्वयुज्यामतीतायां कृष्णपक्षस्य या भवेत् ॥
अमावास्या तदा पुण्या द्वादशीच विशेषतः ।
देवस्य दक्षिणे पार्श्वे देया तैलेनतूज्वला ॥
पलाष्टकयुता राजन् ! वर्त्तिः स्तत्रैव दापयेत् ।
वाससाच समग्रेण सोप वा सोजितेन्द्रियः ॥
तद्द्वयमीदृशं कृत्वा स्वर्गलोके महीयते ।
स्वर्गलोकं चिरं भुक्त्वा जायते भूतले यदा ॥
तदा वसति लक्ष्मीवान् रूपसौभाग्य-संयुतः ।
ग्रामे वा जायते यस्मिन् देशे वा नगरे तथा ॥
कुले वा राज शार्दूल-स्तत्र स्या द्दीपवत् प्रभा ।
अत्युज्ज्वलश्च भवति युद्धेषु कलहेषुच ॥
ख्यातिं याति सदा लोके सज्जनानाञ्च सद्गुणैः ।
एकामप्यथ योदद्या दभीष्टमतयोर्द्वयोः ॥
मानुष्यं सर्व्वमाप्नोति यदुक्तं ते मयाऽनघ ! ।
स्वर्गे तथा समाप्नोति भोगकालञ्च यादव ! ॥
सामान्यस्यतु दीपस्य राजन् दानं महाफलम् ।
किं पुनर्महतश्चैव फलस्यान्तोनविद्यते ॥
दीपदानं परं पुण्यं अन्यदानादपि ध्रुवम् ।
किं पुनर्देवदेवस्य अनन्तस्य महात्मनः ॥
गिरिश्रृङ्गेषु दातव्यं नदीनां पुलिनेषुच ।
चतुष्पथेषु रथ्यासु ब्राह्मणानाञ्च वेश्मसु ॥

---

१ (*) 'भेषजम्' इति क्वचिदादर्शपुस्तके पाठः ।

वृक्षमूलेषु गोष्ठेषु कान्तार-गहनेसुच ।
दीप दानेन सर्व्वत्र महाफलमवाप्नुयात् ॥

यावन्त्यक्षिनिमेषाणि दीपः प्रज्वलते नृप ! ।
तावन्त्येवच राजेन्द्र ! वर्षाणि दिवि मोदते ॥

दीपमालां प्रयच्छन्ति ये नराः शार्ङ्गिणोगृहे ।
भवन्ति ते चन्द्रसमाः स्वर्गमासाद्य मानवाः ॥

केशवायतने दत्वा दीपवृक्षं मनोहरम् ।
अतीव भ्राजते लक्ष्म्या दिवमासाद्य मानवः ॥

दीपा नदीषु दातव्याः कार्त्तिक्याञ्च विशेषतः ।
बलिद्वारेषु तेदेया महादीपाः फलेप्सुभिः ॥

श्रावण-द्वादशी योगे कृष्णपक्षे विशेषतः ।
घृतेन दीपा दातव्या स्तिलतैलेन यादव ! ॥

वसामज्जादिभिर्दीपा नतु देयाः कदाचन ।
दत्वा दीपं न कर्त्तव्यं तेन कर्म्म विजानता ॥

निर्वापणञ्च दीपस्य हिंसनञ्च विगर्हितम् ।
दीपहर्त्ता भवेदन्धः काणोनिर्वापकोभवेत् ॥

दीपदानात् परंदानं न भूतं न भविष्यति ।
अग्निष्टोमफल न्तस्य प्रवदन्ति मनीषिणः ॥
प्राणिनां नीलरक्तां वा दीपर्त्तिञ्च वर्जयेत् ।
विशेषेणच दातव्या पट्टसूत्रभवा नृप ! ॥
प्रोज्ज्वाल्य देवदेवस्य कर्पूरेणच दीपकम् ।
अश्वमेधमवाप्नोति कुलञ्चैव समुद्धरेत् ॥
दीपदानेष्वशक्तोयः परदीपं प्रबोधयेत् ।
एतन्मयोक्तं तव दीपदाने, फलं समग्रं यदुवंशचन्द्र ॥
श्रुत्वा तथा च सततं देया, दीपास्त्वयो विप्रसुरालयेषु ।

इति दीप दानम् ॥



# (२१६) अथाभय-दानम्।

—*—

517. **तथाच सम्वर्त्तः—**

भूताभय प्रदानेन सर्व्वान् कामानवाप्नुयात्।
दीर्घमायुष्यं लभते सदाच सुखितोभवेत्॥

518. **रामायणेच—**

बद्धाञ्जलिपुटं दीनं यावन्तमपराधिनम्।
नहन्याच्छरणं प्रादात् सतां धर्म्ममनुस्मरण्॥

519. **महाभारते—**

लोभाद्द्वेषाद्भयाद्वापि यस्त्यजेच्छरणागतम्।
ब्रह्महत्या-समन्तस्य पापमाहुर्मनीषिणः॥
शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि।
शरणागत-हन्तृणां नदृष्टा निष्कृतिःक्वचित्॥

तथाच—

प्राणिनं बध्यमानंहि यःशक्तः समुपेक्षते।
स याति नरकं घोरं यावदिन्द्रा श्चतुर्द्दश॥

520. **वह्नि पुराणे—**

एकतः क्रतवः सर्वे समग्रा वरदक्षिणाः।
भीतस्य प्राणिन श्चैव रक्षणं वरमेकतः॥
वरमेकस्य सत्वस्य प्रदत्तं जीविता-भयम्।
नच विप्रसहस्राणां हेमादिभिरलङ्कृतम्॥
हेम-धेनु-धरा-दाता सुलभोजगती तले।
दुर्लभःपुरुषोलोके सर्व्वभूताभयप्रदः॥
अभयं सर्व्वसत्त्वेभ्यो योददाति दयापरः।
तस्य देहाद्विमुक्तस्य भयोनास्ति कुतश्चन॥
इष्टं तपोजपोदानं अर्थसेवा श्रुतन्तथा।
सर्व्वस्याभयदानस्य कलां नार्हन्ति षोड़शीम्॥

521. **विष्णु धर्म्मोत्तरे—**

तमः प्रवेश-भीतस्य परित्राणं करोति यः।
ब्रह्मलोकमवाप्नोति नात्र कार्य्या विचारणा॥

तमः प्रवेशोनाम चक्षुरुत्पाटनादिनान्धीकरणमिति हेमाद्रिः
वधादपि परं पापं चक्षुषातु वियोजनम् ।
पार्थिवेन नतत्कार्य्यं कदाचिदपि कस्यचित् ॥
तमः प्रवेशनं कृत्वा परेषां पुरुषाधमः ।
अन्धत्वं ध्रुवमाप्नोति प्रजाभिर्जायते नरः ॥
नरः कृतपरित्राणः पुरा यत् किञ्चिदाचरेत् ॥
भागी तस्य परित्राता नरः पुण्यस्य कर्म्मणः ॥

इत्यभय दानम् ।

—*—

## (२२०) अथ पात्र-दानम् ।

—*—

अथातः सर्व्वपापघ्नं पात्रदानं ब्रवीमि ते ।
येन दत्तेन नाप्नोति भयं क्षुत् तृट्-समुद्भवम् ॥
उत्तमं पलषष्टिश्च चत्वारिंशत्तु मध्यमम् ।
द्वादशेनेन्धनं पात्रं ताम्रमत्रायसं स्मृतम् ॥
वासांसि वरणैर्दत्वा आयसं-लोह-विकारितम् ,
लोहशब्दोऽत्र धातुमात्रपरः ।
चन्दनेनच ताम्बूलैर्विप्रं सम्पूज्य भक्तितः ।
घृतादि-द्रव्य सम्पूर्णं हेमगर्भं सवस्त्रकम् ॥
प्रतिष्ठाप्यतु तत्पात्रं ब्राह्मणाय निवेदयेत् ।
ततः शक्त्या सुवर्णन्तु प्रतिष्ठार्थं द्विजायवै ॥
सर्वेषाञ्चैव दानानां सुवर्णं दक्षिणेष्यते ।
चन्द्रलोके वसेत्तावद् यावदिन्द्राश्चतुर्दश ॥
घृतञ्च नवनीयञ्च दधि दुग्धं तथैवच ।
शर्करा घृत तैलानि तिला मधु जलन्तथा ॥
लवणं फलजातञ्च रस रत्न-समन्वितम् ।
एवं चतुर्दशयुतं दातव्यं विधिना नृप ॥

चतुर्द्दशयुतमिति। चतुर्द्दशभिर्घृतादि द्रव्यैः पूर्णानि पात्राणि दद्यादित्यर्थः। युतमिति जातावेक वचनम्।

गुणाधिकाय विदुषे ब्राह्मणाय जगत्त्रये॥
उद्धरेद्दुर्गमाद्घोराद् दुःख संसार सागरात्।
आत्मनः सकलं वंशं स नयेत ब्रह्मणोऽन्तिकम्॥

522. **पाद्मे** —

सर्व्वेषामेव दानानां उत्तमं पात्रमिष्यते।
यथाविधि प्रदातव्यं वित्तशाठ्य-विवर्ज्जितम्॥
अत्यन्तं निर्द्धनोवापि सोऽपि दद्याद् यथाविधि।
चतुर्द्दशार्द्धमर्द्धं वा दद्यादिति फलेच्छया॥
अयमत्र पात्रदान प्रयोगः।—

स्वशक्त्यनुसारेण सम्पादित-पात्रादि-सम्भारः कर्त्ता गोमयादि-लिप्ते शुद्धे देशे प्रागग्रेषु दर्भेषु घृतादि पात्राण्युदक् पश्चादति १(*) क्रमात् स्थापयित्वा ग्रन्थोक्त फल-प्राप्त्यर्थमेतावन्ति पात्राणि दास्ये इति सङ्कल्प्य पात्राण्यासादन क्रमेण प्रतिष्ठापूर्व्वकं यथावदभ्यर्च्य प्रतिगृहीतृ-ब्राह्मणाय वेदविदे वस्त्रगन्ध-माल्यादिभिः समपूज्य घृतादि-पात्राणि घृतादि दानमन्त्रैर्दत्वा दान प्रतिष्ठार्थंयथाशक्ति वा दक्षिणां दद्यात। आज्यादि-मन्त्रास्तु तत्र वक्ष्यन्ते।

वाराहे—षोड़श पात्राण्युक्तानि, यथा—
अथातः सम्प्रवक्ष्यामि पात्रदानमनुत्तमम्।
कृत्वा ताम्रमयं पात्रं यथाविभवविस्तरम्॥
उमया सहितं शम्भुं हरिं सश्रीकमेव च।
कृत्वातु काञ्चनीं दिव्यां सम्पूज्यावाहनादिभिः॥
प्रतिमां ब्राह्मणाय निवेदयेत्।
एकं मधुमयं पात्रं द्वितीयन्तु तिलस्य च।
तृतीयं घृतपात्रन्तु चतुर्थं गुण(ड़)संयुतम्॥
पञ्चमं लवणैः पूर्णं षष्ठं गोक्षीर-पूरितम्।
सप्तमं रस पात्रञ्च नवनीतन्तथाष्टमम्।
नवमं शर्करापात्रं दशमं दधि पूरितम्॥
एकादशं तैलपात्रं द्वादशं दुग्ध पूरितम्।
त्रयोदशं रत्नपात्रं अन्नपात्रं चतुर्द्दशम्॥

फलपात्रं पञ्चदशं कुर्य्यात् षोडश सं स्मृतम् ।
एतानि दत्वा राजासौ-सप्तजन्मान्तरे भवेत ॥
सुभगो दर्शनीयश्च नारीवा पुरुषो भवेत् ।
इति पात्रदानम् ॥

—*—

## (२२१) अथ कल्पदानम् ॥

—*—

423. **मात्स्ये, मत्स्य उवाच—**

कल्पानुकीर्त्तनं वक्ष्ये सर्व्वकाम-फलप्रदम् ।
यस्यानुकीर्त्तनादेव वेदपुण्येन पूज्यते ॥
प्रथमः श्वेतकल्पस्तु द्वितीयो नीललोहितः ।
वामदेवस्तृतीयस्तु ततोरथन्तरोऽपरः ॥
रौरवः पञ्चमः प्रोक्तः षष्ठः प्राण इति स्मृतः ।
सप्तमोथ बृहत्कल्पः कन्दर्पोऽष्टम उच्यते ॥
सद्योऽथनवमः प्रोक्तः ईशानोदशमः स्मृतः ।
व्याल एकादशः प्रोक्तः तथा सारस्वतः परः ॥
त्रयोदश उदानस्तु गारुड़ोऽथ चतुर्दशः ।
कौर्म्मः पञ्चदशः प्रोक्तः पौर्णमासः स्मृतोहि सः ॥
षोड़षो नार सिंहस्तु समानस्तु ततः परः ।
आग्नेयोऽष्टादशः प्रोक्तः सोमकल्प स्तथापरः ॥
मानवोविंशतितमः ततपुमानिति चापरः ।
माहेश्वरः ततः प्रोक्तः त्रिपुरोयत्र या चितः ॥
पितृकल्प स्तथेति स्याद् या कुहु र्ब्रह्मणः स्मृता ।
इत्येवं ब्रह्मणोमासः सर्व्व-पातक-नाशनः ।
आदावेवहि माहात्म्यं यस्मिन् यस्य विधीयते ।
ततस्य कल्प-तन्नाम विहितं ब्रह्मणा पुरा ॥
यस्तु दद्यादिमान् कृत्वा हैमान पर्वणि पर्वणि ।
ब्रह्म-विष्णु पुरे कल्पं मुनिभिः पूज्यते दिवि ॥

सर्व्वपापहरं नित्यं आरोग्यं श्रीफल प्रदम् १(*)।
मुनिरूपां स्ततः कृत्वा दद्यात् कल्पान् विचक्षणः २(†)॥
पुराण-संहिताचेयं तवभूप ! मयोदिता।
अत्रापि दान प्रयोगो यावदुक्तेयः।

इति कल्पदानानि॥

—*—

## (२२२) अथ नानादानानि॥

—*—

524. **तत्र मनुः—**

वारिदस्तृप्तिमाप्नोति सुखमक्षय्य मन्नदः।
तिलप्रदःप्रजामिष्टां दीपदश्चक्षुरुत्तमम्॥
भूमिदोभूमिमाप्नोति दीर्घायुश्च हिरण्यदः।
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम्॥
यासोदश्चन्द्र सालोक्य मश्विसालोक्यमश्वदः।
अनडुहः श्रियं पुष्टां गोदोब्रध्नस्य विष्टपम्॥
यान-शय्या-प्रदोभार्य्या मैश्वर्य्यमभय-प्रदः।
धान्यदः शाश्वतं सौख्यं ब्रह्मदोब्रह्मसार्ष्टितम्॥
ब्रह्म-समानागति स्तद्भवतीत्यर्थः।
'ऋषगतौ' इत्यस्माद्धातोः···क्तिनि रूपम्।

525 **अत्र यमः—**

दत्त्वा प्रतिश्रयं लोके तथाऽत्रैव निरामयम्।
गाश्च दत्त्वा तथा विप्रे ब्रह्मलोके महीयते॥
प्रतिश्रयः—प्रवासिनां नामाश्रयः। (धर्म्मशालेति प्रसिद्धिः)।
छत्रदोगृहमाप्नोति गृहदो नगरस्तथा।
उपानहः प्रदानेन शरीरारोग्य माप्नुयात्॥

१ (*) 'सर्व्वपापक्षयकरं कल्पदानं यतोभवेत्' इति हेमाद्रिधृतः पाठः।
२ (†) मुनिरूपान् सुवर्णाकारान् तान्मुनीनांल्पवयुक्तानिति शेषम्।

इन्धनानां प्रदानेन दीप्ताग्निर्भुवि जायते।
गवां ग्रास प्रदानेन सर्व्व पापैः प्रमुच्यते॥

526 सम्वर्त्तः—

नानाविधानि द्रव्याणि धर्म्मेणोपार्जितानितु।
आयुष्कामेन देयानि स्वर्गमक्षय्य मिच्छता॥
गुड़ मिक्षु रसञ्चैव लवणं व्यञ्जनं शुचि।
सुरभीनिच वासांसि दत्त्वा ऽत्यन्तं सुखी भवेत्॥

527 देवी पुराणे—

न्यायतोऽन्याय-वाप्तानि शाकान्यपि नृपोत्तम।
तानि देयानि देयास्तु कन्यका योषितस्तथा॥

528 विष्णु पुराणे—

यद्यदिष्टतमं लोके यच्चास्य(न्यद्) दयितं भवेत्।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता॥

529. नारसिंह पुराणे—

एकविंशत्यमी स्वर्गा निविष्टा मेरु मूर्द्धनि।
आह सद्दानकर्त्तारो यज्ञानां तपसान्तथा॥
एतेषु निवसन्त्यस्मिन् नरा क्रोध-विवर्ज्जिताः।

530 एकविंशति स्वर्गानाह—

अन्तः प्रवेशी चानन्दं प्रमोदं वह्नि-साहसी।
भृगु-प्रयाती सौख्यन्तु रणेचाभि मुखे हतः॥
अनशनेतु सन्न्यासे मृतोगच्छेत्त्रि विष्टपम्।
क्रतु याजी नाकपृष्टं अग्निहोत्री च निर्वृतिम्॥
तड़ाग-कूप-कर्त्ताच लभते पौष्टिकं द्विजः।
सुवर्ण दायी सौभाग्यं लभते सुमहत्तरम्॥
शीतकाले महावह्निं प्रज्वालयति योनरः।
सर्व्वसत्त्वहितार्थाय स्वर्गमप्सरसां लभेत्।
हिरण्यदाने गोदाने कन्यादाने च मङ्गलम्।
द्विजानां तर्पणं कृत्वा दत्वा वस्त्राणि भक्तितः॥

इत्येतु लभते स्वर्गं यत्र गत्वा न शोचति १(*) ।
कपिला गो प्रदानेन परमार्थे महीयते ॥
एकान्न भोजी योमर्त्यः नक्तभोजीच नित्यशः ।
उपवासी त्रिरात्रादिन्यन्ते स्वर्गे महीयते ॥
एकान्न भोजी—एककालभोजी ।
एकाहारी जित-क्रोधः ब्रह्मचारी दृढ़-व्रतः :
निर्म्मलं स्वर्गमाप्नोति यद्यदिच्छति मानवः ॥
यस्तु सर्व्वाणि दानानि ब्राह्मणेभ्यः प्रच्छति ।
स प्राप्य न निवर्त्तेत स्वर्गं शान्तमनामयम् ।
येन येनहि भावेन, यद्यद्दानं प्रयच्छति ।
तत्तत स्वर्गमवाप्नोति यद्यदिच्छति मानवः ॥

## 531. विष्णुधर्म्मोत्तरे—

आयुधानां प्रदानेन शत्रुनाशमवाप्नुयात ।
राज-लिङ्गप्रदानेन राजा भवति भूतले ॥
राजलिङ्गं-छत्र चामरादि ।
देव माल्याद्यानयनं देवागार-समूहनम ।
देवमाल्याद्यानयनं—देवार्थं माल्यसंग्रहः ।
मार्ज्जनं सर्व्वदेवानां गोप्रदान-समस्मृतम् ॥

## 532. याज्ञवल्क्यः—

शर्तं सम्वाहनं रोगि-परिचर्य्या-सुरार्च्चनम् ।
पादशौचं द्विजोच्छिष्टमार्जनं प्रगोदासमम् ॥
प्रगोदासमं—उत्तमगोदानतुल्य मिति ।
इति नाना दानानि ॥

—*—

१ (*) 'एतैव लभते' चनेत्र' पाठान्तर मस्ति ।

इन्धनानां प्रदानेन दीप्ताग्निर्भुवि जायते।
गवां ग्रास प्रदानेन सर्व्व पापैः प्रमुच्यते॥

526 सम्वर्त्तः—

नानाविधानि द्रव्याणि धर्म्मेणोपार्जितानितु।
आयुष्कामेन देयानि स्वर्गमक्षय्य मिच्छता॥
गुड़ मिक्षु रसश्चैव लवणं व्यञ्जनं शुचि।
सुरभीनिच वासांसि दत्त्वा ऽत्यन्तं सुखी भवेत्॥

527 देवी पुराणे—

न्यायतोऽन्याय-वाप्तानि शाकान्यपि नृपोत्तम।
तानि देयानि देयास्तु कन्यका योषितस्तथा॥

528 विष्णु पुराणे—

यद्यदिष्टतमं लोके यच्चास्य(न्यद्) दयितं भवेत्।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता॥

529. नारसिंह पुराणे—

एकविंशत्यमी स्वर्गा निविष्टा मेरु मूर्द्धनि।
आह सद्दानकर्त्तारो यज्ञानां तपसान्तथा॥
एतेषु निवसन्त्यस्मिन् नरा क्रोध-विवर्ज्जिताः।

530 एकविंशति स्वर्गानाह—

अन्तः प्रवेशी चानन्दं प्रमोदं वह्नि-साहसी।
भृगु-प्रयाती सौख्यन्तु रणेचाभि मुखे हतः॥
अनशनेतु सन्न्यासे मृतोगच्छेत्त्रि विष्टपम्।
क्रतु याजी नाकपृष्टं अग्निहोत्री च निर्वृतिम्॥
तड़ाग-कूप-कर्त्ताच लभते पौष्टिकं द्विजः।
सुवर्ण दायी सौभाग्यं लभते सुमहत्तरम्॥
शीतकाले महावह्निं प्रज्वालयति योनरः।
सर्व्वसत्त्वहितार्थाय स्वर्गमप्सरसां लभेत्।
हिरण्यदाने गोदाने कन्यादाने च मङ्गलम्।
द्विजानां तर्पणं कृत्वा दत्वा वस्त्राणि भक्तितः॥

इत्येतेषु लभते स्वर्गं यत्र गत्वा न शोचति १(*) ।
कपिला गो प्रदानेन परमार्थे महीयते ॥
एकान्न भोजी योमर्त्यः नक्तभोजीच नित्यशः ।
उपवासी त्रिरात्रादिन्यन्ते स्वर्गे महीयते ॥
एकान्न भोजी—एककालभोजी ।
एकाहारी जित-क्रोधः ब्रह्मचारी दृढ़-व्रतः :
निर्म्मलं स्वर्गमाप्नोति यद्यदिच्छति मानवः ॥
यस्तु सर्व्वाणि दानानि ब्राह्मणेभ्यः प्रच्छति ।
स प्राप्य न निवर्त्तेत स्वर्गं शान्तमनामयम् ।
येन येनहि भावेन, यद्यद्दानं प्रयच्छति ।
तत्तत स्वर्गमवाप्नोति यद्यदिच्छति मानवः ॥

531. विष्णुधर्म्मोत्तरे—

आयुधानां प्रदानेन शत्रुनाशमवाप्नुयात ।
राज-लिङ्गप्रदानेन राजा भवति भूतले ॥
राजलिङ्गं-छत्र चामरादि ।
देव माल्याद्यानयनं देवागार-समूहनम ।
देवमाल्याद्यानयनं—देवार्थं माल्यसंग्रहः ।
मार्ज्जनं सर्व्वदेवानां गोप्रदान-समस्मृतम् ॥

532. याज्ञवल्क्यः—

शर्त्त सम्वाहनं रोगि-परिचर्य्या-सुरार्चनम् ।
पादशौचं द्विजोच्छिष्टमार्जनं प्रगोदासमम् ॥
प्रगोदासमं—उत्तमगोदानतुल्य मिति ।
इति नाना दानानि ॥

—*—

१ (*) 'एतैव लभते' 'यत्रैव' पाठान्तर मस्ति ।

## (२२३) अथ यत्यादि वपन दानम् ।

—*—

533. **विश्वामित्रः—**

ब्रह्मचारि-यतिभ्यश्च वपनं यस्तु कारयेत् ।
न स्व (ख) कर्म्माणि कुर्व्वाणः चक्षुष्मान् जायते नरः ॥
यतिभ्यो ब्रह्मचारिभ्यो पथिकेभ्य स्तथैवच ।
अन्येषामपि दीनानां प्रकुर्व्वन् केश कृन्तनम् ।
नखानां धावनश्चैव कृत्यरूपयुतोभवेत् ॥
यस्तु सर्व्व-जनार्थाय केशश्मश्रु-नखादिकम् ।
क्रियां समुद्दिश्य भृतिं नापिताय प्रयच्छति ॥
देवागारेषु तीर्थेषु श्रिया परमा युतः ।
स वाहनाश्व गोलोके वीतशोकः प्रजायते १(*) ॥

इति यत्यादि वपनदान विधिः ।

—*—

## (२२४) अथाश्वत्थ विवाहविधानम् ।

—*—

534. **सच शातातप-प्रोक्तः—**

प्रतिमाया भङ्गकोत्थ-प्रतिष्ठाश्च प्रजायते ।
सम्वत्सर-त्रयं सिञ्चेत् अश्वत्थं सानु वोषरम् ॥
उद्वाहयेत्समश्वत्थं समं शय्या विधानतः ।
अश्वत्थश्चात्र सेवकादि स्वकीय परीऽपीतरो वात्र ग्राह्यः ।
नतु पूर्व्वं प्रतिष्ठितः ।

यदि शमी स्वतः समीपे स्थिता तदा तयासह पिचुमर्द्देन वा विवाहः १(*) । अथ यदि न लभ्यते तदा वृषोत्सर्गे इव सवत्साम्, शमीशाखाम्, तदभावे कुशस्तम्भम् वा समानीय स्वशाखोक्त-विधानतो विवाहः कार्य्यः । शिष्टाचार प्राप्तं विधानश्चैतत् । शुभे दिने चन्द्रतारावलान्विते ऽश्वत्थ समीपे पश्चाद्भूमिं गोमयादिना शुद्धां कृत्वा, ब्राह्मणानुपवेश्य ; स्वस्तिवाचनं कृत्वा, नान्दीश्राद्धं विधाय, आज्यसिक्त-हरिद्राकुङ्कुम-

१ (*) कमाद्द' चवद्द: पाठः समिकथः ।

गन्ध-पुष्प-यज्ञोपवीतादिभिरश्वत्थशमीश्चालङ्कृत्य, मधुपर्कन्दत्वाग्निं प्रतिष्ठाप्य, व्याहृतिभिः तिलाज्याभ्यामाब्रुद्देशेन पृथक् पृथगष्टोत्तरशतं वा हुत्वा गृह्योक्तविधिना शमीं तस्मै भार्य्यात्वेन प्रतिपाद्य, ब्राह्मणान् भोजयित्वा, यथाशक्ति दक्षिणान्दत्वा, परमेश्वराय समर्पयेदिति । एवमश्वत्थोद्वाहनं विधाय, तत्र—

विनायकमश्वत्थ मूले संस्थापयेदित्याह,—तत्र संस्थापये देवं विघ्नराजं सुपूजितम् इति । तत्राश्वत्थमूल समीपे विनायक मूर्त्तिं दारु-पाषाणादिभिर्निर्म्माय यथाविभवमालयं विधाय स्थापयेत् । तत्रायं प्रयोगः—

देशकालादीन् स्मृत्वाऽश्वत्थमूले विनायक स्थापनं करिष्ये इति सङ्कल्प्य, ॐ भूः विनायक इहागच्छ, ॐ भुवः विनायक इहागच्छ, ॐ स्वः विनायक इह तिष्ठ, ॐ भूर्भुवः स्वः विनायक इह तिष्ठेति मन्त्रेणावाह्य, गन्ध-पुष्पाक्षतैः प्रतिमायां विनायकं सम्बोध्य, विनायक-प्रकाशकमन्त्रैः षोड़शोपचारैः सम्पूज्य तिलाज्यञ्च जुहुयात् । यथाशक्ति-व्याहृतिभिरिति विनायक-प्रतिष्ठा ॥

तत्राश्वत्थविवाहो विनायक प्रतिष्ठा चेति द्वे कर्म्मणी मिलित्वा(ऽ)प्रतिष्ठितत्व.... हरेः ? । प्रीत्यर्थम् अभ्युदयार्थेत्वेतु प्रत्येकमभ्युदय हेतुः । द्वितीय होमेग्निः पूर्व्वस्थापित एव ।

अयं विवाहसंस्कारः अश्वत्थस्य पूर्व्वकृतोपनयन-संस्कारस्यैव । उपनयन-प्रयोगः प्रागभिहितः ।

इत्यश्वत्थ विवाहविधानम् ॥

—*—

## (२२५) अथ शालग्रामदान विधानम् ।

—*—

### 535. पद्म पुराणे—१(*)

शालग्राम शिलाचक्रं योदद्याद्दा नमुत्तमम् ।
भूचक्रं तेनदत्तं स्यात् सशैल वन काननम् ॥
हृदि सूर्ये जले चाग्नौ प्रतिमा स्थण्डिलेषु च ।
सम्यगर्च्च्य हरिं यान्ति नरास्ते वैष्णवं पदम् ॥
अथवा, सर्व्वपाप प्रणाशनम् ।
तच पुण्य प्रदं वैश्य सर्वषामपि मुक्तिदम् ॥

१ (०) 'शालग्रामशिलातोय पीत्वा याति] परागतिम् । अपि पाप समाचारो ब्रह्महत्या युतोऽपि वा' ॥ पद्म पुराणे पातालखण्डे १० अः ।
'यः कुर्य्याद्दानमुत्तमम्' इत्यपि पाठान्तरमस्ति ।

यः पूजयेद्धरिं चक्रे शालग्राम-समुद्भवे ।
स दक्षिणं राजसूयं येनेष्टं प्रतिवासरम् ॥
यदामनन्ति वेदान्तां ब्रह्मनिर्गुण-मच्युतम् ।
तत् प्रसादोभवेन्नृणां शालग्रामशिलार्चनात् ॥
महत्काष्ठे स्थितोवह्निर्मथ्यमानः प्रकाशते ।
तथा हरिः सर्व्वव्यापी शालग्रामे प्रकाशते ॥
अपि पापं समाराध्य कर्म्मण्य नधिकारिणः ।
शालग्रामार्च्चनाद्वैश्यो नव याति यमालयम् ॥
नतथा रमते लक्ष्म्यां नतथा स्वपुरे हरिः ।
शालग्राम-शिलाचक्रे यथा स रमते सदा ॥
अग्निहोत्रं हुतं तेन दत्वा पृथ्वीं ससागराम् ।
येनार्चितो हरिश्चक्रे शालग्रामःशिलोद्भवे ।
शिलाद्वादश भो वैश्य ! शालग्राम-समुद्भवाः ॥
विधिवत्पूजिता येन तस्य पुण्यं वदामि ते ।
कोटि द्वादश लिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः ॥
यद्वा द्वादश कल्पैस्तु दिनेनै केन तद्भवेत् ।
यःपुनःपुजयेद्भक्त्या शालग्राम शिलाशतम् ॥
ऊषित्वा सुरलोकेच चक्रवर्त्तीह जायते ।
कामक्रोधैस्तु विविधै र्व्याप्तो यस्तु नराधमः ॥
सोऽपि याति हरेर्लोकं शालग्राम-शिलार्चनात् ।
विना तीर्थै विनायज्ञैः विनादानै र्विनामतिम् ।
मुक्तिं याति नरोऽवश्यं शालग्राम शिलार्चनात् ॥
नरकं गर्भवासञ्च तिर्य्यक्त्व क्रिमि योनिषु ।
नयाति वैश्य ! पापोऽपि शालग्राम-शिलार्चकः ॥
स स्नातः सर्व्वतीर्थेषु सर्व्वसत्येषु दीक्षितः १(*) ।
शालग्रामशिलातोये योऽभिषेकं समाचरेत् ॥

---

१ (०) 'स्नातवान्सोऽच्युतार्चक.' इति चादर्श पुस्तकान्तरधृतः पाठः ।
'कोटिलिङ्गसहस्रैस्तु पूजितैर्जाह्नवीतटे ।
काशीवासयुगान्यष्टौ दिने नैकेन तद्भवेत्' । पुराणे ब्रह्मवैवर्त्ते १८ पः ।

गङ्गा गोदावरी रेवा नद्यो मुक्ति प्रदास्तु याः ।
निवसन्ति हि तीर्थास्ताः शालग्राम-शिलाजले ॥
नैवेद्यैर्विविधैः पुष्पै धूपदीपै विलेपनैः ।
गीत-वादित्र-स्तोत्राद्यैः शालग्राम-शिलार्च्चनात् ॥
कुरुते मानवो यस्तु कलौ भक्ति-परायणः ।
कल्पकोटि-सहस्राणि रमते सन्निधौ हरेः ।
लिङ्गैस्तु कोटिभिर्दृष्टैः यत्फलं पूजितैर्भवेत् ।
शालग्राम-शिलायान्तु यः श्राद्धं कुरुते नरः ॥
पितरस्तस्य तिष्ठन्ति तृप्ताः कल्पशतं दिवि ।
ये पिबन्ति नरा नित्यं शाल-ग्रामशिला जलम् ॥
पञ्चगव्य-सहस्रैस्तु प्राशितैः किं प्रयोजनम् ।
शालग्राम-शिलाचक्रं द्वारका-चक्र संयुतम् ॥
पात्रघण्टाशङ्खयुतं यो दद्यात् पर्व्वणि द्विजः ।
तस्य पुण्यस्य संख्यानं नालं वक्तुं चतुर्म्मुखः ॥
ब्रह्महत्या सहस्राणि दातुर्नश्यन्त्य संशयम् । इति

—*—

## (२२६) शालग्राम-शिलामूर्त्तिलक्षणम् १(*) ।

—*—

शालग्राम-शिलाद्वार-गतं चक्रं द्विलग्नधृक् ।
मुक्ताभो वासु देवाख्यः सेव्यः सश्रीगदाधरः ॥
लग्नो द्विचक्रो रक्ताभः पूर्वभागेषु पुष्करः ।
सङ्कर्षणोऽथ प्रद्युम्नः सूक्ष्म चक्रस्तु पीतकः ॥
सु दीर्घः शुषिरश्छिद्रो यो निरुद्धस्तु वर्त्तुलः ।
नीलो द्वार त्रिरेखश्च अथ नारायणः सितः ॥
मध्ये गदाकृति-रेखा नाभिचक्रं महोन्नतः ।
पृथुचक्रो नृसिंहाख्यः कपिलो वा त्रिबिन्दुकः ॥

---

१ (*) 'शङ्खचक्रगदापद्म-धृक् वा श्रीगदाधरः ।
शार्ङ्गकौमोदकीचक्र शङ्खी नारायणो विभुः ॥
स चक्रशङ्ख गदी माधवः श्रीगदाधरः ।
गदाब्ज शङ्खचक्री वा गोविन्दोऽथ गदाधरः' । इति गारुडे—४५ अः ।

अथवा पञ्चबिन्दुस्तत् पूजनं ब्रह्मचारिणः ।
वराहः शक्त-लिङ्गाख्यः विषमोरूपचक्रकः ॥
नीलस्त्रिरेखः शूलोऽथ कूर्म्ममूर्त्तिः सबिन्दुमान् ।
कृष्णः स वर्त्तुलावर्त्तः यस्तु चोन्नत-पृष्ठकः १(*) ॥
श्रीधरः पञ्चरेखः स्याद् वनमाली गदाङ्कितः ।
शङ्खी वामनो वर्त्तुलो ह्रस्वोवामः सुरेश्वरः ॥
नानावर्णोऽनेक मूर्त्तिर्नाग-भोगी त्वनन्तकः ।
स्थूलच्छिद्रः स्थूलचक्रः कृष्णो विष्णुश्च विल्ववत् ॥
हयग्रीवोऽङ्कुशाकारः पञ्चरेखः स कौस्तुभः ।
स्थूलोदामोदरो नीलः मध्ये चक्रः सनीलकः ॥
सङ्कीर्णो द्वारकोणे स्याद् अथ ब्रह्मा सुलोहितः ।
सदीर्घ रेखः शुषिरः एकचक्राम्बुजः पृथुः ॥
वैकुण्ठोमणि-रत्नाभः एकचक्राम्बुजोषितः ।
मत्स्यो दीर्घाम्बुजाकारो द्वाररेखः स पातु वः ।
वामचक्रो दक्षरेखः श्यामो वाच्यस्त्रिविक्रमः ।
शालग्रामे द्वारकायां स्थिताय गदिने नमः ॥
एकेन लक्षितोयश्च चक्रेणतु सुदर्शनः ।
लक्ष्मीनारायणोद्वाभ्यां त्रिभिर्मूर्त्ति-त्रिविक्रमः ।
चतुर्भिश्च चतुर्व्यूह वासुदेव स्तु पञ्चभिः ।
प्रद्युम्नः षड्भिः रेखः स्यात् सङ्कर्षण इतस्ततः ॥
पुरुषोत्तमोह्यष्टाभिः स्यान्नवव्यूहो नवाङ्कितः ।
दशावतारो दशभिः अनिरुद्धोऽवतादथ ॥
द्वादशात्मा द्वादशभि रत ऊर्द्ध्वमनन्तकः ।
विष्णोर्मूर्त्तिमयं स्तोत्रं यः पठेत् स दिवम्व्रजेत् ॥

इति गारुड़े २(†) ।

१ (*) 'पातुचोन्नत' इत्यं पाठान्तरमस्ति ।

२ (†) 'न जातु चित् स्त्रियाकार्य्यं शालग्रामस्य पूजनम् ।
भर्त्तृहीनाथ सुभगा सर्वलोक हितैषया ॥
मोहात् स्पृशेत महिला जन्मशील गुणान्विता ।
हित्वापुण्य समूहन्तु सत्वरं नरकं व्रजेत् ॥
स्त्रीपाणिमुक्त पुष्पाणि शालग्रामशिलोपरि ।
परैरधिक पापाणि वदन्ति ब्राह्मणोत्तमाः ॥ ब्रह्मवैवर्त्त २१ अः ।

536. **अथ नारदीये—**

श्यामवर्णाच पीताच नीलवर्णा तथैवच।
पाण्डुरा रक्तवर्णाच कपिलाचेति वर्णकाः॥
पत्नीहरास्यात् कपिला नीला लक्ष्मी प्रदायका।
पुष्टि वृद्धिप्रदा श्यामा शुक्ला मोक्ष प्रदायिनी।
पीता-धनकरी ज्ञेया रक्ता राज्य प्रदायिनी।
अतिरक्ता रोगदाच कृष्णा कीर्त्ति प्रदा शुभा॥
पापघ्नी पाण्डुरा नित्यं रक्तचोद्वेगकारिणी।
स्थूला निहन्ति चैवायु र्वक्रा दारिद्र्य दायिनी॥
स्निग्धा सिद्धिप्रदा शश्वद् निष्कला स्यादलाञ्छता।
कपिला वद्धचक्राच त्रिकोणा बन्धु-नाशकृत्॥
अधोमुखं क्षयकरं ऊर्द्धमुच्चाटनं स्मृतम्।
आयुष्यं हरते मुष्टं करालं कुलनाशनम्।
वृहुरं स्फुटितं दग्धं त्रिकोणञ्च विवर्ज्जयेत।
अथ स्फुटितं चक्रञ्च वद्धचक्र न्तथैवच॥
बहुरेखा वहुछिद्रा तिर्य्यक् (चक्रा) वक्त्रां तथा त्यजेत्।
ध्वजवज्राङ्कुशैः पीतो वामे चक्रं सुवर्तुलम्॥
लक्ष्मीनारायणो ज्ञेयः शङ्खचक्र समन्वितः।
पूजनीयः सदा सद्भिः वैष्णवै र्मोक्षमिच्छुभिः॥
चतस्रो यत्र दृश्यन्ते रेखायाश्च समीपगाः।
द्वे चक्रे मध्यदेशेच सा शिला स्याच्चतुर्म्मुखी॥
कूर्म्मचक्रमधोभागे श्वेतभाग-श्रुरान्विता।
शिवनाभिरिति ज्ञेया भुक्तिमुक्ति-फलप्रदा॥
इष्टाच यस्य या मूर्त्तिः स तां यत्नेन पूजयेत।
लिङ्गञ्च स्थापयेत् स्थाणोः शालग्राम समुद्भवम्॥
ज्ञेयो योगेश्वरोनाम्ना ब्रह्महत्या व्यपोहति।
सुदर्शनाख्यमेकेन द्वाभ्यां नारायणः स्मृतः॥
त्रिभिश्चक्रैरच्युतः स्यात् चतुश्चक्री जनार्द्दनः।
पञ्चभिर्वासुदेवः स्यात् षड्भिः प्रद्युम्न एवच॥

सङ्कर्षणः सप्तभिः स्यात् अष्टभिः पुरुषोत्तमः ।
नवव्यूहस्तु नवभि र्दशभिर्दशजन्मकृत् ॥
रुद्रचक्रै स्तु रुद्रःस्याद् द्वादशै र्द्वादशात्मकः ।
एतेभ्योऽधिक चक्रो यः परमात्मा स उच्यते ॥
दीर्घरेखा समोपेतो दक्षिणे सुषिरान्वितः ।
दीर्घो दक्षिण-वामास्यो मत्स्यः काञ्चनवर्णभृत् ॥
बिन्दुत्रय समायुक्तः अर्द्धशार्ङ्गी ततः स्मृतः ।
एतल्लक्षण संयुक्तो विभाति काय-पञ्चकः ॥
कूर्म्ममूर्त्ति रसौ-चक्रः हृदि कौस्तुभ लाञ्छितः ।
वराहोव्यक्तचिह्नैश्च चक्रेच विषम-स्थिते ।
इन्द्रनील-निभः स्थित स्त्रिरेखा लाञ्छितः प्रभुः ।
वामपार्श्वे स्थिते चक्रे कृष्णवर्णे सविन्दुके ॥
लक्ष्मीनृसिंहो विख्यातो भुक्तिमुक्ति फलप्रदः ।
कदम्ब कुसुमाकारो रेखापञ्च-विभूषितः ॥
वर्त्तुलश्चाति ह्रस्वश्च वामनः परीकीर्त्तितः ।
पीतश्च चाप-परशु-मूसलेन सुलक्षितः ॥
रामोरामश्च रामश्च ज्ञेयो मृत्यु हरः क्रमात् ।
अतसी पुष्पसंकाशो बिन्दुना परिभूषितः ॥
पुरुषोत्तम उक्तोऽसौ सर्व्वसौभाग्यवर्द्धनः ।
सर्व्वभौमाख्य-वृद्धिकृत् ॥
इत्यादि मूर्त्तिलक्षणम् १(*)।

## विषयान्तरमाह—

शालग्राम-शिलायाश्च प्रतिष्ठा नैव विद्यते ।
महापूजान्तु कृत्वादौ पूजयेत्तां ततो बुधः ॥

१ (*) गारुडे मूर्त्तिध्याने ४४ पः—।
'शालग्राम शिलाभग्ना पूजनीया स चक्रका।
खण्डिता, स्फुटिता वापि शालग्रामशिला शुभा' ॥
नत्वेवं भूता दारुमयी प्रतिमा पूज्या। मृण्मयी वा पि तथैवापूज्या।

वृहच्चक्रा वक्त्रलग्ना बद्धचक्राऽथवा पुनः ।
या स्याच्छीलादग्र चक्रा साच ज्ञेया त्वधोमुखी ॥
भग्ना सुरक्ता कपिला भीषणा भग्न चक्रिका ।
पजयेद् यः प्रमादेन दुःखं वै लभते सदा ॥
एतत्तु काम्यार्च्चन विषयम् ।

537. **अथ एवाह भगवान्—**

खण्डितं स्फुटितं भग्नं पार्श्वे छिद्रं विभेदितम् ।
शालग्राम-समुद्भुतं शैलं दोषावहं नहि ।
चक्रंवा केवलं पद्मं समेन सह संयुतम् ।
केवला वनमालावा हरिलिंङ्गया सहस्थितः ॥
शालग्राम-हते नष्टः स्थिराया मुद्धवार्च्चने ।
स्थिरायां हिविकल्पःस्यात् शालग्रामत्व मेवहि ॥
शालग्रामार्च्चनेनैव ह्यावाहन विसर्ज्जने ।
शालग्रामेतु भगवान् आदिभूतो हरिर्यथा ।
न तथान्यत्र मूर्य्यादौ वैकुन्ठेऽपिच सर्व्वदा ॥ इति

—*—

## (२२७) तद्दान विधिस्तु कूर्म्मपुराणे उक्तः—

—*—

योदद्याति शिलां विष्णोः शालग्राम समुद्भवाम् ।
विप्राय विष्णुभक्ताय तेनेष्टं क्रतुभिः शतैः ॥
शालग्राम-शिलाचक्रे जगदेतन् प्रतिष्ठितम् ।
तस्मिन् दत्तेतु दत्तं स्याज्जगदेतच्चराचरम् ॥
पुण्यक्षेत्रे पुण्यकाले दानं शतगुणम्भवेत् ।
अस्मिन्दाने नच क्षेत्रं पुण्यकालं न चिन्तयेत् ॥
शालग्राम-शिलायुक्तं तत्क्षेत्रं वैष्णवं ध्रुवम् ।
अयने विषुवे चैव व्यतीपाते दिन क्षये ॥
चन्द्र सूर्य्योपरागेच एकादश्यां विशेषतः ।
वैष्णवेषुच तीर्थेषु काश्यां वै तीर्थराजके ॥

शालग्राम शिलान्दद्यात् सर्व्वलक्षण-संयुताम् ।
पात्र-घण्टादि संयुक्तां द्वारका चक्रसंहिताम् ॥
असम्भवे शिलामात्रं विदुषे ब्राह्मणाय च ।
वैष्णवाय सुशान्ताय सात्वताय पूतायच ॥
वेदशास्त्रविदे चैव विष्णुभक्तिरतायच ।
एवम्विधं समाहूय पूजयेद्गन्ध-भूषणैः ॥
वासोभिरुपवीतेन आत्म-वित्तानुसारतः ।
शिलान्तु पूजयेत्पूर्व मुपचारैस्तु षोड़शैः ।
द्वादशाक्षरमन्त्रेण गन्ध-पुष्प-सुधूपकैः ।
नैवेद्यैःसोपहारैश्च ब्राह्मणाय शिलान्ददेत् १(*) ॥
महाकोशनिवासेन चक्राद्यैरुप शोभितम् ।
शालग्राम-प्रदानाच्च मम सन्तु मनोरथाः ॥
शालग्रामशिलाचक्रे भुवनानि चतुर्द्दश ।
यस्माद्वसन्ति तद्दानात् सर्व्वदत्तमिहास्तु मे ॥
इति मन्त्रैः समुच्चार्य्य दद्याद्विप्रकरे जलम् ।
ततोवै दक्षिणान्दद्याद् यथासम्भवमादरात् ॥
सम्पूर्ण-पृथिवीदानाद् यत्फलं समवाप्यते ।
पृथिवीदानतुल्यत्वाद् उक्तपुण्यं लभेद्ध्रुवम् ॥
सम्प्रदानस्य माहात्म्यं वक्तुं वर्षशतैरपि ।
चतुर्म्मुखोऽपि नालं स्यात् किमन्ये दुर्धियो जनाः ॥

## 538. अथैतस्य प्रयोगः ।

यथासम्भवं शालग्राम-शिलादि-सम्पाद्याभीष्टकाले सम्प्रदानीभूतविप्रमाहूय पुरुष-सूक्तेन, द्वादशाक्षरेण मन्त्रेण शालग्राम-शिलां षोड़शोपचारैः सम्पूज्याद्येत्याद्युक्त्वाऽमुकगोत्रायामुकशर्म्मणे( तुभ्यम् ) मम सर्व्वपापक्षय पूर्व्वक विष्णुलोक प्राप्त्यर्थं कूर्म्मपुराणोक्तविधिना शालग्रामशिलाचक्रदानमहं करिष्ये, इति सङ्कल्प्य ब्राह्मणवरणं कृत्वा वस्त्रोपवीतगन्ध-पुष्प-धुपदीपैरलङ्कारैश्च तं सन्तोष्य पुनः षोड़शोपचारैः शिलां सम्पूज्यामुकगोत्रायामुकशर्मणेतुभ्यं अमुकगोत्रामुकदेवशर्म्माहं सर्व्वपापक्षयपूर्व्वक विष्णुलोक प्राप्त्यर्थमिदं शालग्रामशिलाचक्रं गण्डकीसमुद्भूतं वज्रकीट निर्म्मितं विष्णुदैवतं यथासम्भवोपस्कार-

१ (*) "पार्तिकाभिव" इति चाक्षर्मव्याकरणतः पाठः ।

सहितं सम्प्रददे नममेति ब्राह्मणहस्ते जलन्दत्वा, ॐ महाकोष निवासेनेत्यादि, सर्व्वदत्त मिहास्तुमे इत्यन्तं मन्त्रं पठेत् ।

ब्राह्मणस्तु पञ्चोपचारैः शिलां सम्पूज्य, प्रदक्षिणी कृत्य प्रणम्य गायत्रीमुक्त्वा इदं शालग्रामशिलाचक्रं गण्डकी समुद्भूतं वज्रकीट निर्म्मितं विष्णुदैवतं श्रीविष्णुप्रीत्यर्थं प्रतिगृह्णामि । ॐस्वस्ति, देवस्येत्वेति वदेत् । ततोदाता—

शाल ग्रामशिलाचक्रे जगदेतत् प्रतिष्ठितम् ।
तस्मिन् दत्ते तु दत्तं स्यात् जगदेतच्चराचरम् ॥

इति प्रार्थयित्वा, अद्येत्यादि-कृतैतत् शालग्रामशिलाचक्र-प्रतिष्ठासिद्ध्यर्थं सुवर्णादि-दक्षिणान्दत्वा स्तुवीत १(*) ।

त्रिलोकनाथ देवेश ! सर्व्वभूत दयानिधे ! ।
दानेनानेन तृप्तः सन् यथोक्त-फलदोभव ॥
मन्दिरं कारयित्वातु ब्राह्मणाय समर्पयेत् ।

### तद्दान मन्त्रस्तु—

त्वया जगद्व्याप्तमिदं समस्तं इत्यादि अग्रेऽभि धास्यते ।

इति शालग्राम शिलाचक्रदानविधिः ।

—*—

## (२२८) अथ विष्णुप्रतिमा दानविधानम् ।

—*—

539. **कूर्म्मपुराणे**—

एवमेव चरेद्दानं प्रतिमाया हरेः खलु ।
त्वया जगद्व्याप्तमिदं समस्तं,
त्वं विष्णुरित्येव वदन्ति सन्तः ।
त्वत्स्थानि सर्व्वाणि वदन्ति देव !.
त्वया धृतं विश्वमनन्तमूर्त्ते ! ॥

---

१ (*) 'शालग्रामशिलाचक्री यत्र तिष्ठति केशवः ।
तत्र देवासुरा यक्षा भुवनानि चतुर्द्दश' इत्यादिकाच्च वचनं ।
'शालग्रामे नदी यत्र मत्स्यमे प्रतिमासु च ।
नित्यन्तु श्रीहरेः पूजा केवलेन जनैनतु ।'' इति पद्मपुराणे १० अः ।

तत्त्वत् प्रदानादनघो भवामि,
यथा जगत्कारण कारणेन ।
तथा कुरुत्वं शरणं प्रसन्नम्,
मयि प्रभो देववर प्रसीद ॥
इति विष्णुप्रतिमादान विधानम् ।

—*—

## (२२६) अथ लिङ्गदानविधानम् १(*) ।

—*—

540. **शिवधर्म्मे, पार्व्वत्युवाच—**

देवदेव महादेव लिङ्गदान विधिं वद ।
लिङ्गदान फलञ्चापि वद सर्व्वं कृपानिधे ! ॥

### श्रीशिव उवाच—

काश्मीर काञ्चनादीनि लिङ्गानि विविधान्यपि ।
देयान्यत्यन्त यत्नेन मत् प्रित्यर्थं मुमुक्षुभिः ॥
देवेभ्य एव देयानि दत्तस्यानन्त्य मिच्छुभिः ।
शिवरात्रौ सोमवारे ग्रहणे चन्द्रसूर्य्ययोः ॥
संक्रान्तिष्वपि कर्त्तव्यं शिवक्षेत्रे विशेषतः ।
उपोष्य पूर्व्वदिवसे शैवान् सम्पूज्य सादरम् ॥
प्रार्थनीयास्तदा शैवाः लिङ्गदानार्थं मादरात् ।
ततो देयानि लिङ्गानि क्षीराज्यैर्विधिपूर्व्वकम् ॥
अभिषिच्याच्चर्चनीयानि विल्वपत्रादिभिः शिवे ।
सौवर्णे राजते वापि ताम्रे वा भाजने नवे ॥
नववस्त्रे समास्तीर्णे शिवलिङ्गानि वेशयेत् ।
ततः पुनः प्रयन्तेद भस्मयिल्वदलादिभिः ॥

---

१ (*) 'गृहे लिङ्गद्वयं नार्च्यं शालग्रामद्वयं तथा ।
द्वे चक्रे द्वारकायास्तु नार्च्यं सूर्य्यद्वयं तथा' ।

सम्पूज्य क्षीरपक्वान्न-नैवेद्यानि समर्पयेत् ।
रात्रौ जागरणं कार्य्यं भक्ति श्रद्धापुरःसरम् ॥
नैवेद्यं देयममलं मह्यं यामचतुष्टये ।
ततः प्रातः समुत्थाय स्नातोविप्रं समर्च्च्यच ॥
ततः सुवर्ण-सहितं वस्त्रयुग्म-समन्वितम् ।
प्राह्यं सपात्रं हस्तेन शिवलिङ्गं सदात्मकम् ॥
शिवलिङ्गे शिवाकारे भुवनानि चतुर्द्दश ।
तस्मादस्य प्रदानेन प्रीयतां भगवान् शिवः ॥
इति मत्रं समुच्चार्य्य मद्भक्ताय प्रदापयेत् ।
देवस्यत्वेति-राजेति इति मन्त्रांस्ततःपरम् १(*) ॥
प्रतिग्रहिता यत्नेन पठनीया यथाक्रमम् ।
दक्षिणाञ्च ततोदत्वा शिवे सर्व्वं समर्पयेत् ॥
एकस्मिन् शिवलिङ्गेऽपि दत्ते दत्तं जगत्त्रयम् ।
बहूनान्तु फलं वक्तुं लिङ्गानां कः क्षमोभवेत् ॥
एवं यः कुरुते भक्त्या लिङ्गदानं यथाविधि ।
स महापापसङ्घेभ्यः सद्यएव प्रमुच्यते ॥
यं समर्थं समुद्दिश्य लिङ्गदानं करोति यः ।
स तन्तमर्थंप्राप्नोति मत्प्रसादान्मनोरमे ! ॥
लिङ्गदानसमं दानं नास्ति कुत्रापि शैलजे ! ।
तस्मात् सर्व्वं प्रयत्नेन लिङ्गदानं समाचरेत् ॥
मन्त्रान्निबोध देवेशि ! सकासाद् गदतो मम ।
ॐ देवासुराणाममृतं विधाय,
हालाहलं संहृतमेव यस्मात् ॥

१ (*) 'तल्लिङ्ग' द्विविधं ज्ञेयं चलं चाचलमन्यथा ।
प्रत्येकं त्रिविधं ज्ञेयं लिङ्गं तदुभयात्मकम् ।
प्रासादे स्थापितं लिङ्गं अचलं तच्छिलादिकम् ।
स्थापितमचलं गेहे स्थिरं लिङ्गं पयोनिधे ।
पञ्चधा तत् स्थितं लिङ्गं स्वयंभु दैवपात्मकम्' । इत्यादि वीरमित्रोदये लिङ्गे ।

यथा सुराणां त्रिपुरस्य वधम् ,
एकेषुणा लोकहितार्थमीश ! ।
तद्रुपदानादहमप्यशेषः,
दोषैर्विमुक्तस्तु गुणान् प्रपद्ये ॥
यथा कुरु त्वं शरणं प्रपन्ने,
मयि प्रभो देववर प्रसीद ॥

इत्युक्त्वा मामकीं मूर्त्तिं दद्याद्दक्षिणा संयुताम् ।
एवमेव गणेशस्य दुर्गायाः सूर्य्य वेधसोः ॥
अन्येषामपि देवानां प्रतिमां प्रतिपादयेत् ।
तत्तल्लोकमवाप्नोति सर्व्वत्र जयमाप्नुयात् ॥
भग्नां वा खण्डितां वापि दत्वा दोषमवाप्नुयात् ।
तस्माल्लक्षण सम्पन्नां प्रतिमां सर्व्वदाऽर्पयेत् ॥
महदैश्वर्य्य माप्नोति स्वर्गलोके महीयते ।

इति श्रीमदनन्ताचार्य्य-विरचिते-दान-पारिजाताभिधे-निवन्धे-शालग्राम-विष्णुमूर्त्ति-लिङ्ग-शिवमूर्त्ति-दानविधानानि सम्पूर्णानि ॥४॥
इति विधानपारिजातस्य चतुर्थः स्तवकः
समाप्तः १(*) ।

—*—



१ (*) पञ्चक्रतामयदानादिकं पञ्चमस्तवकेऽभिधास्यते ।

# विधान-पारिजाते।

## चतुर्थस्तबकः।

—*—

### तत्रादौ परिभाषा निरूप्यते १(*)

(१) अत्राधिकारिणो व्यासेणोक्ताः—

वर्णानां आश्रमाणाञ्च चातुर्वर्ण्ये प्रतिष्ठितः।
दानधर्म्मं प्रवक्ष्यामि यथा व्यासेन भाषितम्॥

(२) स्कान्दे—

श्रद्धावान् पापभीरुश्च मद-दम्भ विवर्ज्जितः।
पूर्व्वनिश्चय माश्रित्य यथावत् कर्म्मकारकः॥
अवेद-निन्दको धीमा नधिकारी व्रतादिषु।
आदिशब्देन दानादिकं गृह्यते।

(३) शूद्रे विशेषमाहः, जातूकर्णः—

अधिकारी भवेच्छूद्रः पूर्त्तधर्म्मे न वैदिके।
पूर्त्तं दानादिकम्। अन्यत्र वापी कूपतड़ागा दिकम्।

---

१ (*) यस्मिन् धर्म्मकृत्ये क्रियमाणं द्रव्यं देयं तदत्रोच्यते। परिभाष्यते विषयो द्रव्यं वा निरूप्यते यथेति। 'घञ भावव्यञ्जनायां वाचि, इत्यस्माद्धातोः परिपूर्व्वात् (भाष् धातोः), अ-प्रत्ययः (३-३-१०२) सूत्रात्। 'परिभाषा अपि'। 'परिभाषाश्च ततो भविष्यन्ति' इति। 'हेतुमति च' (३।१।२६) पाणिनेः सूत्रं भाष्यात्। अन्यत्र शाब्दिका आहुः। 'अनियमे नियमकारिणी या सा परिभाषा' इति। वैदान्तेच—'धर्म्मशास्त्राचारोर्न्द्रिच परिभाषा वितन्यते' इति। वैद्यकेच—औषधीनां परिभाषे 'परिभाषाप्रदीपः' इति सन्दर्भः। शिल्पशास्त्रे बहुष ग्रन्थेषु एवमेवास्ति,-वास्तु-प्रतिमा-सेतु विमान-प्रभृति-परिमाणेषु।

(४) **त्रैवर्णिकानामधिकारविशेषमाह, याज्ञवल्क्यः—**

पूर्व्वोक्तेन प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः।
अधिकारो भवेत्तस्य रहस्यादिषु कर्म्मसु ॥
पूर्व्वोक्त प्रकारश्चोच्यते।

**याज्ञवल्क्यः—**

आर्षं च्छन्दश्च दैवत्यं विनियोग स्तथैवच।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥
अविदित्वातु यः कुर्य्याद् याजनाध्यापनं जपम्।
होममन्तर्जलादीनि तस्य चाल्पफलं भवेत् ॥

**तथा—**

यश्च जानाति तत्त्वेन आर्षं च्छन्दश्च दैवतम्।
विनियोगं ब्राह्मणांश्च मन्त्रार्थं ज्ञान कर्म्मच १(*) ॥
एकैकस्य ऋषिः सोऽपि वह्नात्यतिथिवद् भवेत्।
देवतायाश्च सायुज्यं गच्छन्त्यत्र न संशयः ॥
येन यदृषिणा दृष्टं सिद्धिः प्राप्ताच येन वै।
मन्त्रेण तस्य तस्योक्तं ऋषेर्भावस्तदार्षकः २(†) ॥
छादनाच्छन्द उद्दिष्टं वाससी इव वा कृतः।
आत्मा संच्छादितो देवैर्मृत्योर्भीतैतु यत् पुनः ३(‡) ॥
आदित्यैर्वसुभिः रुद्रै स्तेनच्छन्दांसि तानि वै।
यस्य यस्यतु मन्त्रस्य उद्दिष्टा देवता तु या ४(+) ॥
तदाकारम्भ वेत्तस्य देवत्वं देवतोच्यते ५(×)।
पूरा काले समुत्पन्ना मन्त्राः कर्म्मार्थं मेवच ॥

---

१ (*) 'मन्त्र ब्राह्मणयोर्वेदनामधेयम्' इति।

२ (†) 'ऋषतिगती, ऋषन्ति जानन्ति वेदादीन्। ततः औणादिकात् 'इगुपधात्कित्' (४।१२०)। 'ऋषयो मन्त्रद्रष्टारः साक्षात्कृत धर्म्माणः' इति निरुक्ते।

३ (‡) 'आर्षं तु विज्ञानं योगिनामूर्द्ध्वस्रोतसाम्' इति तत्त्वकौमुद्यां मिश्राः।

४ (+) मीमांसकाः [illegible] प्राहुः। मन्त्रात्मकाः सर्वे देवाः इति।

५ (×) अथवा मासादिपरिभाषा पश्चाद् वक्ष्यते। 'तल्लिङ्गेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः। देवतामाविधिः' इत्यादि।

अनेन चेदं कर्त्तव्यं विनियोगः स उच्यते ।
तेनोक्तं यच्च मन्त्रस्य विनियोगः प्रयोजनम् ॥
प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणस्तदिहोच्यते ।
एवं पञ्चविधं योगं जपकाले ह्यनुस्मरेत् १(*) ।
होमे चान्तर्जले योगे स्वाध्याये याजने तथा ।
इति संक्षेपेण परिभाषा ॥

—*—

## अथ प्रतिमा(ना)दीनां द्रव्यपरिमाणानुक्तौ विशेषः ।

### भविष्य पुराणे—

अनुक्त-द्रव्यतत्संख्या देवता प्रतिमादिषु २(†) ।
सौवर्णी राजती ताम्री वृक्षजा मार्त्तिकी तथा ॥
चित्रजा पिष्टलेपोत्था निजवित्तानुरूपतः ।
आपद्विलयपर्यन्ता कार्य्या शाठ्यवर्ज्जितै रिति ॥

### अत्रैव विशेषः, पुराणान्तरे—

अङ्गुष्टपर्व्व प्रभृति वितस्त्यवधिका स्मृतेति ।
कलश-लक्षणमुक्तं विष्णुधर्म्मोत्तरे —
हैम-राजत-ताम्राश्च (श्म) मृण्मया लक्षणान्विताः ।
यात्रोद्वाह-प्रतिष्ठादौ कुम्भाः स्युरभिषेचने ॥
पञ्चाशाङ्गुल वैपुल्या उत्सेधे षोड़शाङ्गुलाः ।
द्वादशाङ्गुलमूलाः स्युर्मुखमष्टाङ्गुलं भवेत् ॥
पञ्चाशेति—पञ्च आशाश्च पञ्चाशाः ।
अत्राशाशब्दो दशशब्द पर्य्यायः ३(‡) ।
तेन पञ्चदशाङ्गुलैर्मध्ये विस्तार इत्यर्थः ।

---

१ (*) यद्यद् वेदानां भाष्य-टीकादि प्रारम्भेषु मीमांसाशास्त्रे चास्ति । तथैव श्रौत-धर्म-गृह्यसूत्रेषु-तथाक्रमेषु च निधनकाले महातीर्थादौ चान्त्यं स्वीकरणे पञ्चविध-योगः विधेयः । तदभावे गृहे तत्प्राङ्गणे पुष्पवृक्षैः पञ्चवाटिका कर्त्तव्या ।

२ (†) 'प्रतिमासु' इति पाठान्तरमस्ति । 'वितस्तिर्द्वादशाङ्गुलम्' ।

३ (‡) अत्राशाशब्दोऽयमदिग्वाचकः ।: 'दिशस्तु ककुभः काष्ठा आशा' । 'आशा दशदिशो-ऽभिधाम्' इति च कोशकृतः । आमनादमुनि व्याप्नोति पूर्वादिविभागान् इति ।

## देवी पुराणे—

कलसस्य मुखे ब्रह्मा ग्रीवायाञ्च महेश्वरः ।
मूलेतु संस्थितो विष्णु र्मध्ये मातृगणाः स्थिताः ॥
शेषेतु देवता सर्व्वा वेष्टयन्ति चतुर्दिशम् ।
पृथिव्यां यानि तीर्थानि कलसेच वसन्ति हि १(*) ॥

## तेच नवदेवा यथा—

महाशान्तिश्च-पुष्टिश्च प्रीतिश्च मतिरेवच ।
ऋग्वेदश्च-यजुर्वेदः सामवेद स्तथैवच ॥
अथर्व्ववेद सहिताः सर्व्वे कलश संस्थिताः ।

## अथ पञ्चरत्नान्युक्तानि, आदित्यपुराणे—

सुवर्णं रजतं मुक्ता राजावर्त्तं प्रवालकम् ।
पञ्चरत्नकमाख्यातं शेषं वस्तु ब्रवीम्यहम् २(†) ॥

## तथा—

अभावे सर्व्वरत्नानां हेम सर्व्वत्र योजयेत् ।
रुद्रवीजं परं पूतं यतस्तद्धेम सर्व्वदा ॥

## पञ्चामृत मुक्तं शिवधर्म्मे—

पञ्चामृतं दधि-क्षीरं सितामधुघृतं नृप ! ।

## पञ्चगव्यानितु स्कान्दे—

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
पञ्चगव्यमिति ख्यातं सर्व्वपातक नाशनम् ॥

---

१ (*) 'कलशे नव सन्निधि' इति पाठान्तरं दृश्यते । अत्र 'नवदेवताः' पश्चाद्ब्रह्मादि-चातुर्वर्ण्या-
न्ता उक्ताः ।

२ (†) मतान्तरे पञ्चरत्नानि,—
'कनकं हीरकं नीलं पद्मरागञ्च मौक्तिकम् ।
पञ्चरत्नमिदं प्रोक्तमृषिभिः पूर्व्वदर्शिभिः ।
गौडाः प्राहुः—'कनकरजत-प्रवाल-मौक्तिक-राजपट्टात्मकं' पञ्चरत्नमिति ।

## तथा—

ताम्रारुण-श्वेत-कृष्णवर्णानां गवामाह,—
गोमूत्रं गोमयं क्षीरं दधि-सर्पिः कुशोदकम् १(*) ।
'गायत्रया' चैव गोमूत्रं 'गन्धद्वारेति' गोमयम् ।
'आप्यायस्वेति' वै क्षीरं 'दधिक्राव्ने'ति वै दधि ॥
'तेजोऽसि शुक्र' मित्याज्यं 'देवस्यत्वा' कुशोदकम् ।
एभिस्तु पञ्चभिर्युक्तं पञ्चगव्यं प्रचक्षते ॥
एतदेव महापुण्यं ब्रह्मकूर्च्चमिति स्मृतम् ॥

## पञ्चपल्लवान्युक्तानि, ब्रह्माण्डे—

अश्वत्थो डुम्बुर-प्लक्ष-चूत-न्यग्रोध-पल्लवाः ।
पञ्चगन्धा इति प्रोक्ताः सर्व्वं कर्म्म सुशोभनाः ॥

## चतुः समादि-गन्धानां स्वरूपमुक्तं गारुड़े—

कस्तुरिकाया द्वौ भागौ चत्वारश्चन्दनस्यतु ।
कुङ्कुमस्य त्रयश्चैव शशिनश्च चतुःसमम् ॥

## अत्र शशी कर्पूरः ।

कर्पूर-चन्दनागुरू तथैव कुङ्कुमांशकम् ।
सर्व्वगन्धमिति प्रोक्तं समस्त-सुखमुत्तमम् २(†) ॥

## तथा—

कर्पूरमगरुश्चैव कस्तूरीचन्दन स्तथा ।
कक्कोलञ्च भवेदेभिः पञ्चभि र्यक्षकर्द्दमः ३(‡) ॥

---

१ (*) पञ्चमन्त्राः शुक्लयजुः संहितायां सन्ति ।—१२ अः, मः ११२ । ११ अः, ११ मः । २२ अः, मः १ । पञ्चगव्यमिदं प्रोक्तं महापातक नाशनम् । इति भिन्नः पाठः क्वचित् । पञ्च वर्णानां गवां पञ्चगव्यं ग्राह्यम् ।
२ (†) 'समस्तसुखदायकः' इत्यन्यः पाठः ।
३ (‡) 'विमधु—मन्त्रमाले तथैवास्ति ।
,, यक्षकर्द्दमः, यथा—'कर्पूरागुरुकस्तूरी कक्कोलघुसृणानि च ।
एकीकृत्यइदं सर्व्वं यक्षकर्द्दम उच्यते' इति व्याडिः ।
'कुङ्कुमागुरुकस्तुरी कर्पूरचन्दनन्तथा ।
महासुगन्धिरित्युक्तं नामतो यक्षकर्द्दमः' इति धन्वन्तरिः ।

### स्कान्देतु—

कस्तूरिकाया द्वौ भागौ द्वौ भागौ कुङ्कुमस्य च।
चन्दनस्य त्रयोभागाः शशिनस्त्वेक एवच॥
यक्षकर्दम इत्येषः समस्त सुखवल्लभः।

### मधुत्रयमाह, कात्यायनः—१(०)।

आज्यं मधु तथा क्षीरं मधुत्रयं समुच्यते इति॥

### सर्वौषध्य उक्ताः, छन्दोगपरिशिष्टे—२(S)।

कुष्टं मांसी हरिद्रे द्वे मुरा शैलेय-चन्दनम्।
वचा चम्पक मुस्ताश्च सर्वौषध्यो दश स्मृताः॥

### सप्तधान्यानि, यथा—षट्त्रिंशन्मते—

यवगोधूम धान्यानि तिलाः कङ्गुकुलत्थकाः।
श्यामाकं चीनकश्चैव सप्तधान्यमुदाहृतम्।
अत्र धान्यं-व्रीहिः।

### अष्टादश धान्यानितु, स्कान्दे—

यवगोधूम धान्यानि तिलाः कङ्गु कुलत्थकाः।
माषा मुद्गा मसूराश्च निष्पाव-श्याम-सर्षपाः॥
गवेधुकाश्च नीवारा (वाना) आढक्योथ सचीनकाः।
चणकाश्चीनकाश्चैव धान्यान्यष्टादशैवतु॥
अत्र श्यामाः—श्यामाकाः। सचीनकाः—कलायाः।

---

१ (०) त्रिमधु, मन्त्रशास्त्रे तथैवास्ति। पञ्चाङ्गानि प्रकरणेच—मन्त्रशास्त्रे—'मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम्। षटी चम्पकमुस्ताश्च सर्वौषधिगणः स्मृतः॥

२ (S) पद्मपुराणे उत्तरखण्डे—'श्यामकमाषमसूराश्च धान्यकोद्रव सर्षपाः। मुष्टको राजमाषाश्च तुम्बुरी कुसुरस्तथा॥ यवगोधूममुद्गाश्च तिलकङ्गुकुलत्थकाः॥ गवेधुकाश्च नीवारा-श्चाढकाश्च कलायकाः॥ माक्षुको मञ्जकोरकः कोचको चणकस्तथा। तिलकाश्चणकाश्चैव धान्यानि कथितानि वै' इति।

## सप्तदश धान्यानितु, मार्कण्डेय पुराणे—

व्रीहयश्च यवाश्चैव गोधूमाः कङ्गुकास्तिलाः ।
प्रियङ्गवः कोविदाराः कोरदोषाः सजी(ची)नकाः ।
मासा मुद्गा मसूराश्च निष्पावाः स कुलत्थकाः ।
आढ़का श्चणकाश्चैव शाणाः सप्तदशाः स्मृताः १(*) ॥

## सौभाग्याष्टकमुक्तम्, पाद्मे—

इन्दवः स्तवराजश्च निष्पावा जाजिधान्यकम् ।
विकारवच्च गोक्षीरं कुसुम्ब कुसुमन्तथा ॥
लवणं चाष्टमं तत्र सौभाग्याष्टकमुच्यते ।
अत्र स्तवराजः—कर्पूरं शर्करा वा ।

## नवरत्नान्युक्तानि, विष्णुधर्म्मोत्तरे—

मुक्ताफलं हीरकञ्च वैदुर्य्यं फलरागकम् ।
पुष्परागञ्च गोमेदं नीलञ्च गारुजं (तं) तथा ॥
प्रबालयुक्तान्येतानि महारत्नानि वै नव २(†) ।

## षड्रसा उक्ता, भविष्यपुराणे—

मधुरोऽम्लश्च लवणः कषायस्तिक्त एवच ।
कटुकश्चेति राजेन्द्र ! रसषट्क मुदाहृतम् ॥

---

१ (*) धान्यानि सप्तदशधा भिन्नानि यथा, महाभाष्ये—'धान्यशब्देन सप्तदशधान्यानि उच्यन्ते'। तानि च—व्रीहि-यव-मसूर-गोधूम-मुद्ग-माष-तिल-चणक-अणु-प्रियङ्गु-कोद्रव-मयुष्टक-कलाय-कुलत्थ-शण-सर्षप-अतसी चेति। पाणिनेः सूत्रे (५।२।४) भाष्ये 'शाखाःसप्तदशानि धान्यानि' इत्यादि। 'व्रीहिः सामान्यधान्ये स्यात्'। धान्यं व्रीहिस्तम्बकरिः' इति च कोषकृतः। 'धाने पोषणे साधु' ४।४।९८ इति सूत्रात् यत्प्रत्ययेन सिद्धम् ।

२ (†) मणिशास्त्रे प्रोक्तानि नवरत्नानि, यथा—
'मुक्ता माणिक्यवैदूर्यगोमेदान् वज्रविद्रुमौ ।
पद्मरागं मरकतं नीलञ्चेति यथाक्रमात्'—इति तन्त्रसारे। चन्द्रवृत्तिकल्पतरौ भोजराजीये पुष्करमपि ।

## रसद्रव्याणितु स्कान्दे—

दधि-क्षीर-मधाज्यञ्च माक्षिकं लवणं गुड़ः।
तथैवेक्षुरसाश्चेति रसाः प्रोक्ता मनीषिभिः १(*)॥

## अष्टाङ्गार्घ्यं स्वरूपमुक्तं, भविष्यपुराणे—

आपः क्षीरं कुशाग्राणि दध्यक्षत तिलास्तथा।
यवाः सिद्धार्थकाश्चैव मर्घोऽष्टाङ्गः प्रकीर्त्तितः (२†)॥

## धातु सप्तक मुक्तं, तत्रैव—

सुवर्णं रजतं ताम्रं मारकूटं तथैवच ३(‡)।
लोहं त्रपु तथासीसं धातवः परिकीर्त्तिताः॥

## अत्रारकूटं पित्तलम्। नव कौतुकानि, तत्रैव—

दूर्व्वाजवाङ्कुरश्चैव बालकं चूतपल्लवः।
हरिद्राद्वय-सिद्धार्थ-शिखी च यत्रीण त्वचः।
कङ्कलौषधय श्चैताः कौतुकाख्या नव स्मृताः॥

---

१ (*) 'तुवर-मधुर-लवण-कटु-तिक्त-अम्लाश्चेति षड् रसाः स्युः। मतान्तरेतु तुवरादयः सप्त भवन्ति। 'षड्मीषिषु' इति कथनात् षडेव रसाः। 'षड्रसा, ऋतवः षट् च, षडेव रिपव स्तथा'। इति व्याडिः। 'रसस्तु रसनाग्राह्यो मधुराम्लादिकीर्त्तनः' इति न्यायविदः। अन्यद् वैद्यकेऽस्ति।

२ (†) क्षीरेक्षुरसादौ माधुर्य्यम्, तिन्तिरिकादौ अम्लता, मरीचादौ कटुत्वम्, पटोलपत्रादौ तिक्तता, सैन्धवादौ लावण्यम्, हिलमोचिकामोचकादौ कषायत्वमिति। चरकोक्ता रसादि सप्त-शरीर-धातवः। भिषजामुपदेशेन षड्रसाः सेव्याः।

" कृतौ पुराणे काशीखण्डे च पाठान्तरं यथा,—
'आपः क्षीरं कुशाग्राणि-दधि-सर्पिश्च तण्डुलाः।
यवाः सिद्धार्थकाश्चैव अष्टाङ्गार्घ्यः प्रकीर्त्तितः'॥
'आपः क्षीरं कुशाग्राणि घृतं मधु तथा दधि।
रक्तानि करवीराणि तथा रक्तञ्च चन्दनम्।
अष्टाङ्ग एव अर्घ्यो वै भानवे परिकीर्त्तितः'॥ आगमशास्त्रेऽप्येवमस्ति।

" अन्यत्रोक्ता धातवो यथा—
'सुवर्णरूप्यताम्राणि हरितालं मनःशिला।
गैरिकाञ्जनकासीसं-तथातैजससहिंगुलाः।
गन्धकोऽभ्रकमित्याद्या धातवो गिरिसंभवाः'॥ इति शब्दमालायाम्।

**पञ्चरजांस्युक्तानि, पञ्चरात्रे—**

रजांसि पञ्चवर्णानि मण्डलार्थे हि कारयेत्।
शालितण्डुल चूर्णेन शुक्लं वा यवसम्भवम्॥
रक्तं कुसुम्भसिन्दूरं गैरिकादि समुद्भवम्।
हरितालोद्भवं पीतं रजनी-सम्भवं क्वचित्॥
कृष्णं दग्ध यवैश्चैव हरितं पीत(कृष्ण)मिश्रितम् १(*)।

**दशाङ्गधूप उक्तः, गन्धयुक्तौ—**

षड्भृङ्गि-कुष्ठं द्विगुणोगुरुश्च,
लाक्षात्रयं पञ्चच तस्य भागः।
सुरत्नकी सर्व्वरसः समांसी,
भागैकमेकं त्रिलवं शिलाश्मम्।
घनस्य चत्वारि पुरस्य चैव ;
धूपोदशाङ्गः कथितो मुनीन्द्रैः॥

अत्र द्विगुणौ-द्व्यंशः। लाक्षात्रयं—लाक्षाया भागत्रयम्। त्रिलवं—भागत्रयम्। शिलाश्मं—शैलेयम्। घनोमुस्ता। मु (पु) रोगुग्गुलः २(†)।

---

१ (*) तन्त्रसारे च मण्डलपञ्चचूर्णानि, यथा—
'पीतं हरिद्राचूर्णं स्यात् सितं तण्डुलसम्भवम्।
कुसुम्भचूर्णमरुणं कृष्णं दग्धपुलाकजम्।
बिल्वादि पत्रजं श्याममित्युक्तं वर्णकं क्रमात्'॥

२ (†) पञ्चाङ्गधूपोयथा, तन्त्रशास्त्रे—'चन्दनं कुङ्कुमं चैव कर्पूरं गुग्गुलोऽगुरुः। धूपोऽयं घृतसंयुक्तः
पञ्चाङ्गः समुदाहृतः' (१) तत्रैवाष्टाङ्गधूपः—
गुग्गुल्वगुरुकं तेजपत्रं मलयसम्भवम्। कर्पूरं बालकं कुष्ठं मूतनं कुङ्कुमं तथा।
अष्टाङ्गः कथितोधूपः देवानां प्रीतिदःशुभः'। तत्रैव, दशाङ्गधूपः—
'कर्पूरं कुष्ठमगुरु गुग्गुलुर्मलयोद्भवम्। केशरं बालकंपत्रं त्वग्जातिकोषमुत्तमम्।
सर्व्वमेतद्घृतयुतं दशाङ्गोधूप ईरितः'। तत्र द्वादशाङ्गो यथा—
" 'गुग्गुलुश्चन्दनं पत्रं कुष्ठश्चागुरुकुङ्कुमम्। जातीकोषश्च कर्पूरं जटामांसी च बालकम्।
त्वगुशीरश्च धूपोऽसौ द्वादशाङ्गः प्रकीर्त्तितः'।
" तत्रैव षोडशाङ्गधूपो यथा,—
'मुस्तकं गुग्गुलुःकुष्ठं कर्पूरं मलयोद्भवम्। देवदारुजटामांसी जातीकोषश्च बालकम्।
सुरामांसी त्वगुरुकं त्वगुशीरश्च केशरम्। एला तथा तेजपत्रं सर्व्वमेतद्घृताप्लुतम्।
" धूपोऽयं षोडशाङ्गः स्याद् देवताप्रीति कारकः'॥

## दर्भेषु विशेषमाह, मरीचिः—

मासे नभस्यमावास्या तस्यान्दर्भोऽक्षयो मतः ।
अजातयामास्ते दर्भा विनियोज्याः पुनः पुन ॥

## कात्यायनः—

हरिता यज्ञिया दर्भाः पीतकाः पश्चयज्ञियाः ।
समूला पितृदैवत्याः कल्माषा विश्वदैविकाः ॥
ह्रस्वाः प्रचरणीयाश्च कुशा दीर्घाश्च वर्हिषाः ।

### प्रचरणं कर्म्मसु तदर्हः ।

## लघुहारीतः—

पथि दर्भा क्षितौ दर्भा ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु षड् दर्भान् परिवर्ज्जयेत् ॥
पिण्डार्थं ये धृ(कृ)ता दर्भा यैः कृतं पितृतर्पणम् ।
मूत्रोच्छिष्ट प्रलिप्तेच तेषां त्यागो विधीयते १(*) ॥
नीवी मध्येच ये दर्भा ब्रह्मसूत्रेच ये धृताः ।
पवित्रा स्तद् विजानीयाद् यथाकाय स्तथा कुशाः ॥
अनन्तर्गर्भिणं साग्रं कौशं द्विदल मेवच ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥

---

१ (*) 'धृतैः कृतेच विण्मूत्रे त्यागस्तेषां विधीयते' इति श्लोकार्द्धं शोध्यम् ।
अत्र धृतैरित्युपलक्षणेन तृतीया, धृतैर्दर्भैः पुरुषेणोपलक्षितेन ।
दर्भवटुलक्षणमाह, रत्नाकरे—'ऊर्द्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्त्तकोब्रह्मा वामावर्त्तस्तु विष्टरः ॥'
शान्तिदीपिकायाञ्च—
'सप्तभिः ( पञ्चभिः ) वापि सार्द्धत्रितय वेष्टितम् ।
ॐकारेणैव मन्त्रेण द्विजः कुर्यात् कुशद्विजम्' ॥
'यज्ञवास्तुनि मुष्टौ च स्तम्भे ब्रह्मवटौ तथा ।
दर्भसंख्या नविहिता विष्टरास्तरणेष्वपि' ॥ एतत्त च्छन्दोगेतराणां विषये बोध्यम् ।
'त्रितयवेष्टित' मित्यत्र द्वितय वेष्टित मिति केचन ।

तदेवं दर्भपिञ्जल्या लक्षणं समुदाहृतम् ।
आज्यस्योत्पवनार्थाय तद्द्रव्ये तावदेवतु १(*) ॥

## परिशिष्टेच—

कतिभिस्तु भवेद्ब्रह्मा कतिभिर्विष्टरो मतः ॥
पञ्चाशद्भि,र्भवेद्ब्रह्मा तदर्द्धं न तु विष्टरः २(†) ।
दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः ॥
तत्रैव, आपद्युपदिश्यते कर्म्म कर्त्तुरङ्गं नचो(वो)च्यते ३(‡) ॥
कर्म्मणां प्रधानाङ्गन्तु तेषु दक्षिणाः ।
तास्तु—विज्ञेयाः कर्म्मणां प्राणा इति ।

## कर्म्मसु दिगुच्यते—

यत्र दिङ्नियमो नास्ति जपहोमादि कर्म्मसु ।
तत्र शिव-दिशः प्रोक्ता ऐन्द्री सौम्यापराजिताः ४(+) ॥
अत्र, अपराजिता ऐशानी दिक् ।

## कृत्याधिकारो—

आसीन ऊर्द्ध्वः प्रह्वोवा नियमो यत्र नेदृशः ।
तदासीनेन कर्त्तव्यं न प्रह्वेण न तिष्ठता ५(×) ॥
प्रह्वेण—नम्रेण ।

## वशिष्ठ—

जपहोमोपवपवासेषु धौतवस्त्रधरो भवेत् ।
अलङ्कृतः शुचिर्मौनी श्रद्धावान् विजितेन्द्रियः ६(०) ॥

---

१ (*) 'आज्यस्योत्पवनार्थं यजन्' इति भिन्नः पाठः ।

२ (†) तथाच हलायुधः,—'पंचाशद्भिःकुशैर्ब्रह्मा तदर्धेनतु विष्टरः । तदर्द्धं नोपयमनः तदर्द्धेन शिवःस्मृतः' ॥

३ (‡) 'यत्नोपदिश्यते' इति पाठान्तरमस्ति ।

४ (+) 'तत्र शिवःदिशः' इति भिन्नः पाठोऽस्ति । अत्र शिवदिशः शुभप्रदाः ककुभः ऐशदिग्वा ।

५ (×) आगमेऽपि, दिङ्निर्णयश्चैवम् । 'पूर्व्वपूर्व्वकयोर्मध्ये प्राप्नोति कोणानि बुधैः । तद्वदपिवं दक्षिणस्याश्चोत्तरं चोत्तरं मतम् ।' इत्यत्र पश्चिमस्य यं समस्तैव प्रकल्पयेत् ।'
अत्र प्रह्वः—प्रणतगात्रकः ।

,, तत्रैव, 'स्नातः शुक्लाम्बर-धरः धौताङ्घ्रि-पाण्याननः' इत्यादि ।

६ (०) 'अलङ्कृत' इति पाठान्तरं दृश्यते ।

## याज्ञवल्क्यः—

*यदि वाग्यम लोपः स्या ज्जपादिषु कथञ्चन ।*
*व्याहरे द्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥*
*उपवीतिना विहितं सर्व्वं द्विजेन कार्य्यम् ।*

## तत्र कात्यायनः—

सदोपवीतिना भाव्यं सदा बद्धशिखेनतु ।
विशिखोव्युपवीतश्च यत् करोति न तत्कृतम् १(*) ॥

## बौधायनः—

कार्य्योयुक्तोनरो नाभेरधः स्पर्शश्च वर्ज्जयेत् ।

## मनुरपि—

चण्डालश्च वराहश्च कुक्कुटः श्वा तथैवच ।
रजस्वलाच षण्टश्च नेक्षेरन्नश्नतो द्विजान् ॥
होमे प्रदाने भोज्येच यदेभिरभिवीक्षितम् ।
दैवे हविषि पित्र्ये वा तद्‌गच्छत्य यथायथम् ॥

## स्कान्दे—

पाषण्डिनश्च पतिता ये च वै नास्तिका द्विजाः ।
पुण्य कर्म्मणि तेषां वै सन्निधिर्नेष्यते क्वचित् ॥

## कात्यायनः—

पित्र्य मन्त्रानुद्रवेन आत्मालंभे अवेक्षणे २(†) ।
अधोवायु-समुत्सर्गे प्रहासेऽनृत भाषणे ॥

---

१ (*) विष्णोःस्मरणं—'तद्विष्णोः—परमम्' इति । 'इदं विष्णुरि'तिच स्मरेत् । अथवा ॐविष्णुरिति दशधा जपेत् । अव्ययं सनातनम् । तत्रैव 'यः स्मरेत् पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः'

२ (†) 'निविद्वच अवेक्षणे' इति भिन्नः पाठः ।

" तथापि 'शिखी तिलकी कर्म्म कुर्यात्' । 'गायत्र्यातु शिखांबद्ध्वा नैऋत्यायुधरम्भुतः तूर्ष्णींभूत्वा समाधाय मोगच्छे प्रविलोकयेत्' ।

अस्मात् पारस्करगृह्य सूत्र-हरिहर-गदाधर-भाष्यादिष्वपि ।

" दैवात्स्मर्य्य विष्णोः स्मरणमाचमनं दक्षिणश्रवणं वा स्पृशेत् ।

मार्जार मूषक स्पर्शे आक्रुष्टे क्रोध सम्भवे ।
निमित्ते ष्वेषु सर्व्वत्र कर्म्म कुर्व्वनुपस्पृशेत् ॥

अत्रात्मालम्भे—यज्ञादौ हृदयस्पर्शे । अवेक्षणे—यज्ञादिविहिते अधमेक्षण इति—क्वचित्पदम् १(*) ।

## वायुपुराणे—

कण्डणं पेषणञ्चैव तथैवोल्लेखनं परम् ।
सकृदेव पितृणां स्याद् देवताया स्त्रिरुच्यते ? ॥

## विष्णुधर्म्मोत्तरे—

मन्त्रेणौऽङ्कार पूतेन स्वाहान्तं च विचक्षणः २(†) ।
स्वाहावसाने जुहुयाद् ध्यात्वैवं मन्त्र देवताम् ॥

## कात्यायनः—

बह्वल्पं वा स्वशाखोक्तं यस्य यावत् प्रकीर्त्तितम् ।
तस्य तावति शास्त्रार्थे कृते सर्व्वं भवेत् सदा ३(‡) ॥
यन्नाम्नातं स्वशाखोक्तं पारक्यमविरोधि यत् ।
विद्वद्भि स्तदनुष्ठेयमग्निहोत्रादि कर्म्मसु ॥
अग्निहोत्रादीति,—यथा छन्दोगादिभिर्यजुर्वेद—
विहितमग्नि होत्रादि कृत्य-सकलमनुष्ठीयते तद्वदित्यर्थः ।
प्रवृत्तमन्यथा कुर्य्यात् प्रमादात्तु कथञ्चन ४(+) ।
यतस्तत्त्वन्यथाकृतं तत्तु एव समापयेत् ।
प्रवृत्त मारब्धम्, अन्यथा भूतं वैपरीत्यमात्रम् ५(०) ॥
समाप्तौ यदि जानीयान्मयैतदन्यथा कृतम् ।
तावदेव पुनः कुर्य्यान्नावृत्तिः सर्व्व कर्म्मणः ॥

---

१ (*) क्वचित्पदं प्राक्स्थान्दोग्यश्लोकेऽस्ति । (?) दैवंवारभकं दैवविचारमिति पाठ्यम् ।

२ (†) 'सर्व्वमन्त्रप्रयोगेषु ॐमित्यादौ प्रयुज्यते ।
तेन संपरिपूर्णानि यथोक्तानि भवन्ति हि' इति स्मृतिः ॥ 'स्वाहान्तेन' इति भिन्नः पाठः ।

३ (‡) 'कृते सर्व्वमवेहितम्' क्वचित् पाठान्तरमस्ति ।

४ (+) अत्र 'यदि मोहात् कथञ्चन' । 'यदि स्खलन् कथञ्चन' इत्यं पाठान्तरञ्च दृश्यते ।

५ (०) यत्त, विहितं कृत्यमारब्धं प्रमादाद् यदि विपरीतं यातं तदेव पुनरनुष्ठेयम्, इति ।

## भट्टपादः—

प्रधानास्या क्रिया यत्र साङ्गन्तत् क्रियते पुनः ।
तदङ्गस्या क्रिया यत्तु (यातु) नावृत्तिर्नच तत्क्रिया ॥

यत्र प्रधानस्याकरणं विस्मृतेः तत्र तत्साङ्गं पुनः कर्त्तव्यम्, यत्रत्वङ्गस्यैवाकरणं तत्र नाङ्ग प्रधान करणं १(*) नाप्यङ्गमात्र करणम् । किन्त्वं गाकरण-निमित्ते प्रायश्चित्तमेव कार्य्यमित्यर्थः ।

यथोक्त वस्तु सम्पत्तौ ग्राह्यं तदनु कारयेत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥
आज्यं द्रव्यमना(नो)देशे जुहोतिषु विधीयते ।
मन्त्रस्य देवतायाश्च प्रजापति रिति स्थितिः ॥
अनादेशे—द्रव्यान्तरा विधाने इति ।

मन्त्रस्य देवतायाश्चाविधाने प्रजापति र्देवता प्राजापत्यो मन्त्रश्च ज्ञेयः । सच महाव्याहृत्यात्मकः २(†) ।

## प्रतिनिधि प्रस्तावे पैठीनसिः—

अप्राप्तं प्रथमं द्रव्यं तदभावेतु माहिषम् ३(‡) ।

## बौधायनश्च—

आज्यहोमेषु सर्व्वत्र गव्यमेव भवेद् घृतम् ॥
तदभावेतु माहिष्यं आजमाविक मेवच ।
तदभावेतु तैलं स्यात्तदभावेतु जर्त्तिलम् ॥
तदभावेतु कौसुम्बं तदभावेतु सर्षपम् ।
जर्त्तिलाः,—आरण्यतिलाः । आरण्यजं जर्त्तिलम् ।

---

१ (*) 'तत्र न साङ्गप्रधानकरणं' इति भिन्नः पाठोऽस्ति ।

२ (†) हेमाद्रौ तत्त्वे महाव्याहृत्यात्मक इति । अन्येतु प्रोचुः, 'मन्त्रानादेशे गायत्री' तथाहि 'गायत्री वा इदं सर्व्वं यत्किञ्च' इति छान्दोग्ये । केचनातु देवतानादेशे विष्णुरेव । मन्त्रानादेशे तत्कर्म्मैव तत् कारणं वेति । प्रथमद्रव्यं—गव्यघृतम् ।

३ (‡) 'गव्यघृतं घृतश्रेष्ठम्' । अजादभवं आज्यं वा । अव्याःमेष्या भवं आविकम् । महिष्याभवं माहिषम् । गोः प्रभवं घृतं गव्य मिति । साम्प्रतिकं वानस्पत्यं घृतम् कृत्रिमम्, तद्दैवे, पैत्ते च अग्राह्यम् । जर्त्तिलास्तु शुक्लयजुः संहितायां होमे विहिताः ।

## ब्रह्मवैवर्त्ते—

सुबाहुना प्रश्ने कृते विश्वामित्रः, तत्राह।
दानकाले देवतात्वं प्रतिमादेः प्रकीर्त्तितम्।
धेनुनामपि धेनुत्वं श्रुत्युक्तं दानयोगतः॥
दातुर्वै दानकालेतु धेनवः परिकीर्त्तिताः।
विप्रस्य व्ययकालेतु द्रव्यं तदिति निश्चयः १(*)॥
दान सम्बन्धि-विप्रेण द्रव्यमादाय गच्छता।
तत् सर्व्वं विदुषा तेन विक्रेयं स्वेच्छया विभो!॥
कुटुम्ब भरणं कार्य्यं धर्म्मकार्य्यञ्च सर्व्वशः। इति २(†)
अन्यथा नरकं यातीत्येव माह पितामहः॥

## अथ दक्षिणा निरूपणम्।

## भविष्यपुराणे—

अत्र सामान्यतो दानादि प्रक्रम्योक्तम्।
अदत्त-दक्षिणं दानं व्रतञ्चैव नृपोत्तम! ३(‡)॥
विफलं तद्विजानीयाद् भस्मनीव हुतं हविः॥

## षट्त्रिंशन्मते—

श्रद्धायुक्तः शुचिर्दान्तो दानन्दद्यात् सदक्षिणम्।
अदक्षिणन्तु यद्दानं तत्सर्व्वं निष्फलं भवेत्॥

---

१ (*) 'व्ययकालेतु' इति पाठान्तरम्।

२ (†) तथाच स्मृतिः 'वृद्धौ च मातापितरौ साध्वी भार्य्या सुतः शिशुः।
अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्'। अत्र कुटुम्बा मात्रादयः।
पोष्यवर्गाः—'माता पिता गुरुर्भार्य्या प्रजादीनाः समाश्रिताः।
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः' इति आह्निकाचार तत्त्वं।

३ (‡) 'श्रद्धापूर्व्वन्तु यद् दानन्तद्दानन्याय कल्पते' इति स्मृतिः। अन्यच—
'ऋणी कर्म्मणि सम्पूर्णे तत्क्षणा देव दक्षिणाम्।
नदद्याद् ब्राह्मणेभ्यश्च दैवेनाज्ञानतोऽथवा।
मुहूर्त्ते समतीते तु द्विगुणा सा भवेद्ध्रुवम्'। इति स्मृतौ।
मैथायणी परिशिष्टे—'दक्षिणाकाले मूल्यानां भक्ष्याणां ददाति न तत्र यजेत्'।
अत्र शतपथ श्रुतिश्च—'तस्मान्नादक्षिणं हविः स्यादिति'।

## गृह्यपरिशिष्टे—

दक्षिणा लाभे मूलानां फलानां भक्ष्याणां दक्षिणान्ददातीति। विशेषविहित-गो-वस्त्रादि दक्षिणा दान व्यतिरिक्तेषु सामान्यतो विहित-दक्षिणेषु गवादि दानेषु।

## तत्र व्यासः—

सुवर्णं परमन्दानं सुवर्णं दक्षिणा परा।
सर्व्वेषाञ्चैव दानानां सुवर्णं दक्षिणेष्यते ॥

## रामायणेऽपि श्रीरामं प्रति वसिष्ठः—

सुवर्णमेव सर्व्वत्र दक्षिणासु विधीयते।
सुवर्णं ये प्रयच्छन्ति भवेयुस्ते पूताः सदा ॥

## भविष्योत्तरे—

काम्यं यद्दीयते किञ्चित्तत् समग्रं सुखावहम्।
असमग्रन्तु दोषाय भवतीहपरत्रच ॥
तस्मान्न दक्षिणाहीनं विधान—विकलं नच।
देयं दानं महाराज! समग्रफलकाङ्क्षया ॥

## दक्षिणामानानुक्तौ विशेषः १(*)स्कान्दे—

देयद्रव्य तृतीयांशं दक्षिणां परिकल्पयेत्।
अनुक्तदक्षिणे दाने दशांशं वापि शक्तितः ॥
होतृणाञ्चैव सर्वेषां त्रिंशत्पलमुदाहृतम्।
अध्येतृणां तदर्द्धेन द्वारपानां तदर्द्धत इति ॥

अयं दक्षिणा विभागोऽनुक्त—विभागविशेषेषु दानान्तरेष्वपि अवगन्तव्यः। तत्रैव तुला पुरुषादि प्रक्रम्योक्तम् २(०)।

दक्षिणाञ्च शतं चार्द्धं तदर्द्धं वा प्रदापयेत्।
ऋत्विजाञ्चैव सर्व्वेषां दशनिष्कान् प्रदापयेत् ॥

---

१ (०) 'नचात्रै दक्षिणा वरोः' इति पाठान्तरम्।
२ (०) लिङ्गपुराणे इति हेमाद्री पाठः।

## भविष्यपुराणे उत्तरभागे—

ज्ञेयं निष्कशतं पार्थ ! दानेषु विधिरुत्तमः ॥
मध्यमस्तुतदर्द्धेन तदर्द्धेनाधमः स्मृतः ।
मेष्याश्च कालपुरुषे तथान्येषु महत्सुच १(*) इति ।
अत्रान्येषु तिलगर्भादिषु ।
एवं वृक्षे रथेष्मेव धेनोः कृष्णाजिनेऽपिच ।
अशक्तस्यापि प्राप्तोऽयं पञ्चसौवर्णिको विधिः २(†) ॥
अतोऽप्यल्पेन यो दद्यान्महादानं नराधमः ३(‡) ।
प्रतिगृह्णाति वा तस्य दुःखशोकावहं भवेत ॥
अयञ्चात्यशक्त विशेषो(शये) ज्ञेयः ।
शत निष्कसमोपेतं तदर्द्धार्द्धमथापि वा ।
अतोन्यूनं नदातव्यं अधिक फलपू(कु)जितम् ॥
इति गरुड़ पुराणोक्तेः ।

--*--

## व्यासः—

सुवर्णं रजतं ताम्रं तण्डुला धान्यमेवचा(च) ।
नित्यश्राद्धं देवपूजा सर्व्वमेव सदक्षिणम् ४(•) ॥
नित्यं देयानि राजेन्द्र ! गावः पृथ्वी सरस्वती ।
दातारं तारयन्त्येते पाठ-वाप(ह) प्रदोहनैः इति ॥

अत्र सुवर्णादि दाने यानि, सुवर्णं दद्यात् , रजतं दद्यादित्यादिरूपेण विहितानि तान्येव ज्ञेयानि, नतु सुवर्णनिर्म्मित ब्रह्माण्डभद्रनिध्यादि दानानि तत्रच दक्षिणा विधानात् ।

---

१ (*) 'महत्सु'—महादानानि दानादिषु यागान्तरेषु वा ।

२ (†) 'रथेष्वेव' 'रथिन्द्वेव' इति च हेमाद्र्यादौ पाठान्तरमस्ति ।
'कृष्णाजिनेष्वपि' सम्यक् पाठः । 'अशक्तस्यापि कृतोऽयं, मिति सम्यक् पाठः ।

३ (‡) अत्र 'नराधिप इति भिन्नः पाठः ।

४ (•) 'सर्व्वमितदक्षिणम्' इति पाठान्तरमस्ति । यतः 'दत्तो यज्ञस्तदक्षिणः' । 'यज्ञार दक्षिणाहीनं' इति च । कर्म्म सर्व्वमपि सम्पूर्णं तत्पश्चात् दैव दक्षिणाम् । तदभावमाश्रवेच्चत्यादि दोष श्रुति वचनैः 'सर्व्वमेव सदक्षिणम्' इत्येव पाठः श्रेयान् इति ।

### मातृस्ये—

पितृणां राजतं पात्रं अथवा रजतान्वितम्।
शिवनेत्रोद्भवं यस्मात्तस्मात्तं पितृवल्लभम्॥
अमङ्गलञ्च यज्ञेषु देवकार्य्येषु वर्जितम्।
रजतं दक्षिणा माहुः पितृकार्य्येषु सर्व्वदेति॥

इति दक्षिणा निरूपम्।

—*—

## अथ द्रव्य मानम्।

—*—

### तत्र सुवर्णपरिमाणमाह, मनुः—

जालान्तर गतेभानौ यत् सूक्ष्मं दृश्यते रजः १(‡)।
प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते।
त्रसरेण्वष्टकं ज्ञेयं लिक्षैका परमाणुतः॥
ता राजसर्षपस्तिस्र स्ते त्रयो गौरसर्षपः।
सर्षपाः षड् यवोमध्य स्त्रियवन्त्वेक कृष्णतः(लः)॥
पञ्चकृष्णलको माष स्ते सुवर्णस्तु षोड़श।
पलं सुवर्णाश्चत्वारः पलानि धरणं दश।
द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः।
ते षोड़शस्याद्धरणं पुराणश्चैव राजतः॥
कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः।
धरणानि दश ज्ञेयः शतमानस्तु राजतः॥
चतुः सौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः।
एक कृष्णल, एक गुञ्जा। ते सुवर्णास्तु षोड़शेति।
ते पञ्च कृष्णलकाः षोड़श माषकाः सुवर्ण इत्यर्थः।
अस्यैव कर्ष इति संज्ञान्तरम्।

---

१ (‡) आदित्यपुराणेच 'परमं' इति पाठान्तरम्।

## तथाच विष्णुगुप्तः—१(०)

प्रकारान्तरेणाह, सुक्षेत्रे यथावन्मध्यपाककाले निष्पन्ना धान्यमाषाः । दश-सुवर्णमाषः, पञ्चवा गुञ्जाः, सुवर्णमाषकः । ते षोड़श सुवर्णः, एवं प्रमाण—एवं प्रमाणसिद्धस्य संज्ञाकर्ष इति । चतुः कर्षं पलमिति । ते पूर्व्वोक्ताः पञ्चकृष्णलका-माषाः ।

## वृहत् पराशरेच—

पञ्चगुञ्जैर्भवेन्माषः कर्षोऽष्टादशभिश्च तैः ।
तैश्चतुभिः करं प्रोक्तं दण्ड(श)मानञ्च पेशसः ॥
अत्र पेशसः—सुवर्णस्य ।

## याज्ञवल्क्यः—

किष्णलः पञ्चते माषः ते सुवर्णं चतुष्टयस्य निष्कसंज्ञापिच २(*) ।

## तथाच विष्णुः—

राजसर्षपै स्त्रयं गौरसर्षपः, ते षड्यवः, तत् त्रयं कृष्णलम्, तत्पञ्चकं माषः, तद्द्वादशकमक्षार्द्धं, तत् चतुर्माषकं सुवर्णः, तच्चतुसौवर्णिकोनिष्कः इति ।

## ब्रह्मप्रोक्ते—

पलानां विंशतिवींशः पञ्चवीशा स्तुला मता ।
उदतौलिकः सए वस्याद् भारो विंशति तौलिकः ॥

## मतान्तरेतु—

भारस्तु विंशतिवींशा पञ्चविंशयस्त्वुला मता ३(†) ।

इति संक्षिप्त द्रव्यमानम् ॥

—*—

---

१ (०) विष्णुगुप्तः कौटिल्यः, तदीयार्थ शास्त्रं । हेमाद्रौ विषयेऽस्मिन् परिभाषाप्रकरणे बहुधा वर्णितमस्ति । अत्र तु तस्मात् संक्षिप्योक्तम् ।
अत्र याज्ञवल्क्यः—त्रसरेणु-लिक्षा-राजसर्षप-गौर-यव-कृष्णल-माष-सुवर्ण-धरण-कृष्णमाष-शतमान-निष्कपलादीनुवाच । पञ्चरात्रे, एवमेव विष्णुस्मृतौ प्रोक्तम् । एवं ज्योतिषेच—तथैवागता मितमात्रा अस्ति ।

२ (*) कृष्णलः पञ्चते माषास्ते सुवर्णस्तु षोडश ।
पलं सुवर्णाश्चत्वारः पञ्चवापि प्रकीर्त्तितम्' ॥ इति याज्ञवल्क्यः ।

३ (†) विष्णुगुप्तः—'विंशति तौलिकोभारः, दशैव भारस्य उदतौलिक इति द्वितीया संज्ञा' । 'तुलाः स्मृताः' इति भिन्नः पाठः ।

# अथ रौप्यपरिमाणम् ।

—*—

## अत्र विष्णुगुप्तः—१(०) ।

रूप्यस्य सुवर्णाद्भिन्नं मानमभिधीयते। अष्टाशीति गौरसर्षपा रूप्यमाषकः। ते षोड़शधरणं निष्पावा विंशतिर्वा। रूप्यपलञ्च। दशधरणकम्, तत्पलानां शतं तुला, तत्तुलाविंशतिर्भार इति ।

## मनुश्च—

द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः ।
ते षोड़शस्याद्धरणं पुराणश्चैव राजतः ।
कार्षापणस्तु विज्ञेयः ताम्रिकः कार्षिकः पणः ।
धरणानि दशज्ञेयः शतमानस्तु राजतः ।
चतुः सौवर्णिको निष्क विज्ञेयस्तु प्रमाणतः ॥

धरणस्यैव संज्ञान्तरं पुराण इति । चतुः सौवर्णिको निष्क इत्यत्र सुवर्णग्रहणं सुवर्णपरिमाण प्राप्त्यर्थम् ।

ततश्च सुवर्णचतुष्टयपरिमितं रजतं राजतो निष्क इत्युक्तं भवति ।

## याज्ञवल्क्योऽपि—

द्वे कृष्णले रूप्यमाणो धरणं षोड़शैव ते ।
शतमानन्तु दशभिर्धरणैः प(फ)लमेवतु ॥
निष्कः सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः ।
अत्रापि सुवर्णपदं पूर्ववद् व्याख्येयम् ।

—*—

# अथ ताम्रपरिमाणम् ।

—*—

## मनुः—

कार्षापणस्तु विज्ञेयः ताम्रिकः कार्षिकः पणः २(†) ।

---

१ (०) चष निष्पावा इत्यत्र निष्का इति पाठः।
२ (†) इति प्रागुक्तमपि प्रस्ताव प्रसङ्गात् पुनरुच्यते ।

कार्षिकः कर्षपरिमितः, ताम्रिकः पण इति । कर्षपरिमितः ताम्रिकः पणः, स कार्षापण इत्यर्थः ।

## याज्ञवल्क्योऽपि—

कार्षिकस्ताम्रिकः पण इति । कर्षपरिमितं ताम्रं ताम्रपण-इत्यर्थः । कर्ष-शब्देण सुवर्णपरिमाण उच्यते । ते षोड़शाख्यः (क्षः) कार्षोऽस्त्री पलं कर्षचतुष्टयम्—इति निघण्टुवचनात् । ते पूर्व्वकृताः । पञ्चगुञ्जा माषाः । षोड़शाख्यः(क्षः) स एव-च कर्ष इत्यर्थः ।

## बृहस्पतिः—

ताम्रकर्ष कृता मुद्रा विज्ञेयः ताम्रिकः पणः ।
स एव निष्पावाज्ञेयाः, ताश्च पञ्चगुञ्जामाषाः । षोड़शाक्षः स एव कर्ष इत्यर्थः ।
स एवाह—स एवच ( यत् ) पाविका ज्ञेया स्ताश्चतस्रस्तु धानक इति ।

## नारदः—

कार्षापणस्तु पूर्व्वस्यां दिशि रौप्ये प्रवर्त्तते ।
पणैर्निवद्धः पूर्व्वस्यां षोड़शैव पणः सतु ॥
एतत् पणसंज्ञकः । स्वरूपन्तु, स्मृत्यन्तरे—षोड़शपणः पुराणः ।
पणो भवेत् काकिनी चतुष्केण, पञ्चाहते श्चतुर्भि-
र्वराटकैः काकिनी चैका ।
वराटकादि समुदयान्तानां संख्यानां स्वरूपमुक्तम् ।

## आदित्य पुराणे—

एकं दशं शतञ्चैव सहस्रं चेति सत्तम ।
यथोत्तरं दशगुणं सहस्राणि दशायुतम् ॥
शताहतं सहस्रन्तु प्रोच्यते नियुतं बुधैः २(†) ।
तथा शत सहस्राणि दश नियुत मुच्यते ॥
शतं शत सहस्राणि कोटिरित्यभिधीयते ।
अर्बुदं दशकोट्यश्च बृन्दं कोटिशतं विदुः ।

---

१ (*) अत्र 'षोड़शाक्षः' इति सम्यक् पाठःस्यात् । हेमाद्रौ तथैवास्ति ।
" पूर्व्वस्यान्दिशि,—प्राग्देशे वङ्ग-प्राग्ज्योतिषपुर-कामरूपादौ ।
२ (†) 'नियुतम्' इत्यत्र अयं 'प्रयुत' मित्यत्र नियुतमिति केचिद्वदन्ति ।

सहस्रं कोटयश्चापि खर्व्वमाहुश्च तद्विदः ।
दशकोटि सहस्राणि निखर्व्वमिति संज्ञितम् ॥
शतं कोटि सहस्राणां शङ्कुरित्यभिधीयते १(*) ।
सहस्रं कोटयश्चापि पद्ममात्रन्तु तद्विदुः ॥
सहस्रन्तु सहस्राणां कोटीनां दशधा पुनः ।
गणितं तु समुद्रं वै प्राहुः संख्याविदो जनाः ॥

## भास्करीये—

वराटकानां दशकद्वयं यत् सा काकिनी २(†) ।
ताश्च पणश्चतस्र इति । गोमूल्य विषयेऽपि—
द्वात्रिंशत् पणिका गावः वत्सः पौराणिको मतः ३(‡) ।
वृषे पट्कार्षापणका अष्टावनडुहि स्मृताः ॥१॥
दशकार्षापणो धेनो रश्वे पञ्च दशैव तुः ।
हिरण्ये कार्षापणकाः पणा नव तथाधिकाः ॥२॥
वस्त्रे कार्षापणाश्छागेऽष्टौ पणा द्वादशाविके ।
वृषल्यामथ पञ्चाशन्मूल्यं कार्षापणाः स्मृताः ॥३॥
वृके पञ्चाशदेवस्याद् गजे पञ्चशतानिच ४(§) ।
पञ्चकार्षापणाः प्रोक्ताः दोलायां षड्रथे तथा ॥४॥
गृहेऽष्टौ कार्षापणकाः ताम्रे कर्षापणः स्मृतः ।
ताम्रे कर्षेपिच पण इति मूल्य प्रकल्पना ॥
अधिकं कल्पयेन्मूल्यं न्यूनं वित्तानुसारतः ।

इति मूल्यदक्षिणा विषयकः आवश्यकदाने मुख्यासम्भवे ग्राह्यम् । अधमोऽयं पक्षः सति वित्ते नाश्रयणीयः ।

निष्काः पञ्चप्रदातव्या धेनोः पञ्च पौराणिकाः ॥
धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः ।
निष्कं तदर्द्धं पादं च तदर्द्धार्द्धमथाऽपिवा ॥

---

१ (*) अन्यत्र 'महः' इति पाठान्तरमस्ति, ब्रह्माण्ड पुराणे ।
२ (†) भास्करीय लीलावत्याम् । इतोऽन्यदप्यस्ति ।
" प्रायश्चित्त प्रस्तावे गोमूल्यावधारणे ।
३ (‡) 'चतुःकार्षापणो वरः' इत्यमपि भिन्नः पाठः ।
४ (§) 'वृके' इत्यत्र मृगे वृषे वा इति च भिन्नः पाठः ।

तुरीयांशः प्रदातव्यः पञ्च कार्षापणानि च ।
त्रयः कार्षापणाश्चैव शक्तितो मूल्यकल्पना १(*) ॥
निष्कोदीनारः । दीनारस्तु भवेत् कर्षैः शतैः कार्षापणैस्तथा ।

## विष्णुगुप्तः—

दीनारोरौप्यकैरष्टा विंशत्या परिकीर्त्तितः ।
सुवर्ण—सप्ततितमोभागो रौप्यक इष्यते ॥
सुवर्णश्च, कृष्णलः पञ्चते माषा स्ते सुवर्णस्तु षोड़श ।
पणः कार्षापणः । षोड़शमाषाः कर्षः सुवर्णस्य ।
सुवर्णैः षोड़शपणः ।
पुराणानां भवेत्काकिनी चतुष्केण पञ्चाहृतैश्चतुर्भि-
र्वराटकैः काकिनी चैका इति २(†) ।
पञ्चगुञ्जा भवेन्माषः ससुवर्णस्तु षोड़ष । माषः कर्ष ।
वराटकानां दशकद्वयञ्च या(सा)काकिनी ताश्च पणश्चतस्रः ।
तेषोड़शद्रव्य(स्य)मिहैव वाच्यम् ३(॥) ।
द्रव्यैस्तथा षोड़शभिश्च निष्कः ।
सुवर्णपक्ष माश्रित्य सुवर्णार्द्ध मथापिवा । वाच्य इति ।
पञ्चकार्षापणानि वेत्युक्तं कार्षापणक्रमः ।
पुराण इति पर्य्यायः ।
सुवर्णं वाथ दातव्यं निष्कं वाप्यथ कल्पयेत् ।

---

१ (*) अत्रादर्शे पुस्तके पाठ स्त्वयथोभमोविन्यनमीयम । विष्णुगमोर्थमास्त्रिंऽवादीत् । कात्यायन-मते—ते द्वादश सुवर्णास्तु दीनारस्तु त्रिकः स्मृतः' । तेन,—द्वादशधानकैरिति सुवर्णः स्यात् । त्रिकैस्तु दीनारः स्यात् । अगस्तिशिल्पग्रन्थे च—'भवेत षोड़शभिः माषैः सुवर्णैस्तैः पुनः स्मृतम' ।

२ (†) कात्यायनः—
'माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु ।
काकिणीतु चतुर्भागो माषस्य च पणस्य च' इति ॥

३ (॥) अत्र पाठस्य महान् व्यत्ययो दृश्यते । धर्मोः पञ्चभिराख्याता मध्यामा त्रिपौराणिकौ' इति । 'दीनारो रौप्यकैरष्टा विंशत्या परिकीर्त्तितः' । इति विष्णुगुप्तः । 'ते द्वादश सुवर्णास्तु दीनारस्तु त्रिकः स्मृत.' इति कात्यायन । ते धानका इत्यर्थः । स सुवर्ण इति, ते सुवर्ण इति च पाठान्तरम् ।

तथा, तदर्द्धार्द्धं मथापिवा निष्काः पञ्चप्रदातव्याः ।

धेनोः पञ्च पौराणिक इति पर्य्यायः ।

दीनारस्तु भवेत् कर्षैः शतैः कार्यपणैस्तथा ।

इति संक्षिप्त मूल्याध्यायः ॥

तथा कात्यायनोक्त द्रव्यपरिमाणञ्च ।

—*—

## अथ धान्यादि मानम् १(::) ।

—*—

### भविष्य पुराणे—

पञ्च कृष्णलकोमाषस्तैश्चतुः षष्ठिभिः पलम् ।

### स्कान्दे च—

पलद्वयन्तु प्रसृतं द्विगुणं कुड़वं मतम् ।

चतुर्भिः कुड़वैः प्रस्थः आढ़कस्तैश्चतुर्गुणैः २(॥) ।

आढ़कैस्तैश्चतुर्भिस्तु द्रोणश्च कथितोबुधैः ।

कुम्भोद्रोण द्वयं सूर्पः खाढ़ी द्रोणास्तु षोड़श ॥

द्रोणद्वयस्यैव संज्ञा, ताश्च सूर्प इति केचन ।

### वराह पुराणे,—

पलद्वयन्तु प्रसृतं मुष्टि रेकपलं स्मृतम् ।

अष्ट-मुष्टि र्भवेत्कुञ्चिः कुञ्चेरष्टौच पुष्कलम् ॥

पुष्कलानि च चत्वारि आढ़कः परिकीर्त्तितः ।

चतुराढ़को भवेद् द्रोण इत्येतन्मानलक्षणम् ३(ऽ) ॥

---

१ (::) 'यव-गोधूम-धान्यानि तिलाः कङ्गु स्तथैवच ।
श्यामाकं चीनकञ्चैव सप्तधान्यमुदाहृतम् ॥' इति षट्त्रिंशन्मते ।

२ (॥) 'चतुर्भिः कुड़वैः प्रस्थः प्रस्थाश्चत्वार आढकः' इति पुस्तकान्तरे पाठः ।

३ (ऽ) चतुर्भिः सेतिकाभिश्च प्रस्थ एकः प्रकीर्तितः' इति हेमाद्रिः ।

## विष्णु धर्म्मोत्तरे—

पलन्तु कुड़वः प्रस्थ आढ़कोद्रोणएव च !
धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ॥
द्रोणैः षोड़शिः खाढ़ी(री)विंशत्या कुम्भ उच्यते ।
कुम्भैस्तु दशभिर्वाधो(क्षो) धान्यसंख्याः प्रकीर्त्तिताः ॥

'विंशत्या' इत्यत्र द्रोणैरित्यनु सज्यते । तेन कुम्भोद्रोणद्वयमिति पूर्व्वोक्तपक्षाद् विंशति द्रोणमितः कुम्भ इत्यपरः ।

षट्सहस्र परिमितः कुम्भ इति केचित् ।

एतेषाञ्च पक्षाणां देशकालात्माद्यपेक्षया व्यवस्था ज्ञेया १(*) ।

## स्कन्दपुराणेच—

पलद्वयेन प्रसृतं द्विगुणं कुड़वं मतम् ।
चतुर्भिः कुड़वैः प्रस्थ आढ़कस्तैतुर्गुणैः ।
चतुराढ़को भवेद् द्रोण इत्येतद् द्रव्यमाणकम् ॥

चतुर्गुणैर्भवेद् द्रोण इत्यन्यत्र पाठः ।

द्रव द्रव्यमान मित्यर्थः ।

## ग्रन्थान्तरे च—

लाज-पायस-नालिकेर सलिले सूत्रेजले……… ।
द्वात्रिंशत्पलिकः पलैधृतिमितैः प्रस्थैश्च षट् सम्मतः ।
तैल क्षौद्रघृतेषु विंशति पलैर्दध्नस्तु पञ्चोत्तरैः ।
प्रस्थः क्षीरगतो बुधै र्निगदितस्त्रिं शत्पलैरेवतु ॥

अत्र धृतिरष्टादश संख्येति ।

---

१ (*) तथाहि स्मृतौ,—
'देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थाञ्च ज्ञात्वा धर्म्मं 'समाचरेत्' इति ॥
देशभेदेन च—
'पलैर्दशभिः प्रस्थो मागधेषु प्रकीर्त्तितः'। मागधं पाटलीपुत्रादौ ।
'काकिनीतु चतुर्भागो माषस्य च पणस्य च ।
पञ्चनद्याः प्रदेशेतु संज्ञेयं व्यावहारिकी' ॥
कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्त्तते'। दक्षिणापथ इत्यर्थः
'पणैर्निबद्धः पूर्व्वस्यां षोडशैव पणास्तु'। पूर्व्वस्यां वङ्गादौ। पञ्चनद्याः पञ्चनद प्रदेशे इति ।

## गोपथ ब्राह्मणेच—

पञ्च कृष्णलको माषस्तै श्चतुः षष्ठिभिः पलम् ।
पलैर्द्वात्रिंशद्भिः प्रस्थः मागधेषु प्रकीर्त्तितः ॥
आढ़कस्तैश्चतुर्भिः स्याद्द्रोणः स्याच्चतुराढ़कः, इति ।
इति संक्षिप्तं धान्यापरद्रव्ययोः मानविधानम् १(*) ।

—*—

## अथ भूमानम् ।

—*—

## आदित्य पुराणे—

जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
प्रथमन्तत् प्रमाणानां त्रसरेणुं प्रचक्षते ॥
त्रसरेणुस्तु विज्ञेयः अष्टौ ये परमाणवः ।
त्रसरेणुस्तु ते अष्टौ बालाग्रं तत्स्मृतं बुधैः ॥
बालाग्राण्यष्ट लिक्षातु यूकालिक्षाष्टकं बुधैः ।
अष्टौ यूका यवं प्राहु रङ्गुलन्तु यवाष्टकम् ॥
द्वादशाङ्गुल मात्रावै वितस्तिस्तु प्रकीर्त्तितः ।
अङ्गुष्ठस्य प्रदेशिन्या न्यासः प्रादेश उच्यते ॥
तालः स्मृतोमध्यमया गोकर्णश्चाप्यनामया ।
कनिष्ठया वितस्तिस्तु द्वादशाङ्गुलिका स्मृता ॥
रत्नि स्त्वङ्गुलपर्व्वाणि विज्ञेय स्त्वेक विंशतिः ।
चत्वारि विंशतिश्चैव हस्तः स्यादङ्गुलानितु ॥
किष्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदङ्गुलः ।
षण्णवत्याङ्गुलैश्चैव धनुर्दण्डः प्रकीर्त्तितः ॥

---

१ (*) प्राग्विष्णुधर्मोत्तरोक्तं धान्यमानमुक्त्वा पश्चात् स्कान्दोक्तं द्रव्यमानमुक्तम्। स्कान्दोक्तानि यथाहि—चीनकान्तानि अष्टादशधान्यानि। मतान्तरे,—षट्त्रिंशते सप्तविधानि धान्यानि। द्रव्याणि, स्वर्णादीनि। ननु वैद्यकोक्त रसादिसप्तधातवः। बोद्धव्येतु स्वर्णादीनामपि पञ्चभूतानां धातुत्वम्।

धनुर्द्दण्ड युगं नालिर्ज्ञेयोह्येतैर्यवाङ्गुलैः।
धनुषा त्रिंशता नल्वमाहुः संख्याविदोजनाः॥
धनुः सहस्रे द्वेचापि गव्यूति रूपदिश्यते १(*)।
अष्टौ धनुः सहस्राणि योजनन्तु प्रकीर्त्तितम्॥

## वृहस्पतिः—

दशहस्तेन दण्डेन त्रिंशद्दण्डा निवर्त्तनम्।
दशतान्येव गोचर्म्म ब्राह्मणेभ्यो ददाति यः २(†)।

## मात्स्ये—

दण्डेन सप्तहस्तेन त्रिंशद्भानिवर्त्तनम्।
त्रिभागहीनं गोचर्म्म मानमाह प्रजापतिः॥

## सिद्धान्त शेखरे—३(‡)।

परमाणु मारभ्योक्तं मानम्।
जालान्तरगते भानौ दृश्यादृश्यन्तुयद्रजः।
परमाणुः स उद्दिष्टः वालाग्रं तैरथाष्टभिः।
बालाग्रैरष्टभिर्लिक्षा यूका लिक्षाष्टकेन च।
यूकाष्टकञ्च यं प्राहु र्यवानामुदरैस्तथा।
अष्टभिश्चाङ्गुलं तिर्य्यग्यवानामुत्तमं मतम्।
सप्तभिर्मध्यमं प्रोक्तं पड्भिः स्यादधमाङ्गुलम्॥
व्रीहिभिर्वा त्रिभिः स्याद्वे (त्तैः) मध्यमाङ्गुलमीरितम्।
मध्यमोमध्यमः प्रोक्ते(क्तं) पड्भिः स्यादधमाङ्गुलम्॥
व्रीहिभिर्वा त्रिभि स्तत्तैरधमाङ्गुलमीरितम् ४(+)।
मध्यमन्तु त्रिभिः सार्द्धैश्चतुभिस्तत्तथोत्तमम्॥

१ (*) 'धनुः सहस्रमेकं द्विजः' इति पाठान्तरं समस्तमपि दृश्यते एकस्मिन् पुस्तके। परमु-मध्यक् पाठोविष्णुधर्म्मोत्तरे उक्तो यथा,—
'यद्गुल्फ यथा ग्राति नरः सहस्रमेकं द्विज।
एकं गोचर्म्ममात्रन्तु भुवः प्रोक्तं विचक्षणैः' इति॥

२ (†) 'दत्वा स्वर्गे महीयते' इति आदर्शान्तर—धृत—पाठः।

३ (‡) मन्वशास्त्रस्यायं सन्दर्भः।

४ (+) यथादर्शं पाठे विकृतिः दृश्यते। वर्त्तमान विषये मात्रानां वैविध्यमस्ति, तथा च— मानाङ्गुलं मात्राङ्गुलं देहलब्धाङ्गुलञ्च। एवमेव मध्यमत्व, निम्नत्वादीनि। एषरात्रेन्तु मानद्रव्यादेः उत्पत्ति परिमाणादीनां कोटयमस्ति. तद्यथा,—

मानाङ्गुलमिति ख्यातं मात्राङ्गुल मथोच्यते ।
कर्त्तुः स्यान्मध्यमाङ्गुल्या मध्यमं पर्व्वदैर्घ्यतः ॥
मात्राङ्गुलश्च तच्छे (श्रेष्ठं) पादोनं मध्यमं मतम् ।
पर्व्वार्द्धं मध्यमं ज्ञेयं लब्धाङ्गुल मथोच्यते १(*) ॥
गृहीत-प्रतिमायामं नतालाङ्गुल संख्यया २(†) ।
विमन्यतेतु भागैकं तदाहुर्लघु मङ्गुलम् ॥
प्रासादादिषु सर्व्वेषु मानाङ्गुल मुदाहृतम् ।
मानाङ्गुलन्तु कुण्डादौ गृहोपकरणादिषु ॥
लब्धाङ्गुलं न कुर्व्वीत प्रतिमावयवं बुधः ।
एव मङ्गुलमाख्यातं तदूयदङ्गुल मानकम् ३(‡) ॥
अङ्गुलन्तु कलाज्ञेया भागः स्याच्चतुरङ्गुलः ।
पावकं चाष्टभिर्भागै मुखं द्वादशभिर्म्मतम् ॥

—'वातायनपथं प्राप्य ये यान्ति रविरश्मयः ।
तेषु सूक्ष्मा विसर्पन्ते रेणव स्त्रसरेणवः ।
परमाणवस्तेऽष्टौ स्युरेण वस्तु तदष्टभिः ।
तेऽष्टौ वालाष्टकं तेऽष्टौ लिक्षा यूका तदष्टकम् ॥
इत्याद्यारभ्य—
'षड्यवाः साधमाः प्रोक्ता मानाङ्गुलमितीरितम्' ।
'शिष्य—दक्षिण हस्तस्य मध्यमाङ्गुलि मध्यतः ।
पर्वणोरन्तरा दैर्घ्यं मात्राङ्गुलमुदाहृतम् ॥
'एकं द्वादशधाभागं कृत्वा तेष्वेक मङ्गुलम् ।
देहलब्धाङ्गुलं नाम जानीयात्तस्य तत्पुनः ॥
'उच्छ्रायः प्रतिमायास्यान्महामानाङ्गुलाश्रयः ।
महामानाङ्गुलं यत्तन्मात्राङ्गुलमितीरितम् ॥
'यागोपकरणान्यत्र कुर्य्यान्मानाङ्गुलेन वै ।
होमाङ्गानि स्रुवादीनि कुण्डं सुष्ठाङ्गुलाश्रयम् ॥
'देहलब्धाङ्गुलेनापि कुण्डादीनि प्रकल्पयेत् ॥'
सिद्धान्तशेखरेच,—'मानाङ्गुलेन चानेन मेखला कण्ठनाभयः' इत्यादि ।

१ (*) पतलब्धाङ्गुलम्—देहलब्धाङ्गुलमिति बोध्यम् ।
२ (†) 'नव तालाङ्गुल' तालपरिमिताङ्गुलं वा ज्ञेयम् । ताल—माना संख्या प्रोक्ता ।
३ (‡) अत्र पाठः क्लिष्टार्थः ।

तालश्च तत् समं ज्ञेयं हस्तलक्षण मुच्यते ।
चतुर्व्विंशति मात्राद्यः(द्व्यः) किष्कुर्हस्त इति स्मृतः १(*) ॥
तालश्च तत् समं ज्ञेयं हस्तलक्षण मुच्यते ।
किष्कु-हस्तेन कुर्व्वीत शयनासन मानकम् ॥
गृह प्रासाद-लिङ्गानि प्राजापत्येन कारयेत् ।
ग्रामखेटक पुरादीन् धनुर्मुष्टिकरेण च ॥
धनुर्ग्रहेण कुर्व्वीत क्षेत्र मानश्च योजनम् २(†) ।
अङ्गुलस्यच हस्तस्याप्येवं मानं समीरितम् ३(‡) ॥
इति भूमिमानम् ॥

—*—

## अथ मण्डपाद्युपयुक्त प्राची साधन मुच्यते ४(§) ।

### तत्र नारदः—

एवं लक्षण संयुक्ते क्षेत्रे सम्यक् समीकृते ।
पूर्व्वोक्त लक्षणं श(स)ङ्कुं तन्मध्ये स्थापयेत्ततः ।
तच्छायाग्रं स्पृशेद्यत्र वृत्तं पूर्व्वा पराह्णयोः ॥
तत्र कार्य्यावुभौ विन्दू वृत्ते पूर्व्वापरावधौ ।
समं मण्डलं शङ्कुमान परिमित व्यासार्द्धम् ।
पूर्व्वोक्तलक्षणं ऋजुत्वादिलक्षणोपेतम् ,
सूच्यग्र. सरलः शङ्कुः पृथुर्मूले धृतस्थिरः ।
द्वादशाङ्गुलमानः स्यात्त्रिवृत्तः प्रविशेद्भुवीति ।

---

१ (*) 'सप्तविंशतिमात्रोऽथ (त्रोश) धनुर्ग्रह इतीरितः' एवमधिकं पाठान्तरं दृश्यते ।

२ (†) 'क्षेत्रमासन योजनमिति' भिन्नपाठोऽस्ति ।

३ (‡) एवं लक्षणमिरीतम्' इत्यन्यः पाठोऽस्ति ।

अत्र संक्षेपेण भूमिमानमुक्तम् । पुस्तकान्तु वास्तुशास्त्रे हेमाद्रौ चास्ति । मार्कण्डेयेन, सूक्ष्मं परमाणुः, भूरजस्त्रसरेणुः, वालाग्रः, लिक्षाः, यूका, यवोऽङ्गुलम्, क्रमादष्टगुणानाहु र्यवानष्ट अतोऽङ्गुलम्' । षडङ्गुलं पदं, द्वादशाङ्गुलै वितस्ति, एतद्द्विगुणो हस्तः स्यात् । द्विवितस्तेन ब्रह्मतीर्थम्, चतुर्हस्तः धनुर्दण्डः, षट्सहस्रेण नाडिका द्विसहस्रं धनुषा क्रोशः, एतच्चतुर्गुणा गव्यूतिः, तद्द्विगुणं योजनम्, इति संक्षेपः ।

४ (§) प्राची साधनरीतिस्तु ज्योतिषे सिद्धान्तग्रन्थे तथैव वास्तुशास्त्रेमय मते, शिल्पशास्त्रादावस्ति ।

## शुल्वसूत्रे, कात्यायनः –१(*)।

समे शङ्कुं निखाय शङ्कुसम्मितया रज्ज्वा मण्डलं परिलिख्य यत्र लेखयोः शङ्क्वग्रच्छाया निपतति तत्र शङ्कुं निहन्ति सा प्राची ।

## अथ वास्तुवलिः ।

### प्रपञ्चसारे,—

शुभकर्म्मणि दीक्षायां मण्डपकरणे गृहादिविधिषु ।
तथाविहित वास्तुवलिः स्याद्रक्षा विघ्नो पशान्ति सम्पदः ॥
तथा वराह संहितायां वलिरुक्तः २(†) ।

### मात्स्ये च—

ततो ब्रह्मादिभिः प्रोक्तो वास्तु मध्येतु यो वलिः ।
आहारो वैश्वदेवान्ते नूनं तव भविष्यति ॥
यज्ञोत्सवादौच वलिस्तवाहारो भविष्यति ।
वास्तुपूजामकुर्व्वाणः नैवाहारो भविष्यति ॥

---

१ (*) शुल्वसूत्रे द्वितीयसंज्ञकी । तृतीय मतं यथा 'तदन्तरं रज्ज्वा अभ्यस्य पाशीकृत्वा शंकोः पाशौ प्रतिमुच्य दक्षिणायम्य मध्येशङ्कुरेवमुत्तरतः सोदीची' । समेति । अत कर्काचार्य्योक्तम् । "इह प्राञ्चमग्निमुद्वर्ति" इति श्रुतेः । तथा—'प्रागु ग्रम' इत्येवमादि दिगायत्तम । ततो दिङ्निरूपणार्थदमाह.—समग्रहणं निम्नोन्नतायहणार्थम् । विषमेहि छाया वैषम्यंस्यात तत दिगस्पष्टा भवति, ( शङ्कुर्थोपरि द्वादशाङ्गुलः । पञ्चाङ्गुलोभूमिखातः, द्व्यङ्गुलःपरीणाहः । अस्यलक्षणंज्योतिषे, —'समतलमस्तकपरिधिः भ्रमसिद्धोदन्तिदन्तजः शङ्कुः । तच्छायातः प्रोक्तं ज्ञानं दिग्देशकालानाम्' । इति ) तत्रशङ्कुं निखाय तत्सम्मितया रज्ज्वामण्डलंपरिलिखेत् । तत मण्डले पूर्वापरयोर्लेखयोः, शङ्कोरग्रच्छायानिपाते उतर्गद्वौशङ्कूल्लिखनेत् । सादिक् प्राची भवति अपरेवक्तं यथा,—'रज्ज्वामण्डलंतत्परिलिख्यकृत्वा लेखयोर्मण्डलपूर्वापरलेखयो यत्रस्थले शङ्कोरग्रच्छायानिपतति पश्चिमरेखायां प्रविशति, पूर्व्वरेखायां निःसरति, तत्रस्थलद्वये द्वौ अन्यौ शङ्कू लिखनेत् । चिह्नद्वयं वा कुर्य्यात तत्र प्राक्शङ्कुःप्राची । पश्चिमशङ्कुः प्रतीची । प्राचीन मर्यादीना, तस्योदयस्थानानांबहुत्वात्, प्रतिदिनभिन्नत्वादनियमेन प्राचीज्ञातुंनशक्या । तस्मात् शङ्कुस्थापनेन प्राचीसाधनमुक्तम् । दक्षिणायनेतु चित्रापर्यन्तमर्कोऽभ्युदेति । मेषतुलासंक्रान्त्यहे प्राच्याग्रज्ञायामुदेति । अतः केवलमर्कात्प्राचीज्ञानं दुर्घटम्' । अथ उदीची साधनमाह—तदन्तरमित्यादिना । 'प्राची प्रतीची मूलान्तस्थितशङ्कोः तौ पाशौ प्रतिमुच्य प्रविष्टद्विगुणीकृतरज्ज्वो मध्यभागंचिह्नं दक्षिणस्यान्दिशि आयम्य आकृष्य, यत्र रज्जुमध्यमायाति तत्र मध्यचिह्नस्थंशङ्कुंनिहन्ति निखनति सा दक्षिणादिक् । एवमुत्तरतोद्विगुणीकृत रज्जुमुत्तरस्यामाकृष्यमध्यभागेशङ्कुंनिहन्ति सा उदीची उत्तर दिक् इति' ।

२ (†) 'सर्व्वदेवगृहादिषु' इति भिन्नःपाठः । अन्तःसत्रे वास्तुशास्त्रेऽस्ति । वराहमिहिरकृतज्योतिषग्रन्थे ।

एवमुक्तस्ततोऽसौ हृष्टः स वास्तु पूज्यते तदा ।
वास्तु यज्ञः समुद्दिष्टस्ततो विघ्न प्रशान्तये ॥
ायतनाद्यधिष्ठानेषु वास्तुविशेषा स्तत् प्रमाणानिचोक्तानि ।

## ज्ञानरत्नावल्याम् :—

चतुःषष्ठिपदं वास्तु देवानां परमन्ततः ।
एकाशीतिपदं वास्तु गृहाणान्तु प्रकीर्त्तितम् ॥
नित्यं शतपदं विद्धि सुस्थिराख्यं सुसिद्धिदम् ।
पथोदुर्गपुराट्टाल नगर ग्राम खेटके ॥
शय्यासन विमानेषु तथा वलि गृहेषुच ।
सिद्धिस्थाने तथा हर्म्म्ये वाप्यादौ परिकल्पयेत् ॥
वापीकूप तड़ागादौ वनेषूपवनेषुच ।
उक्तानुक्तेषु सर्व्वत्र कार्य्यं शतपदं शुभम् ॥
गृहे गृह प्रमाणञ्च वास्तुदेवं प्रकल्पयेत् ।
ग्रामे देशादि संस्थाने वापीकूप चतुष्करम् १(*) ॥
उक्तानुक्तेषु सर्वत्र पञ्चहस्तं प्रकल्पयेत् ।

## प्रपञ्चसारे,—२(†) ।

कृत्वावनि-समतलां चतुरस्र क्लृप्ताम् ,
अष्टाष्ट कोष्ठतपदाञ्च स कोण सूत्राम् ।
तस्यां चतुष्पद समन्वित मध्यकोष्ठे ;
ब्रह्मा तु साधकवरेण समर्च्चनीयः ॥

अत्राष्टाष्ट कोष्टके त्यादिना चतुःषष्ठि कोष्ठकयुतं चतुरस्रं मण्डलं कृत्वा तत्र कोणसूत्रद्वयं दत्वा मध्यम कोष्ठचतुष्टयेतु ब्रह्माऽर्च्चनीय इत्यर्थः ।

---

१ (*) 'चतुर्द्धरं' इति पाठान्तरं दृश्यते ।
२ (†) श्रीभगवत्पादकृत प्रपञ्चसारतन्त्रे इति । तस्य पञ्चम पटले ६—७ श्लोकौ । तत्र दशश्लोकाःसन्ति ।

प्राग्याम्य वारुणोदग्दिक् कोष्ठ चतुष्पदेषु समभि यजेत् ।
आर्य्यकमथ सविवस्वत सञ्ज्ञं, अथ मित्रं महीधरं क्रमशः ॥

कोणद्वयार्द्धकोष्ठेष्वर्च्याः सावित्रसवितृ शक्राह्वाः ।
सेन्द्रजयरुद्रतज्जयसापश्च वत्सकस्तथाऽप्रथाख्याः ॥

अग्रे पार्श्वोत्थपदे द्वन्द्वे शर्व्वं गुहार्य्यं मणौच यजेत् ।
जम्भकपिलिपिच्छाख्यो चरकि-विदार्यौच पूतना प्रोक्ता ॥

अर्द्धपदाद्यन्तासुच चत सृषु दिक्षुक्रमेण वहिरर्च्याः ।
वासव-यमजलेशशशिनाम द्वावष्टौच मन्त्रेण विधिना ॥

ईशानाख्यः सपर्जन्यः जयन्तः शक्रभास्करौ ।
सत्योभृशोऽन्तरिक्षश्च देवताः प्रागुदीरिताः ॥

अग्निः पूषाच वितथो यमश्च गृहरक्षकः ।
गन्धर्वो भृङ्गराजश्च मृगोदक्षदिगाश्रिताः ॥

निर्ऋतिर्दौवारिकश्च सुग्रीवो वरुणस्तथा ।
पुष्पदन्तासुरौ शेषोर(रो)गौ प्रत्यग्दिगाश्रिताः ॥

वायुर्नागश्च मुख्यश्च सोमोभल्लाट एवच ।
अर्गलाख्योदितिस्तद्वत् अदितिः सौम्यदिग्गताः ॥

इतीरितानामपि देवतानां, चित्राणि कृत्वा रजसा पदानि ।
पयोऽन्धसा साधुवलिः प्रदेयः, द्रव्यैश्च वातन्त्रविशेषसिद्धैः ॥

अत्र-तन्त्रविशेषश्च । कपिलपञ्चरात्रादिः । तदवहितैरित्यर्थः । एतच्च सर्व्व-वास्तुपूजा-होम-वलिदानादिकं प्रयोगश्च गृहदान प्रकरणे वक्ष्यते ॥

इति वास्तुनिरूपणम् ॥

—*—

# अत्र मण्डपादि निरूपणम् १(*)।

—*—

## पञ्चरात्रे,—२(†)।

कनीयान्दशहस्तः स्यान्मध्यमो द्वादशोन्मितः।
तथा षोड़शभिर्हस्तै र्मण्डपः स्यादिहोत्तमः ३(‡)॥

## विश्वम्भर वास्तुशास्त्रे,—

दशद्वादश हस्तो या कलाहस्तोऽथवा पुनः।
मण्डपान्तरमुत्सृज्य कर्त्तव्यं मण्डप द्वयम्॥
धाम्नो धामान्तरं त्यक्त्वा धामाग्रे यज्ञमन्तपः॥
अत्र कलाहस्तः—षोड़श हस्तः।
प्रतिष्ठादीपके, मण्डपं प्रक्रम्य—
हस्तात् षोड़शान् कुर्व्वीत द्वादशान् दश एव वा ?।
मध्ये वेदिकया युक्तं चतुरस्रं समन्ततः॥

प्रतिष्ठासारसंग्रहेतु,—षोड़शहस्त मण्डपमुक्त्वाऽभिहितो दश-द्वादशहस्तोद्विद्वि-वृद्धया ततः क्रमादिति। अत्रहस्तौ द्वादश हस्ताविति कनीयांसौ मण्डपावुक्तौ (यातः)। ततःपरं द्विद्विवृद्धयेति दशहस्तश्च मध्यमौ। षोड़शहस्तस्तु साक्षादुक्तः, एवं द्विद्वि-

---

१ (*) 'शुभनक्षत्रादियुते विहिते काले मण्डपम् विदध्यात्। तद् यथा,—
एककलशपक्षे पञ्चहस्तं मण्डपम्। नवकलशपक्षे सप्तहस्तम्।
अष्टोत्तरशतपक्षे नवहस्तम्। सहस्रपक्षे सप्तपञ्चकमितम्॥
पञ्चत्रिंशद्धस्तमानमित्यर्थः। स च षोड़शस्तम्भयुतः। मध्ये चत्वारः प्रान्तेऽवशिष्टाः। मध्या षट्हस्तप्रमाणाः। अन्ये पञ्चहस्तप्रमाणाः। तेषां पञ्चमोऽंशो। भूमौ खातव्यः। तत्तोरणस्तम्भाः सप्तहस्ताः। तदर्द्धाः फलकाः' इत्यादि।

२ (†) विश्वम्भरवास्तुशास्त्रे,—'मण्डपान्तरमुत्सृज्य कर्त्तव्यं मण्डपद्वयम्। धाम्नो धामान्तरं त्यक्त्वा धामाग्रे-यज्ञमण्डपः। दशद्वादशहस्तो वा कलाहस्तोऽथवापुनः। यदा मण्डपद्वयं क्रियते तदा मण्डपपरिमितमन्तरं त्यक्त्वा द्वितीय मण्डपं कुर्य्यात्। यदागे-धामाग्रे मण्डपः क्रियते तदा तद्धामपरिमाणान्तरं त्यक्त्वा परतो मण्डपं कुर्य्यादिति'। कलापरिमितःहस्तः षोड़शहस्त इति। नयमतत्त्वशास्त्रेऽपि मण्डपकरणमस्ति।

३ (‡) इदं श्रीहयपञ्चरात्रे वैष्णवमतशास्त्रे।

वृद्धयेति चोक्तात् षोड़शात्। ततोऽपि द्विद्विहस्त वृद्धया ष्टादशाऽस्तापेक्ष्यातूत्तमम्। इत्युभयरूपं त्वेतत्। एवं संग्रहकार मतेतु—पञ्चविध मण्डपा उक्ताः। लिङ्गपुराणेच, तुलापुरुषमधिकृत्य विंशति हस्तमितमण्डप उक्तः।

विंशहस्त प्रमाणेन मण्डपं कुटमेववा।
अथाष्टादश हस्तेन कलाहस्तेन वा पुनरिति॥

नच दशहस्त—मण्डपे त्र्यंशेन वेद (वेध) व्यासाः। कुण्डकं (पं) च मेखला दशदशाङ्गुलानि व्यासानि, वेधन्तरेच पादपरिमितानीति। वेद्यामाह—

प्राक्पश्चाच्च मिलित्वाष्टौ हस्तव्यासाः। उभय त्रैकैक हस्तमात्रमवशिष्यते। तत्र ऋत्विगादीनामुपवेशनादेः सौकर्य्याभावः। मेखलापञ्चककरणपक्षेतु नतत् सौकर्य्यमिति, नायं पक्षः साधीयानिति वाच्यत्।

एकमेखलकुण्डपक्षे एकमपि विधानम्, पक्षान्तरेच दशहस्त मण्डप-स्योपयोगात्। अत्र चतुरस्र साधनमाह, विश्वकर्म्मा,—

कृत्वा प्राक्सूत्रमर्द्धाङ्कं दक्षिणोत्तर मत्स्योः।
न्यस्य सूत्रं ततः कोणैरङ्कितैश्चतुरस्रकम्॥

## अस्यार्थः—१(*)।

इष्ट प्रमाणं तत् प्राचीसूत्रमास्फाल्य तन्मध्यमं कल्पयित्वा प्राचीसूत्रं, सम्पादिते रेखापूर्व्वोक्ते (र्वान्ते) सूत्रस्यादिते (सम्पादिते) रेखापूर्व्वान्ते सूत्र स्यादिं निधाय रेखा-मध्यमांके किञ्चिदधिकं सूत्रंकृत्वा तत्प्रमाणेन प्राचीसूत्रस्यापर पश्चिमार्द्धे वृत्तार्द्धं कुर्य्यात्।

एवं प्राची सूत्रस्यापरान्ते सूत्रस्यादिं निधाय पूर्व्वप्रमाणेनैव सूत्रेण प्राचीसूत्रस्य-प्रागभावे, पूर्व्वकृतवृत्तार्द्धाभिमुखं परस्परमभेदेन निःसृतामद्वयं वृत्तार्द्धं कुर्य्यात्।

एवं परस्परमन्तरेखाद्वयरूपौ दक्षिणोत्तरमत्स्यौ २(†) सम्पाद्य ताभ्यां मध्याङ्केनच स्पष्टं दक्षिणोत्तरायतं प्राचीसूत्रं प्रमाणमात्रं न्यसेत्।

१ (*) चतुर्वर्गचिन्तामणौतु—'पूर्व्वोक्त रेखापरिमितस्य सूत्रस्यादिं निधाय, मत्स्यसूत्रान्तरं परिभ्रम्य वृत्तं रचयेत्। तस्याएव रेखायामूले निधाय, तत्सूत्रान्तरं परिभ्रम्य वृत्तं रचयेत्। तस्याएव रेखाया अपरप्रान्ते तस्यैव सूत्रस्यादिं निधाय तत्सूत्रान्तं परिभ्राम्य द्वितीयन्तं कुर्य्यात्। एवं वृत्तद्वये कृते दक्षिणोत्तरदिशोर्मत् स्यद्वयं निष्पद्यतेऽथ, मत्स्य द्वये पूर्व्वोक्तरेखा लाञ्छने चैकं सूत्रंनिपात्य दक्षिणोत्तरा यतांरेखांलिखेत्' इत्यादि। यच्च विश्वकर्म्म शिल्पशास्त्रे।

२ (†) 'सूत्रोपरि सूत्रान्तर निपातनात् स्वस्तिक मध्याकृतिः शिल्पशास्त्रेषु मत्स्य इत्युच्यते'। शिल्पशास्त्रेषु मयमतादिषु। इति हेमाद्रौ व्यक्तमस्ति। सूत्र पातने मत्स्याकृतित्वेन मत्स्य इतिव्यपदेशः।

ततः तत्सूत्रार्द्धप्रमाणेन दक्षिणसूत्रान्तात् पूर्व्वसूत्रान्ताच, अग्ने (तत) कोणे मत्स्यरूपं कुर्य्यात्।

एवं नैर्ऋत्यादित्रिकोणत्रये मत्स्यान् सम्पाद्य प्राग्दक्षकोण मत्स्ये मत्स्यद्वयं-स्पृष्टाग्र-सूत्रचतुष्टययोगाच्चतुरस्र सिद्धिरिति।

ईदृश चतुरस्र साधनाशक्तौ याज्ञिक-प्रसिद्धानु (प्र) मानेन वा चतुरस्रं-कुर्यात १(*)।

## यथाह,—ढुंडुकारिकायाम्,—

यावत्प्रमाणा रज्जुःस्या त्तावानेवागमोभवेत्।
आगमार्द्धे भवेच्छङ्कुः शङ्क्वर्द्धेन निरञ्छ(ञ)नम्?॥

## अस्यार्थः—

मण्डपादिव्यासप्रमाणांरज्जुं स्वसमेनागमसंज्ञकेन द्वितीयेन भागेन वर्द्धयेत। तेन द्विगुणप्रमाणाच रज्जुः सम्पद्यते। तामेवोभयतःपा (अंशा) श्वाभ्यां सह तावतो मेवकृत्वा तामष्टधा विभज्य पञ्चमांशांते कर्षणाय (पञ्च) षष्ठांशान्तेच शङ्क्वर्थंच २(†)। चिह्नरूपं कृत्वा मण्डपादेः।

प्राचीसूत्रप्रान्तद्वये शंकुद्वयं निखाय अन्तःपाशौ तयोरामज्य कर्षणचिह्नमाकृष्य शङ्कुद्वयं निहन्यत्। तत ईशानाग्नेयादि-शङ्कुषु प्रादक्षिण्येन रज्जुवेष्टनाद् मण्डपादिषु-चतुरस्रं प्रसादयेत।

## इति मूलागमः।

ततोमण्डपसूत्रन्तु त्रि (निः) गुणं परिकल्पयेत्।
पूर्व्वादिषु क्रमात्तस्य मध्यगर्भंतु (त्रि) वेदिका।
एवं चेदितिकोणेषु तच-प्राग्वन् सुविन्यसेत।

---

१ (*) एवं प्राचीनिरूपणादि प्रसङ्गे प्राचीनसमये यागादिषु ग्रन्थप्रचलत्-व्य-टीका-यत्र कुण्डादि-निरूपणयन्थे पु तथैव हेमाद्र्यादिषु वास्तुविद्या-मयमतादिषु यत्र तत्र मर्म्मास्ति।

२ (†) भविष्ये—'वेदिपादान्तरं त्यक्त्वा कुण्डानि नव पञ्चवा।
वेदास्राण्येव तानिस्युर्वर्तुलान्यथवा क्वचित्'॥
यत्र वेदास्राणि,—चतुरस्राणि ज्ञेयानि।

तान्—मानस्वरूपकान् इति ।

आग्नेयादिक्रमेणैव लोकेशान् दिग्विदिक्षु च ।
इष्टकाभिर्मृदा वापि वेदी (दीः) दर्पणसन्निभा ।
राजहस्तोच्छ्रया कार्य्या विदुषां सिद्धिमिच्छताम् ।

मण्डपसूत्र मितिः । प्राक् (श) परायत्तां दक्षिणोत्तरायत्तां त्रिगुणां त्रिभागामित्यर्थः । तेनच नवभागः मण्डपःसम्पद्यते ।

मध्यभाग इति । मध्यमे नवमेऽशे तन्माना वेदिः कार्य्येत्यर्थः । राजेति—राजा अत्र यजमानः । तद्धस्तोच्छ्रयेत्यर्थः १(*) । पञ्चरात्रे,—

कुर्य्याद्वैष्णवयागेषु चतुर्द्वारांश्च मण्डपान् ।
सारदारुभवांस्तम्भान् दृढान् कुर्य्यादृजून् समान् ॥
मण्डपार्द्धोच्छ्रितान् वेद संख्याश्चूड़ान्वितांस्तथा ।
वलिकामूर्द्धतस्तेषां स्तम्भद्वादशकं पुनः ॥
वाह्ये पीठ प्रमाणेन तत्र सूत्रविभागतः ।
कल्पयेद्विकरे द्वारे चतुरङ्गुलवृद्धितः ।
मध्यमोत्तमयोर्वेदी मण्डपस्यपत्रि भागतः ।
चतुर्थांशोच्छ्रितिःतस्या त्रिसप्तपञ्चतोऽपिवा ॥
नवैकादशहारं (द्वारं) वा इष्टकाभिः प्रकल्पयेत् ।
कनीयान् दशहस्तःस्यान्मध्यमोद्वादशोन्मितः ॥
तथा षोड़शभि र्हस्तैर्मण्डपः स्यादिहोत्तमः ।

वेदसंख्यान्-चतुःसंख्यानिति । चूड़ान्वितान् शिखायुक्तान् ।

वलिकामूर्द्धत—इति । तेषां चतुर्णां स्तम्भानां शिखाभिः प्रोक्तरन्ध्राणि, उभयोरन्ध्रद्वययुक्तानि वलिका संज्ञानि. तिर्य्यक्काष्ठानि स्थापनीयानीत्यर्थः ।

वाह्ये—वेदिकास्तम्भ वाह्य परिधावितियावत् ।

पीठप्रमाणेति—पीठस्यचतुर स्त्रीकृतस्य मण्डपक्षेत्रस्य प्रमाणेन तत्रसूत्र विभागतः मण्डपक्षेत्र विस्तार सूत्रतोऽशेन वहिःपरिधौ द्वादशचिह्नानि तुल्यान्तराणि कृत्वा तत्र द्वादशस्तम्भाःस्वपञ्चमांशेन निरवधेयाः, इति पिण्डितोऽर्थः ।

---

१ (*) यागादिकृत्ये कुण्डमण्डपादौच यजमानहस्तः परिमाणे पुरोहितहस्तोवा ग्राह्यः । पर्वमितमाने-युक्ति कल्पतरुप्रभृतिग्रन्थ परिमाण-विशेषवाचकः पारिभाषिको राजहस्तो लिखितः ।

## उक्तंहि,—

मण्डपप्रमिता रज्जुः पूर्व्वं कार्य्या चतुर्गुणा ।
पश्चात् कार्य्या त्रिभागा सा रज्ज्वग्रेष्वर्कसंख्यया १(*) ॥
तदेवं षोड़शस्तम्भोमण्डपः सम्पद्यते ।
अत्र बाह्यं द्वादशांके चूड़ाः वलिकाश्च त्वनियताः ।

तदनभिधानाद्वा । न्यसेद्द्विकरमित्यादि मध्यमोत्तमयोरिति । चतुरङ्गुल-वृद्धित-इत्यनेन सम्बध्यते । ततश्च कनीयसं मण्डपे दिक्सूत्र प्रमितमेकैकं हस्तं गृहीत्वा द्विहस्ता विस्तृता । तानिच द्वाराणि कार्य्याणि ।

मध्यमे चतुराङ्गुलाधिक-द्विकराणि कार्य्याणि । अतश्च-द्वादशहस्तमण्डपस्योभय-रूपत्वाद् द्वाराणि चतुरङ्गुलाधिक द्विहस्तानि । द्विहस्तमात्राणि वा कार्य्याणि । उत्तमे-त्वष्टाङ्गुलाधिक द्विकराणि कार्य्याणि २(†) ।

त्रिभागतः—इति पूर्व्वोक्तन्यायेन मध्यम त्रिभागस्य नवमांशरूपः [illegible] नवम्यांभा-वेदिरिति शास्त्रतःपर्य्यवस्यति । त्रि-सप्त-पञ्चत-इत्यादि (स्व) विस्तारस्य तृतीयेन पञ्चमेन नवमेनैकादशेनवा भागेन तस्याश्च स्यादुच्छ्रिति रित्यर्थः ।

द्वि(द्वा)यत—इति द्वारोभागः । क्रियाविशेषणं बाह्यस्तम्भपरिमाणमुक्तम्, शारदातिलके,—३(‡)

षोड़शस्तम्भ संयुक्तं चत्वारस्तेषु मध्यमाः (गाः) ।
अष्टहस्त समुच्छ्रायाः संस्थाप्याद्वादशाभितः ॥
पञ्चहस्तप्रमाणास्ते विच्छिद्राश्चजवः शुभाः ४(०) ।
तत् पञ्चमांशं निखनेद् मेदिन्यां तन्त्रवित्तमः ॥

---

१ (*) 'मद्गरि, इत्यंभिन्नपाठोऽस्ति ।

२ (†) 'मध्य बाह्य,—मिति । इति मन्तर्विन्यस्य स्तम्भ चतुष्टयापेक्षया बाह्यत्वम् । तथाहि, पूर्व्वं मध्यस्तम्भचतुष्टयं विन्यस्य ततो बाह्यपरिधौ स्तम्भद्वादशकं विन्यसेत् । एवञ्च षोड़शस्तम्भो मण्डपः सम्पद्यते । सूत्रविभागत इति, प्राक्पश्चिमायतस्य दक्षिणोत्तरायतस्य वा तन्तुकस्य तृतीयांशपरिमितमन्तरालं विहाय स्तम्भा निवेशनीया इत्यर्थः । कन्यसेद्विकरमिति, कन्यसेमण्डपे द्विहस्तविस्तारं द्वारं कार्य्यम् । मध्यमोत्तमयोस्तु चतुरङ्गुलाभिवृद्ध्या विधेयमिति, हेमाद्रौ ।

३ (‡) तृतीयपटले १४८-१६०पृष्ठे ।

४ (०) 'पञ्चहस्तेति—कन्यसे मण्डपे पञ्चहस्ताः । मध्यमे षड् हस्ताः ।
उत्तमे सप्तहस्ताः द्वारशाखाविधेयाः, हेमाद्रि मुख्यः प्रोक्तः ।'
„ मयमतादि वास्तुशास्त्रे, मण्डपादीनां विजयादि-पारिभाषिकी संज्ञा ।

(*) क्षतवः शुभाः इति पाठान्तरमस्ति ।

नारिकेल दलवंशै श्छादयेत्तत् समन्ततः ।
द्वारेषु तोरणानिस्युः क्रमात् क्षीर महीरुहाम् ॥
स्तम्भोच्छ्रायः स्मृतस्तेषां सप्तहस्तैः पृथक् पृथक् ।
दशाङ्गुल प्रमाणेन तत् परिणाह ईरितः ॥
तिर्य्यकफलकमानं स्यात् स्तम्भाना मर्द्ध मानतः ।
शूलानि कल्पयेन्मध्ये तोरणे हस्त मानतः ॥
दिक्षु ध्वजान् निवघ्नीयाल्लोकपाल समप्रभान् ।
वितानदर्भमालाद्यैरलङ्कुर्वीत मण्डपम् ॥
तत्त्रिभाग मिते क्षेत्रेऽरत्नि मात्रसमन्वितान् ।
चतुरस्रान्ततो वेदीं मण्डलाय प्रकल्पयेत् ॥

षोड़शस्तम्भ संयुक्तमिति—मण्डपस्य विशेषणम् । सर्व्वेषां स्तम्भानां स्वपञ्चमांशेन भूमौ निखननम् ।

पञ्चमांशं न्यसेद्भूमौ सर्व्वसाधारणोविधिरिति वास्तुशास्त्रात् ।

तत्रैव, करैः षड्भिस्तु संच्छा(स्था)द्या विजयाद्या स्तु मण्डपाः इति । तोरणानि क्षीरवृक्षाणि, मात्स्ये,—

द्वारेषु कार्य्याणिच तोरणानि,
चत्वार्य्यपि क्षीरवनष्पतीनामिति ।

विशेष उक्तोवास्तु शास्त्रे,—

अश्वत्थोडुम्बर प्लक्ष वटशाखाकृतानितु ।
मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत् ॥
पञ्चहस्त प्रमाणा स्ते विस्तारेण द्विहस्तकाः १(*) ।
षड़ङ्गुलाभिवृद्धास्तु सप्तहस्ता यथोत्तमे ॥
मस्तके द्वादशां शेन शङ्ख चक्र गदाम्बुजम् ।
प्रागादि क्रमयोगेण न्यसेदेषां सुदारुजम् ।
पञ्चमांशं न्यसेद्भूमौ सर्व्वसाधारणोविधिः ॥

---

१ (*) मन्त्रमुक्तावल्याम्:—तोरणानिच तैर्व्वैव द्वारेषु स्थापयेद्बुधः' इति 'दिग्द्वाराणि च विदध्यात्पञ्चमांशतः' ।
क्रियासारेऽपि—'दिग्द्वाराणिमध्यतः' ।

अत्र द्वाराणि,—तोरणान्येवात्र द्वारकारणत्वाद्द्वारशब्देनोच्यन्ते । नतु मण्डपस्य द्वाराणि । तेषां मध्यमोत्तममण्डपयो स्तोरणापेक्षयाऽल्प परिमाण स्योक्तत्वात् १(*) । मात्स्ये तोरणत्वेन पृथगुपदेशात् । खातानाञ्च कनीयसि मण्डपे पञ्चहस्तत्वाभिधानात् । उत्तमेच सप्तहस्तत्वाभिधानात् । मध्यमे षड् हस्ता भवन्तीत्यर्थ-सिद्धम् ।

अतएव कनीयसादि मण्डपकरणानि प्रक्रम्य त्रिकाण्डे पञ्चषट् सप्तहस्तानीत्युक्तम् । षडङ्गुलाभिवृद्ध्यास्त्विति,—कनीयसि मण्डपे द्विहस्तान्तराला, मध्यमे-षड्ङ्गुलाधिकद्विहस्तान्तराला, उत्तमे द्वादशाङ्गुलाधिकद्विहस्तान्तराला स्तोरणाः ( तोरणशाखाः ) निखेया इत्यर्थः २(*) ।

मस्तक इति,—तिर्य्यक् फलकस्य मस्तके द्वादशांशेन प्रथमादि मण्डपेषु यथा क्रमं चतुरङ्गुलपञ्चाङ्गुल-परिमितानि शङ्ख चक्र गदाम्बुजानि कृत्वा निवेश्यानीत्यर्थः, एतेषामेव विशेषणं सारदारुजमिति ।

यद् दारु मयं तोरणं तज्जानिच चिह्नानिवा । दारुमये तत्र शङ्खादिकं कार्य्यमित्यर्थः । शैवयागेतु शङ्ख चक्रादिस्थाने परिमाणान्तरयुक्त त्रिशूलादिकमेव कार्य्यमित्यर्थः ।

## पिङ्गलागमेच,—

शूलेन चिह्निताः कार्य्या द्वार शाखास्तु मस्तके ।
शूले नरा(वा)ङ्गुलं दैर्घ्यं तुरीयांशेन विस्तृतिः ॥
ऋजुर्वै मध्यशृङ्गं स्यात् किञ्चिद्वक्रं(क्रे) च पक्षयोः ।
प्रथमं तत् समाख्यातं द्व्यङ्गुलं रोपयेत्ततः ।
शेषांशा द्व्यङ्गुला वृद्धिर्विंशश्चाङ्गुलवृद्धितः ॥

१ (*) सिद्धान्तशेखरे—'न्यग्रोधोत्थं तोरणं पूर्व्वं याम्यं त्वौदुम्बरं मतम् । पश्चिमेऽश्वत्थसम्भूत मुत्तरे प्लक्षतोरणम् । पूर्व्वं वा प्लक्षसम्भूतं न्यग्रोधश्चोत्तरे मतः' ।
तत्रैव—प्लक्षोदुम्बर बोधिद्रुवटाः पूर्व्वादितः क्रमात् ।
पूर्व्वादितः विधातव्या यद्वाप्यन्तविपर्य्ययः ॥
सन्नाभा इकसंवेषां सर्व्वाशासु निवेशयेत् ।'
चतुर्दिक्षु वेदादि-मन्त्रचतुष्टयेन तोरणानि कुर्य्यात् ।
परिमाणविषये गृह्यसूत्रे कात्यायनेनोक्तम्—'बौधिन्यादर्शात् परिमाणम्' ।
अन्यत्रोक्तं, 'प्राच्यमौदुम्बरं चान्य वटोत्थं तोरणं न्यसेत्' ।
वास्तुशास्त्रे च,—'अश्वत्थोदुम्बरप्लक्ष वटशाखा कृतानि च ।
मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत्' ।
२ (†) 'तोरणशाखा निर्देश्याः' इति च पाठान्तरम् । 'तोरणोऽस्त्री बहिर्द्वारम्' इति कोषकाराः ।

तुरीयांशेन शूलदैर्घ्यचतुर्थांशेन पादद्वयाङ्गुलावृद्धिः। पक्षयोः पार्श्वकील्योः। प्रथमं कनीयो मण्डपस्य त्रिशूलं द्व्यङ्गुलं रोपयेदिति। शूलस्य मूलभागीयाङ्गुलद्वयपट्टिकायां निवेशयेदित्यर्थः।

शेषाणां मध्यमोत्तममानानां १(*) तोरणशूलस्यच द्वय(त्र्य)ङ्गुलावृद्धिः। मध्यम एकादशाङ्गुलदीर्घं उत्तमे त्रयोदशायलदीर्घं शूलमित्यर्थः। वेशस्याङ्गुलवृद्धित इति। मध्यमे शूलभागीयाङ्गुलत्रयं पट्टिकायां निवेश्यम्। उत्तमेत्वङ्गुलचतुष्टय मित्यर्थः। तोरण विषये विषयान्तरमुक्तं सिद्धान्तशेखरे,—

लक्षणं तोरणानां च वक्ष्ये संक्षेपतः क्रमात्।
न्यग्रोधतोरणं पूर्वे याम्येत्वौदुम्बरं मतम्॥
पश्चिमे ऽश्वत्थ सम्भूतमुत्तरे प्लक्ष तोरणम्।
पूर्व्वेवा प्लक्षसम्भूतं न्यग्रोधश्चोत्तरे मतम् २(†)॥
एकमेषामलाभे स्यात्त वभावे शमीद्रुमः।
एवं खदिर शालाश्च शालीयाः तोरणे स्मृता इति॥

## तोरणस्थापने मन्त्रा उक्ताः, मूलागमे,—

मण्डपेऽग्निमीले'ति विन्यसेत् पूर्व्वतोरणम्।
'इषेत्वोर्ज्जे'ति मन्त्रेण दक्षिणेच निवेशयेत्॥
'अग्न आयाहि' मन्त्रेण पश्चिमे विनिविशयेत्।
'शन्नोदेवी'ति मन्त्रेण न्यसेदुत्तरतोरणमिति॥

## मण्डपे पताका उक्ताः, मात्स्येः—

लोकेशवर्णाः पताका मध्ये ध्वजः किङ्किनिकायुतः ३(‡) स्यादिति। सुत्र संग्रहेऽपि,—

मण्डपे पताका उक्ताः, मात्स्येः—

---

१ (*) 'मध्यमप्रोथमानानाम्' इति भिन्नः पाठोऽस्ति।

२ (†) 'मण्डपं प्रति पताकास्तु प्रोक्ताः शास्त्रार्थ—कोविदैः।
सप्तहस्ताः पताकास्तु सप्तमांशेन विस्तृताः॥
लोकपालानु वर्णेन बलभोतु हिमप्रभा' इति संग्रहे, चिन्तामणौच।

३ (‡) 'पञ्चहस्ताध्वजा कार्य्या वैपुल्येन द्विहस्तका।
सप्तहस्ता;पताकास्तु: विंशत्यङ्गुलविस्तृता:॥
सिन्दुराः कर्व्वुरा धूम्रा धूसरा मेघसन्निभाः।
हरिताः पाण्डुवर्णाश्च शुभ्राः पूर्व्वादितः क्रमात्।
एवं वर्णाः शुभाः कार्य्याः पताकाः पापनाशन।, ॥ इति मात्स्ये।

सप्तहस्ताः पताकाः स्युः सप्तमांशेन विस्तृताः।
लोकपालानुवर्णेन नवमीतु हिमप्रभाः॥
पीतरक्तादि वर्णाश्च पञ्चहस्ताः ध्वजाः स्मृताः।
पञ्चहस्ताः पताकाः स्युः सप्तमांशेन ता मताः॥
द्विपञ्चहस्तैर्दण्डैश्च वंशजैः संयुतास्तथेति।
अत्र द्विपञ्च हस्तैर्दशहस्तैरित्यर्थः।

## लोक पालानां वर्णा उक्ताः स्मृतौ—

इन्द्रः पीतो यमः श्यामोवरुणः स्फटिकः प्रभः।
कुवेरश्च सुवर्णाभो ह्यग्निश्च स्वर्णरूपधृक्॥
तथैव निऋतिः श्यामो वायुःकम्रः प्रशस्यते १(*)।
ईशानस्तु भवेद्रक्तः एवं ध्यायेत् क्रमादिमानिति॥
कचित्त्वग्निः रक्तवर्ण इत्युक्तम्।

## गारुड़ेतु पताकानां वर्णान्तरमुक्तम्।

## यथा—

पञ्चहस्ताःध्वजाः कार्य्या वैपुल्येन द्विहस्तकाः।
सप्तहस्ताः पताकाः स्युर्विंशत्यङ्गुल विस्तृताः॥
दशहस्ताः पताकानां दण्डाः पञ्चाश द्वेशिताः।
सिन्दुरा कर्वुरा धूम्रा धूसरा मेघ सन्निभाः॥
हरिताः पाण्डुवर्णाश्च शुभ्राः पूर्व्वादितः क्रमात्।
एवं वर्णाः शुभाः कार्य्याः पताकाः पाकशासन इति॥

## मण्डपे कुम्भस्थापन मुक्तम्, मात्स्ये,—

द्वारेषु कुम्भद्वयमत्रकार्य्यं, स्रग्गन्धधूम्राम्बररत्न युक्तम्।

## मूलागमेच,—

गन्धपुष्पाक्षतो पेतान् कुम्भां स्तेषु निवेशयेत्॥
ध्रुवं धरं वाक्पतिञ्च विघ्नेशं तेषु पूजयेत्।
मण्डपस्यतु कोणेषु कलशेषु क्रमादमी॥

---

१ (*) 'वायुः श्यामः ( धूम्रः ) प्रशस्यते, इति विभिन्नःपाठः।
'पञ्च दशैर्मिताः' इति पाठान्तरम्।

अमृतोदुर्जयश्चैव सिद्धार्थो मङ्गलस्तथा ।
पूज्या द्वारस्थ कुम्भेषु शक्राद्यास्तन्मनूत्तमैरिति ॥
तन्मनूत्तमै,—स्तेषां विहित मन्त्रैः ॥

## अथ कुण्डानि १(*) ।

### भविष्योत्तरे,—

वेदिपादान्तरं त्यक्त्वा कुण्डानि नवपञ्च वा ।
वेदास्त्राण्येव तानि स्यु र्वर्तुलान्यथवा क्वचित् ॥
अत्र वेदास्राणि, चतुरस्त्राणि ।

### आम्नाय रहस्येतु,—

कुण्डानि चतुरस्राणि वृत्तनाला कृतीनि वा ।
नव पञ्चाथचैकं वा कर्त्तव्यं लक्षणान्वितम् ॥
नव कुण्डविधानेतु दिक्षु कुण्डाष्टके स्थिते ।
नवमं कारयेत् कुण्डं पूर्वेशान दिगन्तरे ॥
विधाने पञ्चकुण्डानां ईशाने नवमं भवेत् २(†) ।

### ज्ञानरत्नावल्याम्,—

दिक्षु वेदास्रवृत्तानि पञ्चमंत्वीशगोचरे ।

### नारदीय-मात्स्ययोः—

यत्रोपदिश्यते कुण्डचतुष्कं तत्र कर्म्मणि ।
वेदास्रमर्द्धचन्द्रञ्च वृत्तं पद्मनिभन्तथा ॥

---

१ (*) नारदायां कुण्डनाम-संख्याश्चोक्ता:—'चतुरस्रंयोनिमर्द्ध चन्द्रत्र्यस्रंसुवर्त्तुलम् । षडस्रं-पङ्कजाकारमष्टास्रं तानि नामत: । आचार्य्यकुण्ड'मध्येस्याद्गौरीपतिमहेन्द्रयो:' ॥ अत्र चतुर स्रादित: अष्टाष्टास्राणि नवकुण्डानि भवन्ति, तेषां लक्षणनिर्म्माणादिकं क्रमश: सम्यक् तत्रोक्तम् ।
सिद्धान्तशेखरे,—'पुरन्दरेशयोर्मध्ये वृत्तं वा चतुरस्रकम् ।
तदाचार्य्यस्य निर्द्दिष्टं कुण्ड'मेयं शिवोदितम्' ।
'नवकुण्डविधानेतु दिक्षु कुण्डाष्टकस्थिते' । इत्याम्नायरहस्ये ।
'मात्राङ्गुल—मात्राङ्गुलदैर्घ्यस्थाङ्गुलीतु मध्ये कुण्डमानेतु—
मात्राङ्गुलेन कर्त्तव्यानि कुण्डानि । तथाच, त्रैलोक्यसारे—
'मात्राङ्गुलैर्नवकुण्डं कर्त्तव्यं याज्ञिकै: सदा' । इति
'मात्राङ्गुलेन मानेन मेखला-कण्ठ-नाभय: ।
कर्त्तव्या:कुण्ड योनिश्च इत्यादि ।
२ (†) 'पञ्चमंभवेदिति' पाठान्तरमस्ति ।

कुर्य्यात् कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः।
कुण्डवेद्यन्तरं चैव सपादकर सम्मितम्॥
पीठवद्धन्तु यत्कुण्डं सुप्रमाणं सुगर्त्तकम्।

## प्रतिष्ठादीपके,—

वेदि-भित्तिं परित्यज्य त्रयोदशभिरङ्गुलैः।
हस्तमात्राणि कुण्डानि चतुरस्राणि सर्व्वतः॥
समेखलानि कुर्व्वीत योनिवक्त्र युतान्यपि। इति

अत्र च त्रयोदशाङ्गुलान्तरत्वस्य सपादहस्त व्यवधानस्यच, मण्डपाल्प महद्विस्तारापेक्षो व्यवस्थितो विकल्पः। सर्व्वतः अष्टासु दिक्षु तत्तद्दिग्भेदेन कुण्डाकृतिभेदः। फलविशेषेच भेदउक्तः।

## कामिकेतु,—१(*)

ऐन्द्र्यां स्तम्भे चतुष्कोणे अग्नौ भोगे भगाकृतिः।
चन्द्रार्द्धं मारणे याम्ये नैरृते द्वित्रिकोणकम्॥
वारुण्यां शान्तिके वृत्तं षट्सु उच्चाटनेऽनिले।
उदीच्यां पौष्णिके पद्मं रौद्र्यामष्टास्रं मुक्तिदम् २(†)॥

दिग्भेदेन कुण्डाकृति भेद उक्तः। सिद्धान्त शेखरेच ३(‡) नव कुण्डक्रमोत्तम-इति वर्णभेदेनापि कुण्डभेद उक्तः।

## शारदातिलके च,—

विप्राणां चतुरस्रंस्यात् राज्ञां वर्त्तुल मिष्यते।
वैश्यानामर्द्ध चन्द्राभं शूद्राणां त्र्यस्रमीरितम्॥
चतुरस्रन्तु सर्व्वेषां केचिदिच्छन्ति तान्त्रिकाः। इति।

सर्व्वेषु चैतेषु कुण्डेषु होमसंख्यानुसारेण हस्तादिमानं (मात्रं) क्षेत्र फलं कल्पनीयम्।

---

१ (*) 'तत्तद्दिक्षु तत्तत्फलार्थं कुर्य्योस्मि' कामिकागमं वक्ति'।
२ (†) अत्र 'षट्सास्विकोणक' मिति पाठान्तरःमस्ति।
३ (‡) 'सिद्धान्तः शेखर' इति भिन्नः पाठोऽस्ति।

मुष्टिमात्रं शताद्धेंतु शतेचारत्नि मात्रिकम् ।
सहस्रेत्वथ होतव्ये कुर्य्यात् कुण्डं करात्मकम् ॥
द्विहस्तमयुते तच्च लक्षहोमे चतुः करम् ।
अष्टहस्तात्मकं कुण्डं कोटिहोमेषु नाधिकम् ॥
अत्र मुष्टिमानमिति—बद्धमुष्टिहस्तमात्र मित्यर्थः ।

## सिद्धान्त शेखरे,—

शतार्द्धे मुष्टिमात्रं स्यात् शते चारत्निमात्रकं ।
हस्त मात्रं सहस्रेस्याद्द्विहस्तं चायते मतम् ॥
लक्षार्द्धे त्रिकरं कुण्डं लक्षहोमे चतुष्करम् ।
कुण्डं पञ्चकरं प्रोक्तं दशलक्षा वधि क्रमात् ॥
षड्हस्तं लक्षविंशतेः कोट्यर्द्धे सप्तहस्तकम् ।
कोटिहोमे त्वष्टहस्तं कुण्डं प्रोक्तं तदूर्द्धतः ॥

## यत्तु शारदायिलके,—

एक-हस्तमितं कुण्डं एकलक्षे विधीयते ।
लक्षाणां दशके यावत्तावद्धस्तेन वर्द्धयेत् ॥
दशहस्तमितं कुण्डं कोटिहो मेऽपि शस्यत इति ।
सर्व्वसिद्धिकरं कुण्डं चतुर स्रमुदाहृतम् १(†) ।

---

१ (०) 'लक्षविधीयते, इति भिन्नः पाठः ।' सिद्धान्तशेखरेच,—
'लक्षार्द्धे त्रिकरं कुण्डं लक्षहोमे चतुष्करम् ।
कुण्डंपञ्चकरं प्रोक्तं दशलक्षाहुतौ क्रमात् ॥
षड्हस्तं लक्षविंशत्यां कोट्यर्द्धे सप्तहस्तकम् ।
मतान्तरेतु—'त्रिविहस्तं लक्षहोमेद्विहस्तम्, लक्षद्वये त्रिहस्तं त्रिलक्षे ।
" होमे कुण्डं वेदलक्षेऽब्धिहस्तम् ; प्राहुर्वीरा पञ्चकं पञ्चलक्षे ॥
रसहस्तं रसलक्षे सप्तकरं सप्तलक्षे स्यात् ।
वसुहस्तं वसुलक्षे नवलक्षे नवकरं कुण्डम् ।
दशलक्षे दशहस्तं दशकरमेवेह कोटिहोमेऽपि ॥
दशहस्तादधिकं कुण्डं परमपि नहीतवीऽसुखिन् ॥

## अन्यत्तु स्कान्दे,—

कोटिहोमे चतुर्हस्तं चतुरस्रं समन्ततः ।
योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलमिति ॥

यदेभिरुक्तं तल्लक्षादिहोमे द्व्येकहस्तादिकुण्ड विधानम् । कोटिहोमेच दशलक्षादि-महाकुण्डविधानञ्च, यथा यथं घृतादि शीघ्रदाहिद्रव्ये विषये विधानम् ।

चिरदाहि व्रीह्यादिस्थले ( स्थूल ) द्रव्यविषयञ्च द्रष्टव्यम् । एतेषां च हस्ता-( चतुरस्रा )दि कुण्डानां मध्ये चतुरस्रकुण्डे समचतुरस्रक्षेत्रनिर्माण प्रकारो मण्डप-निर्माणे प्रागुक्त इति ।

वेदांशः—चतुर्थांशः । योन्यादि कुण्डे प्रकृति भूतपक्षे ( इष्ट )इष्ट प्रमाणस्य समचतुरस्रस्य मध्यमे प्राचीरेखास्वपञ्चमांशेन पुरस्ताद्वर्द्धयेत् । वेदांशमानतः कोण-सूत्रे विशेषः ।

तेन चतुरस्रक्षेत्र-कोणसूत्र-नैर्ऋत्यदेशस्थ-चतुर्थांशावि देशे लाञ्छयित्वा तल्लाञ्छने कोण सूत्रं चतु(पञ्चमां)र्थांशपरिमितस्य सूत्रस्य दक्षिणरेखामध्यात् पश्चम-रेखामध्यं यावन्निधाय तत् सूत्रकोटीतरेण भ्रमणाद्वहिर्वृत्तार्द्धं न्यसेत् ।

एवमेव पश्चिमरेखामध्यादुत्तर रेखामध्यं यावद् वृत्तार्द्धं रचयेत् । ततोऽक्षीण-रेखामध्यात्तदुत्तररेखामध्याच्च । सूत्रद्वयं वृत्तार्द्धद्वयाग्रपृष्टं भवत् पञ्चमांश-प्राचीरेखामं-यावद् ( द्विति ) पातयेत् । तेन रेखाद्वयकरणादश्वत्थपत्राभमाग्नेय्यां दिशि योनिकुण्डं कुर्य्यादित्यर्थः ।

## इदमेव स्पष्टीकृतं शारदातिलके,—
## (तृतीयपटले) ।

चतुरस्रीकृतं क्षेत्रं पञ्चधा विभजेत् सुधीः ।
न्यसेत् पुरस्तादेकांशं कोणार्द्धार्द्ध प्रमाणतः ॥
भ्रामयेत् कोणमानेन तथान्यदपि मन्त्रवित् ।
सूत्रयुग्मं ततोदद्यात् कुण्डं योनिनिभं भवेदिति ॥

## इदन्तु उदगग्रं कर्त्तव्यम्। सिद्धान्तशेखरेच,—१(*)

## (योनिकुण्डम्)

योन्याख्यमुच्यते कुण्डमाग्नेय्यामुत्तरामुखमिति ।
उदगग्रत्वञ्च—उदीच्यां मध्यरेखायाः ।
पञ्चमांश वृद्धयासादनीयम् ।
अर्द्धचन्द्र कुण्डनिर्म्माणमुक्तम् , कामिकागमे—

## अर्द्धचन्द्रकुण्डं, यथा—

चतुरस्रे ग्रहैर्भक्ते त्वाद्यं शौचतदर्द्धकौ ।
मध्ये प्राप्तांशमानेन कुण्डं खण्डेन्दुवद् भ्रमाद् इति ॥

## तदेवहि शारदायाम्,—

चतुरस्रीकृतं क्षेत्रं दशधा विभजेत् पुनः ।
एक मेकन्त्यजेदंशमध ऊर्द्ध्वञ्च तन्त्रवित् ॥
ज्यासूत्रं पातयेदग्रे तन्मानाद् भ्रमयेत्ततः ।
अर्द्धचन्द्र मिदं कुण्डं रमणीयमिदम्भवेत ॥

इष्टप्रमाण समचतुर स्रक्षेत्रे (ऽस्य) मध्यमां प्राचीरेखां नवधा विभज्य प्रथमान्तिमौ भागौ परित्यज्य भागसप्तकपरिमित-रेखाप्रागग्र(प्र) दक्षिणोत्तरायतं तिर्य्यक्प्राक्सूत्रम् पातयित्वा भागसप्तके परिमित सूत्रस्यादिमध्यरेखे प्रागग्रे निधाय

---

१ (*) योनिकुण्डमाह, कादिमते,—तन्मध्यपञ्चमांशेन विकाग्रसप्तसूत्रकम् । पूर्व्वतः पश्चिमइन्दु कोष्ठयोर्मध्यदेशतः । विकाग्रितसप्तसूत्रादधिसूत्रयं विधेत् ।
योनिकुण्डमिदंभद्रे प्रोक्तं शास्त्र विदाम्वरैः ॥
तथा कामिकेऽपि, 'पञ्चमांशंपुरोन्यस्य मध्येवेदांशमानतः । भ्रमादश्वत्थपत्राभं कुण्डमाग्नेयमीरितम् ॥ अश्वत्थपत्राभं योनिकुण्डमित्यर्थः ।

२ (।) अर्द्धचन्द्रकुण्डमाह, कामिकागमे,—'चतुरस्रे ग्रहैर्भक्ते त्यक्त्वाद्यन्तौ तदंशकौ । मध्यसप्तांशमानेन कुण्डं खण्डेन्दुवद भ्रमात्' ॥ 'ज्यासूत्र मध्यसूत्रसन्निपाते सूत्रादिंसप्तांशोर्द्धभागे यच्छिन्नं कृत्वं ततोज्यासूत्रान्तंभ्रामयेत् । तदर्द्धचन्द्रनिभं उत्तराभिमुखं कुण्डंभवेत्' । तन्त्रान्तरेतु, 'चतुष्कोणचेत् दत्वारभ्द—भ्रमार्द्धं त मानादपि प्रविदलं कुण्डमितितु' । अत्र प्रविदलं अर्द्धचन्द्रकुण्डं ज्ञेयम् ।

